causing of this [Flavour] to take place, through joy or sorrow or other things."

*b.* Now he states the divisions of 'Flavour.'

TEXT.

The Flavours enumerated.

No. 209. The 'Erotic' (*s'ringára*), the 'Comic' (*hásya*), the 'Pathetic' (*karuṇa*), the 'Terrible' (*raudra*), the 'Heroic' (*víra*), the 'Fearful' (*bhayánaka*), the 'Disgustful' (*bíbhatsa*), these eight are 'Flavours;' and so is the 'Quietistic' (*s'ánta*) held to be [by some].

COMMENTARY.

*a.* Of these, the 'Erotic' [is first to be discussed].

TEXT.

The Erotic described.

No. 210. By *s'ringa* [—literally a 'horn'—which sprouts from the head of a bull as a plant does from the earth—] is meant the budding of love; and by the word *s'ringára* [—from *s'ringam-árayati* 'he causes the horn to come'—] is meant that 'Flavour,' generally most manifest in the noblest natures, which is the cause of the coming on thereof. In this case let the substantial ingredients [§ 63] be heroines,—excluding another's wife, and a courtezan if not *honestly* enamoured [§ 111], and heroes, who are honourable men, &c. The moon, sandalwood ointment, the hum of bees, &c., are held to be 'enhancers' [§ 160]. Motions of the eyebrows, and side-glances, &c., are found as its symptoms; and its 'accessories' may be any [§ 169] except 'Sternness,' 'Death,' 'Indolence,' and 'Disgust.' Here the 'permanent' condition [§ 206] is 'Love;'—and [—according to the fancy of the mythologists] it is black-coloured, and its deity is Vishṇu [—who, in his incarnation as the amorous Kṛishṇa, was remarkable for the darkness of his colour].

COMMENTARY.

*a.* For an example—[we have a case of the 'Erotic' in the verses quoted under § 3. *b.*, beginning]—

"Perceiving that the house was empty," &c.

*b.* Here a husband of the just-mentioned description, and a girl of the just-mentioned description, are the two 'substantial excitants' [§ 63]; the empty house is an enhancing 'excitant,' [§ 160]; the kissing is an 'ensuant' [§ 32]; the bashfulness and the mirth are 'accessories' [§ 194 and 203];—the condition of love, developed by all

these in a man of taste, assumes the nature of [what we call] the 'Erotic' [Flavour].

*c.* He mentions the divisions of this ['Erotic' flavour].

TEXT.

The Erotic subdivided.

No. 211. Now, it is held to be of two kinds, viz., 'separation' and 'union.'

COMMENTARY.

*a.* Of these two [—he describes the former].

TEXT.

Love in separation.

No. 212. But where excessive love does not attain the beloved object, this is 'separation.'

COMMENTARY.

*a.* 'The beloved object'—i. e. the hero or the heroine.

TEXT.

This subdivided.

No. 213. And let this [love in separation] be of four kinds,—consisting of (1) 'affection arising before the parties meet' (*púrva-rága*), (2) 'indignation' (*mána*), (3) 'the being abroad' (*pravása*), and (4) the 'sorrow' (*karuṇa*) [of one who has no hope of a re-union which yet is destined to take place].

COMMENTARY.

*a.* Among these [four]—

TEXT.

Love between persons yet strangers to each other.

No. 214. What is called 'affection arising before the parties meet' [—i. e. while the parties are strangers to one another—], is the peculiar condition which belongs, before they have attained their wishes, to two persons mutually enamoured through having heard of or seen one another. And here the *hearing* may be from the mouth of a messenger, or a bard, or a female friend; and the *seeing* may be by magic [—as when Cornelius Agrippa, with his mirror, showed to Surrey the lady Geraldine—], or in a picture, or face to face, or in a dream. In such a case the following conditions are the conditions of love, viz., longing, thoughtfulness. reminiscence, the mentioning the qualities [of the loved one], anxiety, and discourse where the person addressed is not, confusion of mind, sickness, stupefaction, and death. By 'longing' we mean wishing; 'thoughtfulness' means the thinking about the means of attainment, &c.; and 'confusion of mind' means the not distinguishing

# साहित्यदर्पणे प्रथमपरिच्छेदः ॥

ॐ नमो गणेशाय ॥

अवतरणिका ॥

ग्रन्थारम्भे निर्व्विघ्नेन प्रारिप्सितपरिसमाप्तिकामो वाङ्मयाधिकृततया वाग्देवतायाः साम्मुख्यमाधत्ते ॥

मङ्गलाचरणं ॥

(१) शरदिन्दुसुन्दररुचिश्चेतसि सा मे गिरां देवी ।
अपहृत्य तमःसन्ततमर्थानखिलान् प्रकाशयतु ॥

अस्य ग्रन्थस्य काव्याङ्गतया काव्यफलैरेव फलवत्त्वमिति ॥

काव्यफलान्याह ।

(२) चतुर्व्वर्गफलप्राप्तिः सुखादल्पधियामपि ।
काव्यादेव यतस्तेन तत्स्वरूपं निरूप्यते ॥

चतुर्व्वर्गफलप्राप्तिर्हि काव्यतो रामादिवत् प्रवर्त्तितव्यं न रावणादिवदित्यादिकृत्याकृत्यप्रवृत्तिनिवृत्त्युपदेशद्वारेण सुप्रतीतैव । उक्तञ्च ।

"धर्म्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च ।
करोति कीर्त्तिं प्रीतिञ्च साधुकाव्यनिषेवणमिति" ।

किञ्च । काव्याद्धर्म्मप्राप्तिर्भगवन्नारायणचरणारविन्दस्तवादिना । एकः शब्दः सुप्रयुक्तः सम्यग्ज्ञातः स्वर्गे लोके च काम-

धुग् भवति इत्यादिवेदवाक्येभ्यश्च सुप्रसिद्धैव। अर्थप्राप्तिश्च प्रत्यक्षसिद्धा। कामप्राप्तिश्चार्थद्वारैव। मोक्षप्राप्तिश्चैतज्जन्यधर्मफलाननुसन्धानात्। मोक्षोपयोगिवाक्ये व्युत्पत्त्याधायकत्वाच्च। चतुर्व्वर्गप्राप्तिर्हि वेदशास्त्रेभ्यो नीरसतया दुःखादेव परिणतबुद्धीनामेव जायते। परमानन्दसन्दोहजनकतया सुखादेव सुकुमारबुद्धीनामपि पुनः काव्यादेव॥ ननु तर्हि परिणतबुद्धिभिः सत्सु वेदशास्त्रेषु काव्येषु किमिति यत्नः करणीय इत्यपि न वक्तव्यं। कटुकौषधोपशमनीयस्य रोगस्य सितशर्करोपशमनीयत्वे कस्य वा रोगिणः सितशर्कराप्रवृत्तिः साधीयसी न स्यात्॥ किञ्च। काव्यस्योपादेयत्वमाग्नेयपुराणेऽप्युक्तं।

"नरत्वं दुर्लभं लोके विद्या तत्र सुदुर्लभा।
कवित्वं दुर्लभं तत्र शक्तिस्तत्र सुदुर्लभेति"॥

त्रिवर्गसाधनं नाट्यमिति च विष्णुपुराणे।

"काव्यालापाश्च ये केचिद्गीतकान्यखिलानि च।
शब्दमूर्त्तिधरस्यैते विष्णोरंशा महात्मन इति"॥

तेन हेतुना तस्य काव्यस्य स्वरूपं निरूप्यते। एतेनाभिधेयञ्च प्रदर्शितं॥

तत् किंस्वरूपं तावत्काव्यमित्यपेक्षायां कश्चित् "तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापीति" एतच्चिन्त्यं।तथाहि यदि दोषरहितस्यैव काव्यत्वाङ्गीकारस्तदा।

"न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः
सोऽप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो रावणः।

धिक् धिक् शक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा
स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः" ॥

अत्र श्लोकस्य विधेयाविमर्षदोषदुष्टतया काव्यत्वं न स्यात् प्रत्युत ध्वनित्वेनोत्तमकाव्यताऽस्याङ्गीकृता तस्मादव्याप्तिर्लक्षणदोषः ॥ ननु कश्चिदेवांशोऽत्र दुष्टो न पुनः सर्व्वोऽपीति चेत् तर्हि यत्रांशे दोषः सोऽकाव्यत्वप्रयोजको यत्र ध्वनिः स उत्तमकाव्यत्वप्रयोजक इत्यंशाभ्यामुभयत आकृष्यमाणं काव्यमकाव्यं वा किमपि न स्यात्॥ न च किञ्चिदेवांशं काव्यस्य दूषयन्तः श्रुतिदुष्टादयो दोषाः किं तर्हि सर्व्वमेव काव्यं। तथाहि। काव्यात्मभूतस्य रसस्यानपकर्षकत्वे तेषां दोषत्वमपि नाङ्गीक्रियते। अन्यथा नित्यदोषानित्यदोषत्वव्यवस्थापि न स्यात् ॥ यदुक्तं ध्वनिकृता।

"श्रुतिदुष्टादयो दोषा अनित्या ये च दर्शिताः।
ध्वन्यात्मन्येव शृङ्गारे ते हेया इत्युदाहृताः" ॥

किञ्चैवं काव्यं प्रविरलविषयं निर्व्विषयं वा स्यात्। सर्व्वथा निर्द्दोषस्यैकान्तमसम्भवात् । ननु ईषदर्थे नञः प्रयोग इति चेत् तर्हि ईषद्दोषौ शब्दार्थौ काव्यमित्युक्तेर्निर्द्दोषयोः काव्यत्वं न स्यात्। सति सम्भवे ईषद्दोषाविति चेद् एतदपि काव्यलक्षणेऽवाच्यं। रत्नादिलक्षणे कीटानुवेधादिपरिहारवत् । न हि कीटानुवेधादयो रत्नस्य रत्नत्वं व्याहन्तुमीशाः किन्तु उपादेयतारतम्यमेव कर्त्तुं तद्वदत्र श्रुतिदुष्टादयोऽपि काव्यस्य॥ उक्तञ्च।

"कीटानुविद्धरत्नादिसाधारण्येन काव्यता ।
दुष्टेष्वपि मता यत्र रसाद्यनुगमः स्फुटः" ॥

किञ्च । शब्दार्थयोः सगुणत्वविशेषणमनुपपन्नं । गुणानां रसैकधर्म्मत्वस्य "ये रसस्याङ्गिनो धर्म्माः शौर्य्यादय इवात्मन" इत्यादिना तेनैव प्रतिपादितत्वात् ॥ रसाभिव्यञ्जकत्वेन उपचारत उपपद्यत इति चेत् तथाप्ययुक्तं । तथाहि । तयोः काव्यस्वरूपत्वेनाभिमतयोः शब्दार्थयो रसोऽस्ति न वा । नास्ति चेद् गुणवत्त्वमपि नास्ति । गुणानां तदन्वयव्यतिरेकानुविधायित्वात् । अस्ति चेत् कथं नोक्तं रसवन्ताविति विशेषणं । गुणवत्त्वान्यथानुपपत्त्या एतल्लभ्यत इति चेत् तर्हि सरसावित्येव वक्तुं युक्तं न सगुणाविति । न हि प्राणिमन्तो देशा इति वक्तव्ये "शौर्य्यादिमन्तो देशा" इति केनाप्युच्यते ॥ ननु शब्दार्थौ सगुणावित्यनेन गुणाभिव्यञ्जकौ शब्दार्थौ काव्ये प्रयोज्यावित्यभिप्राय इति चेत् । न । गुणाभिव्यञ्जकशब्दार्थवत्त्वस्यापि काव्य उत्कर्षमात्राधायकत्वं न तु स्वरूपाधायकत्वं । उक्तं हि "काव्यस्य शब्दार्थौ शरीरं रसादिश्चात्मा गुणाः शौर्य्यादिवद् दोषाः काणत्वादिवद् रीतयोऽवयवसंस्थानविशेषवद् अलङ्काराः कटककुण्डलादिवदिति" । एतेन "अनलङ्कृती पुनः क्वापीति" यदुक्तं तदपि परास्तं । अस्य अर्थः "सर्व्वत्र सालङ्कारौ क्वचित्त्वस्फुटालङ्कारावपि शब्दार्थौ काव्यमिति" । तत्र सालङ्कारशब्दार्थयोरपि काव्य उत्कर्षमात्राधायकत्वात् । एतेन "वक्रोक्तिः काव्यजीवितमिति" वक्रोक्तिजीवितकारोक्तमपि परास्तं । वक्रोक्तेरलङ्काररूपत्वात् । यच्च क्वचिदस्फुटालङ्कारत्वे उदाहृतं ।

"यः कौमारहरः स एव हि वरस्ता एव चैत्रक्षपास्

"ते चोन्मीलितमालतीसुरभयः प्रौढाः कदम्बानिलाः ।
सा चैवास्मि तथापि तत्र सुरतव्यापारलीलाविधौ
रेवारोधसि वेतसीतरुतले चेतः समुत्कण्ठते" ॥

एतच्चिन्त्यं । अत्र हि विभावनाविशेषोक्तिमूलस्य सन्देहसङ्करालङ्कारस्य स्फुटत्वं । एतेन ।

"अदोषं गुणवत् काव्यमलङ्कारैरलङ्कृतं ।
रसान्वितं कविः कुर्व्वन् कीर्त्तिं प्रीतिञ्च विन्दति" ॥

इत्यादीनामपि काव्यलक्षणत्वमपास्तं ॥ यत्तु ध्वनिकारेणोक्तं "काव्यस्यात्मा ध्वनिरिति" तत् किं वस्त्वलङ्काररसादिलक्षणस्त्रिरूपो ध्वनिः काव्यस्यात्मा उत रसादिरूपमात्रो वा । नाद्यः । प्रहेलिकादावतिव्याप्तेः । द्वितीयश्चेदोमिति ब्रूमः ॥ ननु यदि रसादिमात्ररूप एव ध्वनिः काव्यस्यात्मा तदा ।

"अत्ता एत्थ णिमज्जइ एत्थ अहं दिअसअं पलोएहि ।
मा पहिअ रत्तिअन्धअ सेज्जाए मह णिमज्जहिसि" * ॥

इत्यादौ वस्तुमात्रव्यञ्जने कथं काव्यव्यवहार इति चेद् अत्रापि रसाभासवत्तयैव ब्रूमः । अन्यथा "देवदत्तो ग्रामं यातीति" वाक्ये तद्भृत्यस्य तदनुसरणरूपव्यङ्ग्यावगतेरपि काव्यत्वं स्यात् । अस्त्विति चेत् । न । रसवत एव काव्यत्वाङ्गीकारात् । काव्यस्य प्रयोजनं हि रसास्वादसुखपिण्डदानद्वारेण । वेदशास्त्रवि-

* संस्कृतार्थः । श्वश्रूरत्र निमज्जति अत्राहं दिवस एव प्रलोकय । मा पथिक रात्र्यन्धक शय्यायां मम निमंक्ष्यसि ॥ टीका ॥

मुखानां सुकुमारमतीनां राजपुत्रप्रभृतीनां विनेयानां रामादिवत् प्रवर्त्तितव्यं न रावणादिवदित्यादिकृत्याकृत्यप्रवृत्तिनिवृत्त्युपदेश इति चिरन्तनैरप्युक्तत्वात् ॥ तथा चाग्नेयपुराणेऽप्युक्तं।

"वाग्वैदग्ध्यप्रधानेऽपि रस एवात्र जीवितमिति"।

व्यक्तिविवेककारेणाप्युक्तं "काव्यस्यात्मनि अङ्गिनि रसादिरूपे न कस्यचिद्विमतिरिति"। ध्वनिकारेणाप्युक्तं। "न हि कवेरितिवृत्तमात्रनिर्व्वाहेणात्मलाभ इतिहासादेरेव तत्सिद्धेरित्यादि" ॥ ननु तर्हि प्रबन्धान्तर्व्वर्त्तिनां केषामपि नीरसानां पद्यानां काव्यत्वं न स्यादिति चेत्। न। रसवत् पद्यान्तर्गतनीरसपदानामिव पद्यरसे प्रबन्धरसेनैव तेषां रसवत्त्वाङ्गीकारात्। यत्तु नीरसेष्वपि गुणाभिव्यञ्जकवर्णसद्भावाद् दोषाभावादलङ्कारसद्भावाच्च काव्यव्यवहारः स रसादिमत्काव्यबन्धसाम्याद्गौण एव। यत्तु वामनेनोक्तं "रीतिरात्मा काव्यस्येति" तन्न रीतेः सङ्घटनाविशेषत्वात्। सङ्घटनायाश्च अवयवसंस्थानरूपत्वात्। आत्मनश्च तद्भिन्नत्वात्। यच्च ध्वनिकारेणोक्तं।

"अर्थः सहृदयश्लाघ्यः काव्यात्मा यो व्यवस्थितः।
वाच्यप्रतीयमानाख्यौ तस्य भेदावुभौ स्मृताविति"॥

तत्र वाच्यस्यात्मत्वं "काव्यस्यात्मा ध्वनिरिति" स्ववचनविरोधादेवापास्तं ॥ तत् किं पुनः काव्यमित्युच्यते।

(३) वाक्यं रसात्मकं काव्यं

रसस्वरूपं निरूपयिष्यामः। रस एवात्मा साररूपतया जीवनाधायकोऽस्य तेन विना तस्य काव्यत्वानङ्गीकारात्। रस्यत इति

रस इति व्युत्पत्तियोगात् भावतदाभासादयोऽपि गृह्यन्ते ॥

तत्र रसो यथा।

"शून्यं वासगृहं विलोक्य शयनादुत्थाय किञ्चिच्छनै-
र्निद्राव्याजमुपागतस्य सुचिरं निर्व्वर्ण्य पत्युर्मुखं।
विस्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं
लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता"॥

अत्र हि सम्भोगशृङ्गाराख्यो रसः॥ भावो यथा महापात्रराघवानन्दसान्धिविग्रहिकाणां।

"यस्यालीयत शल्कसीम्नि जलधिः पृष्ठे जगन्मण्डलं
दंष्ट्रायां धरणी नखे दितिसुताधीशः पदे रोदसी।
क्रोधे क्षत्रगणः शरे दशमुखः पाणौ प्रलम्बासुरो
ध्याने विश्वमसावधार्म्मिककुलं कस्मैचिदस्मै नमः" ॥

अत्र भगवद्विषया रतिर्भावः। रसाभासो यथा।

"मधु द्विरेफः कुसुमैकपात्रे पपौ प्रियां स्वामनुवर्त्तमानः।
शृङ्गेण च स्पर्शनिमीलिताक्षीं मृगीमकण्डूयत कृष्णसारः"॥

अत्र हि सम्भोगशृङ्गारस्य तिर्य्यग्विषयत्वाद्रसाभासः। एवमन्यत्॥ दोषाः पुनः काव्ये किंस्वरूपा इत्युच्यते।

## (४) दोषास्तस्यापकर्षकाः।

श्रुतिदुष्टापुष्टार्थत्वादयः काणत्वखञ्जत्वादय इव देहद्वारेणेव शब्दार्थद्वारेण व्यभिचारिभावादेः स्वशब्दवाच्यत्वादयो मूर्खत्वादय इव साक्षात् काव्यस्यात्मभूतं रसमपकर्षयन्तः काव्य-

स्यापकर्षका उच्यन्ते। एषां विशेषोदाहरणानि वक्ष्यामः॥

गुणादयः किं स्वरूपा इत्युच्यते।

(५) उत्कर्षहेतवः प्रोक्ता गुणालङ्काररीतयः॥

गुणाः शौर्यादिवत्। अलङ्काराः कटककुण्डलादिवत्। रीतयोऽवयवसंस्थानविशेषवत्। देहद्वारेणेव शब्दार्थद्वारेण तमेव काव्यस्यात्मभूतरसमुत्कर्षयन्तः काव्यस्योत्कर्षका उच्यन्ते। इह यद्यपि गुणानां रसधर्म्मत्वं तथापि गुणशब्दोऽत्र गुणाभिव्यञ्जकशब्दार्थयोरुपचर्य्यते। अतश्च गुणाभिव्यञ्जकाः शब्दा रसस्योत्कर्षका इत्युक्तं भवतीति प्रागेवोक्तं। एषामपि विशेषोदाहरणानि वक्ष्यामः॥ * ॥

इति श्रीमन्नारायणचरणारविन्दमधुव्रतसाहित्यार्णवकर्णधारध्वनिप्रस्थापनपरमाचार्य्यकविसूक्तिरत्नाकराष्टादशभाषावारविलासिनीभुजङ्गसान्धिविग्रहिकमहापात्रश्रीविश्वनाथकविराजकृतौ साहित्यदर्पणे काव्यस्वरूपनिरूपणो नाम प्रथमः परिच्छेदः॥ * ॥

वाक्यस्वरूपमाह।

(६) वाक्यं स्याद्योग्यताकाङ्क्षासत्तियुक्तः पदोच्चयः॥

योग्यता पदार्थानां परस्परसम्बन्धे बाधाभावः। पदोच्चयस्यैतदभावेऽपि वाक्यत्वे वह्निना सिञ्चतीत्यपि वाक्यं स्यात्। आकाङ्क्षा प्रतीतिपर्य्यवसानविरहः। स च श्रोतुर्जिज्ञासारूपः। निराकाङ्क्षस्य वाक्यत्वे गौरश्वः पुरुषो हस्तीत्यादीनामपि वाक्यत्वं स्यात्। आसत्तिर्बुद्ध्यविच्छेदः। बुद्धिविच्छेदेऽपि

वाक्यत्वे इदानीमुच्चरितस्य देवदत्तशब्दस्य दिनान्तरोच्चारितेन गच्छतीतिपदेन सङ्गतिः स्यात्। अत्राकाङ्क्षायोग्यतयो-रात्मार्थधर्म्मत्वेऽपि पदोच्चयधर्म्मत्वमुपचारात्॥

(७) वाक्योच्चयो महावाक्यम्।

योग्यताकाङ्क्षासत्तियुक्त एव।

(८) इत्थं वाक्यं द्विधा मतं।

इत्थमिति वाक्यत्वेन महावाक्यत्वेन च॥ उक्तञ्च।

"स्वार्थबोधसमाप्तानामङ्गाङ्गित्वव्यपेक्षया।

वाक्यानामेकवाक्यत्वं पुनः संहत्य जायत इति"॥

तत्र वाक्यं यथा। "शून्यं वासगृहमित्यादि"॥ महावाक्यं यथा। रामायणमहाभारतरघुवंशादि॥ पदोच्चयो वाक्यमित्युक्तं तत् किं पदलक्षणमित्यत आह।

(९) वर्णाः पदं प्रयोगार्हानन्वितैकार्थबोधकाः॥

यथा घटः। प्रयोगार्हा इति प्रातिपदिकस्य व्यवच्छेदः। अनन्वितेति वाक्यमहावाक्ययोः। एकेति साकाङ्क्षानेकपदवाक्यानां। अर्थबोधका इति कचटतपानां। वर्णा इति बहुवचनमविवक्षितं। तत्र।

(१०) अर्थो वाच्यश्च लक्ष्यश्च व्यङ्ग्यश्चेति त्रिधा मतः।

एषां स्वरूपमाह।

(११) वाच्योऽर्थोऽभिधया बोध्यो लक्ष्यो लक्षणया मतः॥

व्यङ्ग्यो व्यञ्जनया ताः स्युस्तिस्रः शब्दस्य शक्तयः।

ता अभिधाद्याः। तत्र सङ्केतितार्थस्य बोधनादग्रिमाऽभिधा। उत्तमवृद्धेन मध्यमवृद्धमुद्दिश्य "गामानय" इत्युक्ते तं गवानयनप्रवृत्तमुपलभ्य बालोऽस्य वाक्यस्य "सास्नादिमत्पिण्डानयनमर्थः" इति प्रथमं प्रतिपद्यते। अनन्तरञ्च "गां बधान अश्वमानय" इत्यादावावापोद्वाराभ्यां गोशब्दस्य "सास्नादिमानर्थः" आनयनशब्दस्य चाहरणमर्थः" इति सङ्केतमवधारयति। क्वचिच्च प्रसिद्धपदसमभिव्याहारात्। यथा।
"इह प्रभिन्नकमलोदरे मधूनि मधुकरः पिबति" इत्यत्र। क्वचिदाप्तोपदेशात्। यथा "अयमश्वशब्दवाच्य" इत्यत्र। तत्र सङ्केतितमर्थं बोधयन्ती शब्दस्य शक्त्यन्तरानन्तरिता शक्तिरभिधा नाम॥

(१२) सङ्केतो गृह्यते जातौ गुणद्रव्यक्रियासु च॥

जातिर्गोपिण्डादिषु गोत्वादिका। गुणो विशेषाधानहेतुः सिद्धो वस्तुधर्म्मः। शुक्लादयो हि गवादिकं सजातीयेभ्यः कृष्णगवादिभ्यो व्यावर्त्तयन्ति। द्रव्यशब्दा एकव्यक्तिवाचिनो हरिहरडित्थडवित्थादयः। क्रियाः साध्यरूपा वस्तुधर्म्माः पाकादयः। एष हि अधिश्रयणावश्रयणान्तादिपूर्व्वापरीभूतव्यापारकलापः पाकादिशब्दवाच्यः। एष्वेव हि व्यक्तेरुपाधिषु सङ्केतो गृह्यते न व्यक्तौ। आनन्त्यव्यभिचारदोषापातात्॥

अथ लक्षणा।

(१३) मुख्यार्थबाधे तद्युक्तो ययान्योऽर्थः प्रतीयते।
रूढेः प्रयोजनाद्वासौ लक्षणा शक्तिरर्पिता॥

"कलिङ्गः साहसिकः" इत्यादौ कलिङ्गादिशब्दो देशविशेषादिरूपे स्वार्थेऽसम्भवन् यथा शब्दस्य शक्त्या स्वसंयुक्तान् पुरुषादीन् प्रत्याययति । यथा च "गङ्गायां घोषः" इत्यादौ गङ्गादिशब्दो जलमयादिरूपार्थवाचकत्वात् प्रकृतेऽसम्भवन् स्वस्य सामीप्यादिसम्बन्धसम्बन्धिनं तटादिं बोधयति सा शब्दस्यार्पिता स्वाभाविकेतरा ईश्वरानुद्भाविता वा शक्तिर्लक्षणा नाम । पूर्व्वत्र हेतू रूढिः प्रसिद्धिरेव । उत्तरत्र "गङ्गातटे घोषः" इति प्रतिपादनादलभ्यस्य शीतत्वपावनत्वातिशयस्य बोधनरूपं प्रयोजनं । हेतुं विनापि यस्य कस्यचित् सम्बन्धिनो लक्षणेऽतिप्रसङ्गः स्यादित्युक्त उक्तं । "रूढेः प्रयोजनाद्वापीति" ॥ केचित् तु "कर्म्मणि कुशलः" इति रूढावुदाहरन्ति । तेषामयमभिप्रायः । "कुशं लाति" इति व्युत्पत्तिलभ्यः कुशग्राहिरूपो मुख्योऽर्थः प्रकृतेऽसम्भवन् विवेचकत्वसाधर्म्म्यसम्बन्धसम्बन्धिनं दक्षरूपमर्थं बोधयति । तदन्ये न मन्यन्ते । कुशग्राहिरूपार्थस्य व्युत्पत्तिलभ्यत्वेऽपि दक्षरूपस्यैव मुख्यार्थत्वात् । अन्यद्धि शब्दानां व्युत्पत्तिनिमित्तमन्यच्च प्रवृत्तिनिमित्तं । व्युत्पत्तिलभ्यस्य मुख्यार्थत्वे "गौः शेते" इत्यत्रापि लक्षणा स्यात् । "गमेर्डोर्" इति गमधातोर्डोप्रत्ययेन व्युत्पादितस्य गोशब्दस्य शयनकालेऽपि प्रयोगात् ॥

तद्भेदानाह ।

(१४) मुख्यार्थस्येतराक्षेपो वाक्यार्थेऽन्वयसिद्धये ।
स्यादात्मनोऽप्युपादानादेषोपादानलक्षणा ॥

रूढावुपादानलक्षणा यथा "श्वेतो धावति" । प्रयोजने यथा

"कुन्ताः प्रविशन्ति"। अनयोर्हि श्वेतादिभिः कुन्तादिभिश्च अचेतनतया केवलैर्धावनप्रवेशनक्रिययोः कर्तृतयाऽन्वयमलभमानैरेतत्सिद्धये आत्मसम्बन्धिनोऽश्वादयः पुरुषादयश्चाक्षिप्यन्ते। पूर्वत्र प्रयोजनाभावाद्रूढिः। उत्तरत्र कुन्तादीनामतिगहनत्वं प्रयोजनं। अत्र च मुख्यार्थस्यात्मनोऽप्युपादानं। लक्षणलक्षणायान्तु परस्यैवोपलक्षणमित्यनयोर्भेदः। इयमेव "अजहत्स्वार्था" इत्युच्यते॥

(१५) अर्पणं स्वस्य वाक्यार्थे परस्यान्वयसिद्धये।
उपलक्षणहेतुत्वादेषा लक्षणलक्षणा॥

रूढिप्रयोजनयोर्लक्षणलक्षणा यथा। "कलिङ्गः साहसिकः" "गङ्गायां घोषः" इति च। अनयोर्हि पुरुषतटयोर्वाक्यार्थेऽन्वयसिद्धये कलिङ्गगङ्गाशब्दावात्मानमर्पयतः॥ यथा वा।

"उपकृतं बहु तत्र किमुच्यते सुजनता प्रथिता भवता परं।
विदधदीदृशमेव सदा सखे सुखितमास्स्व ततः शरदां शतं"॥

अत्रापकारादीनां वाक्यार्थेऽन्वयसिद्धय उपकृतादयः शब्दा आत्मानमर्पयन्ति। अत्रापकारिणं प्रत्युपकारादिप्रतिपादनान्मुख्यार्थबाधः। वैपरीत्यलक्षणः सम्बन्धः। फलमप्यपकारातिशयः। इयमेव "जहत्स्वार्था" इत्युच्यते॥

(१६) आरोपाध्यवसानाभ्यां प्रत्येकं ता अपि द्विधा।

ताः पूर्वोक्ताश्चतुर्भेदलक्षणाः।

(१७) विषयस्यानिगीर्णस्यान्यतादात्म्यप्रतीतिकृत्।
सारोपा स्यान्निगीर्णस्य मता साध्यवसानिका*।

रूढा उपादानलक्षणा सारोपा यथा। "अश्वः श्वेतो धावति"। अत्र हि श्वेतगुणवानश्वोऽनिगीर्णस्वरूपः स्वसमवेतश्वेतगुणतादात्म्येन प्रतीयते॥ प्रयोजने यथा। "एते कुन्ताः प्रविशन्ति"। अत्र सर्व्वनाम्ना कुन्तधारिपुरुषनिर्द्देशात् सारोपात्वं॥ रूढौ लक्षणलक्षणा सारोपा यथा। "कलिङ्गः पुरुषो युध्यति"। अत्र पुरुषकलिङ्गयोराधार्य्याधारसम्बन्धः॥ प्रयोजने यथा। "आयुर्घृतं"। अत्रायुष्कारणमपि घृतं कार्य्यकारणभावसम्बन्धसम्बन्ध्यायुस्तादात्म्येन प्रतीयते। अन्यवैलक्षण्येनाव्यभिचारेणायुष्करत्वं प्रयोजनं॥

यथा वा। राजकीये पुरुषे गच्छति "राजासौ गच्छति" इति। अत्र स्वस्वामिभावलक्षणः सम्बन्धः॥ यथा वा। अग्रमात्रेऽवयवे "हस्तोऽयं"। अत्रावयवावयविभावलक्षणः सम्बन्धः॥ ब्राह्मणेऽपि "तक्षासौ"। अत्र तात्कर्म्यलक्षणः सम्बन्धः॥ इन्द्रार्थासु स्थूणासु "अमी इन्द्राः"। अत्र तादर्थ्यलक्षणः सम्बन्धः। एवमन्यत्रापि॥ निगीर्णस्य पुनर्विषयस्यान्यतादात्म्यप्रतीतिकृत् साध्यवसाना। अस्यास्तु चतुर्षु भेदेषु पूर्व्वोदाहरणान्येव॥

---

* विषयस्येति। निबद्धारोपविषयस्येत्यर्थः। अनिगीर्णस्य प्रयुक्तशब्दप्रतिपादितस्यान्यतादात्म्यप्रतीतिकृत् स्वमन्यपदार्थोपस्थितिद्वारा शक्यतावच्छेदकातिरिक्तधर्म्मावच्छिन्नस्याभेदप्रतीतिकृद्या सा लक्षणा सारोपा स्यादित्यर्थः॥ टी०॥

(१८) सादृश्येतरसम्बन्धाः शुद्धास्ताः सकला अपि ॥
सादृश्यात् तु मता गौण्यस्तेन षोडशभेदिताः ।

ताः पूर्व्वोक्ता अष्टभेदा लक्षणाः । सादृश्येतरसम्बन्धाः कार्य्यकारणभावादयः । अत्र शुद्धानां पूर्व्वोदाहरणान्येव ॥ रूढावुपादानलक्षणा सारोपा गौणी यथा । "एतानि तैलानि हेमन्ते सुखानि"। अत्र तैलशब्दस्तिलभवत्वेहरूपं मुख्यार्थमुपादायैव सार्षपादिस्नेहेषु वर्त्तते ॥ प्रयोजने यथा । राजकुमारेषु तत्सदृशेषु गच्छत्सु "एते राजकुमारा गच्छन्ति" ॥ रूढावुपादानलक्षणा साध्यवसाना गौणी यथा । "तैलानि हेमन्ते सुखानि"॥ प्रयोजने यथा ।"राजकुमारा गच्छन्ति"॥ रूढौ लक्षणलक्षणा सारोपा गौणी यथा । "राजा गौडेन्द्रः कण्टकं शोधयति" ॥ प्रयोजने यथा "गौर्व्वाहीकः" ॥ रूढौ लक्षणा साध्यवसाना गौणी यथा।"राजा कण्टकं शोधयति"॥ प्रयोजने यथा। "गौर्जल्पति" ॥

अत्र केचिदाहुः "गोसहचारिणो गुणा जाड्यमान्द्यादयो लक्ष्यन्ते । ते च गोशब्दस्य वाहीकार्थाभिधाने निमित्तीभवन्ति"। तदयुक्तं । गोशब्दस्यागृहीतसङ्केतं वाहीकार्थमभिधातुमसामर्थ्यात् । गोशब्दार्थमात्रबोधनाच्च । अभिधाया विरतत्वात् विरतायाश्च पुनरुत्थानाभावात् । अन्ये पुनर्गोशब्देन "वाहीकार्थो नाभिधीयते किन्तु स्वार्थसहचारिगुणसाजात्येन वाहीकार्थगता गुणा एव लक्ष्यन्ते"। तदप्यन्ये न मन्यन्ते । तथा ह्यत्र गोशब्दाद्वाहीकार्थः प्रतीयते न वा। आद्येऽपि गोशब्दा-

देव वा लक्षितादा गुणात्। अविनाभावद्वारा तत्र न प्रथमः। वाहीकार्थेऽस्याशक्येतितत्वात्। न द्वितीयः। अविनाभावलभ्यस्यार्थस्य शाब्देऽन्वये प्रवेशासम्भवात्। शाब्दी ह्याकाङ्क्षा शब्देनैव प्रपूर्य्यते॥ न द्वितीयः। यदि हि गोशब्दाद्वाहीकार्थो न प्रतीयते तदास्य वाहीकस्य सामानाधिकरण्यमसमञ्जसं स्यात्। तस्मादत्र गोशब्दो मुख्यया वृत्त्या वाहीकशब्देन सहान्वयमलभमानोऽज्ञत्वादिसाधर्म्म्यसम्बन्धाद्वाहीकार्थं लक्षयति। वाहीकस्याज्ञत्वाद्यतिशयबोधनं प्रयोजनं। इयञ्च गुणयोगाद् "गौणी" इत्युच्यते। पूर्व्वा तु उपचारामिश्रणात् शुद्धा। उपचारो हि सामात्यन्तं विप्रकष्टितयोः सादृश्यातिशयमहिम्ना भेदप्रतीतिस्थगनमात्रं। यथा अग्निमाणवकयोः शुक्लपटयोस्तु नात्यन्तं भेदप्रतीतिः। तस्मादेवमादिषु शुद्धैव लक्षणा॥

(१९) व्यङ्ग्यस्य गूढागूढत्वाद् द्विधा स्युः फललक्षणाः॥

प्रयोजने अष्टभेदा लक्षणा दर्शितास्ताः प्रयोजनरूपव्यङ्ग्यस्य गूढागूढतया प्रत्येकं द्विधा भूत्वा षोडशभेदाः। तत्र गूढः काव्यार्थभावनापरिपक्वबुद्धिविभवमात्रवेद्यः। यथा। "उपकृतं बहु तत्रेति"॥ अगूढोऽतिस्पष्टतया सर्व्वजनसंवेद्यः। यथा।

"उपदिशति कामिनीनां यौवनमद एव ललितानि"॥

अत्र "उपदिशति" इत्यनेन "आविष्करोति" इति लक्ष्यते। आविष्कारातिशयश्चाभिधेयवत् स्फुटं प्रतीयते॥

(२०) धर्म्मिधर्म्मगतत्वेन फलस्य ता अपि द्विधा ॥

एता अनन्तरोक्ताः षोडशभेदा लक्षणाः फलस्य धर्म्मिगतत्वेन धर्म्मगतत्वेन च प्रत्येकं द्विधा भूत्वा द्वात्रिंशद्भेदाः ॥

क्रमेणोदाहरति।

"स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घना
वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः।
कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्व्वंसहो
वैदेही तु कथं भविष्यति हहा हा देवि धीरा भव ॥

अत्रात्यन्तदुःखसहिष्णुरूपे रामे धर्म्मिणि लक्ष्ये तस्यैवातिशयः फलं ॥ "गङ्गायां घोष" इत्यत्र तटादिषु लक्ष्येषु शीतत्वपावनत्वादिरूपधर्म्मस्यातिशयः फलं ॥

(२१) तदेवं लक्षणाभेदाश्चत्वारिंशन्मता बुधैः।

रूढावष्टौ फले द्वात्रिंशदिति चत्वारिंशल्लक्षणाभेदाः। किञ्च।

(२२) पदवाक्यगतत्वेन पत्येकं ता अपि द्विधा।

ता अनन्तरोक्ताः। तत्र पदगतत्वेन यथा। "गङ्गायां घोषः" ॥ वाक्यगतत्वेन यथा ॥ "उपकृतं बहु तत्रेति" ॥ एवमशीतिप्रकारा लक्षणा ॥

अथ व्यञ्जना।

(२३) विरतास्वभिधाद्यासु ययाऽर्थो बोध्यतेऽपरः।
सा वृत्तिर्व्यञ्जना नाम शब्दस्यार्थादिकस्य च ॥

शब्दबुद्धिकर्म्मणां विरम्य व्यापाराभाव इति नयेनाभिधा-

लक्षणातात्पर्याख्यासु तिसृषु वृत्तिषु स्वं स्वमर्थं बोधयित्वा उपक्षीणासु यया अन्योऽर्थो बोध्यते सा शब्दस्यार्थस्य प्रकृतिप्रत्ययादेश्च वृत्तिर्व्यञ्जनध्वननगमनप्रत्यायनादिव्यपदेशविषया व्यञ्जना नाम। तत्र।

(२४) अभिधालक्षणामूला शब्दस्य व्यञ्जना द्विधा।

अभिधामूलामाह।

(२५) अनेकार्थस्य शब्दस्य संयोगाद्यैर्नियन्त्रिते।
एकत्रार्थेऽन्यधीहेतुर्व्यञ्जना साभिधाश्रया॥

आदिशब्दाद्विप्रयोगादयः। उक्तं हि।

"संयोगो विप्रयोगश्च साहचर्यं विरोधिता।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः।
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः॥" इति॥

"सशङ्खचक्रो हरिः" इत्यत्र शङ्खचक्रसंयोगेन हरिशब्दो विष्णुमेवाभिधत्ते। "अशङ्खचक्रो हरिः" इति वियोगेन तमेव। "भीमार्जुनौ" इति अर्जुनः पार्थः। "कर्णार्जुनौ" इति कर्णः सूतपुत्रः। "स्थाणुं वन्दे" इति स्थाणुः शिवः। "सर्वं जानाति देवः" इति देवो भवान्। "कुपितो मकरध्वजः" इति मकरध्वजः कामः। "देवः पुरारिः" इति पुरारिः शिवः। "मधुना मत्तः पिकः" इति मधुर्वसन्तः। "पातु वो दयितामुखं" इति मुखं सांमुख्यं। "विभाति गगने चन्द्रः" इति चन्द्रः

D

ग्नौ। "निशि चित्रभानुः" इति चित्रभानुर्वह्निः। "भाति रथाङ्गं" इति नपुंसकव्यक्त्या रथाङ्गं चक्रं। स्वरस्तु वेद एव विशेषप्रतीतिकृन्न काव्य इति तस्य विषये नोदाहृतं। इदञ्च केऽप्यसहमाना आहुः। "स्वरोऽपि काक्वादिरूपः काव्ये विशेषप्रतीतिकृदेव उदात्तादिरूपोऽपि मुनेः पाठोक्तदिशा शृङ्गारादिरसविशेषप्रतीतिकृदेवेत्येतद्विषय उदाहरणमुचितमेवेति"। तन्न। स्वराः काक्वादय उदात्तादयो वा व्यङ्ग्यरूपमेव विशेषं प्रत्याययन्ति न खलु प्रकृतोक्तमनेकार्थशब्दस्यैकार्थनियन्त्रणरूपं विशेषं॥ किञ्च। यदि यत्र क्वचिदनेकार्थशब्दानां प्रकरणादिनियमाभावादनियन्त्रितयोरप्यर्थयोरनुरूपस्वरवशेनैकत्र नियमनं वाच्यं तदा तथाविधस्थले श्लेषानङ्गीकारप्रसङ्गः। न च तथा। अत एवाहुः "श्लेषनिरूपणप्रस्तावे काव्यमार्गे स्वरो न गण्यत इति च नयः" इत्यलमुपजीव्यानां मान्यानां व्याख्यानेषु कटाक्षनिक्षेपेण। आदिशब्दात् "एतावन्मात्रस्तनी" इत्यादौ हस्तादिचेष्टादिभिः स्तनादीनां कमलकोरकाद्याकारत्वं। एवमेकस्मिन्नर्थे अभिधया नियन्त्रिते या शब्दस्यान्यार्थबुद्धिहेतुः शक्तिः सा अभिधामूला व्यञ्जना॥ यथा मम तातपादानां महापात्रचतुर्दशभाषाविलासिनीभुजङ्गमहाकवीश्वरश्रीचन्द्रशेखरसान्धिविग्रहिकाणां।

"दुर्गालङ्घितविग्रहो मनसिजं सम्मीलयंस्तेजसा
प्रोद्यद्राजकलो गृहीतगरिमा विष्वग्वृतो भोगिभिः।
नक्षत्रेशकृतेक्षणो गिरिगुरौ गाढां रुचिं धारयन्

भामाक्रम्य विभूतिभिर्भवितनन् राजत्युमावल्लभः" ॥

अत्र प्रकरणेनाभिधया उमावल्लभशब्दस्योमानाम्नी महादेवी तद्वल्लभभानुदेवनृपतिरूपेऽर्थे नियन्त्रिते व्यञ्जनयैव गौरीवल्लभरूपोऽर्थो बोध्यते। एवमन्यत्॥

लक्षणामूलामाह।

(२६) लक्षणोपास्यते यस्य कृते तत्तु प्रयोजनं।
यया प्रत्याय्यते सा स्याद् व्यञ्जना लक्षणाश्रया॥

"गङ्गायां घोषः" इत्यादौ जलमयाद्यर्थबोधनादभिधायां विरतायां तटाद्यर्थबोधनाच्च लक्षणायां विरतायां यया शीतत्वपावनत्वाद्यतिशयादिर्बोध्यते सा लक्षणामूला व्यञ्जना॥

एवं शाब्दीं व्यञ्जनामुक्त्वाऽऽर्थीं व्यञ्जनामाह।

(२७) वक्तृबोद्धव्यवाक्यानामन्यसन्निधिवाच्ययोः।
प्रस्तावदेशकालानां काकोश्चेष्टादिकस्य च॥
वैशिष्ट्यादन्यमर्थं या बोधयेत् सार्थसम्भवा।

व्यञ्जनेति सम्बध्यते। तत्र वक्तृवाक्यप्रस्तावदेशकालवैशिष्ट्ये यथा मम।

"कालो मधुः कुपित एष च पुष्पधन्वा
धीरा वहन्ति रतिखेदहराः समीराः।
केलीवनीयमपि वञ्जुलकुञ्जमञ्जु-
र्दूरे पतिः कथय किं करणीयमद्य"॥

अत्रैतं देशं प्रति शीघ्रं "प्रच्छन्नकामुकस्त्वया प्रेष्यतां" इति सखीं प्रति कयाचित् द्योत्यते॥ बोद्धव्यवैशिष्ट्ये यथा।

"निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो
नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः।
मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमे
वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकं"॥

अत्र तदन्तिकमेव गतासीति विपरीतलक्षणया लक्ष्यं। तच्च रन्तुमिति व्यङ्ग्यं प्रतिपाद्य दूतीवैशिष्ट्याद्द्योत्यते॥

अन्यसन्निधिवैशिष्ट्ये यथा।

"उअ णिच्चलणिप्पन्दाभिसिणीपत्तम्मि रेहइ बलाआ।
णिम्मलमरगअभाअणपरिट्ठिआ संखसुत्तिव्व*"॥

अत्र बलाकाया निःस्पन्दत्वेन विश्वस्तत्वं तेनास्य देशस्य विजनत्वमतः सङ्केतस्थानमेतदिति कयापि सन्निहितप्रच्छन्न-कामुकं प्रत्युच्यते। अत्रैव स्थाननिर्ज्जनत्वरूपव्यङ्ग्यार्थवैशिष्ट्यं प्रयोजकं॥

(२८) भिन्नकण्ठध्वनिर्धीरैः काकुरित्यभिधीयते॥

इत्युक्तप्रकारायाः काकोर्भेदा आकरादिभ्यो ज्ञातव्याः॥

एतद्वैशिष्ट्ये यथा।

"गुरुपरतन्त्रतया बत दूरतरं देशमुद्यतो गन्तुं।

---

* उअ निश्चलनिस्पन्दा बिसिनीपत्रे राजति बलाका।
निर्मलमरकतभाजनपरिस्थिता शङ्खशुक्तिरिवेति। सं॥
उअ पश्येत्यर्थः॥ टी०॥

अलिकुलकोकिलललिते नेष्यति सखि सुरभिसमयेऽसौ" ॥
अत्र नेष्यति अपि तर्हि एष्यत्येवेति काका व्यज्यते ॥

चेष्टावैशिष्ट्ये यथा ।

"सङ्केतकालमनसं विटं ज्ञात्वा विदग्धया ।
हसन्नेत्रार्पिताकूतं लीलापद्मं निमीलितं" ॥

अत्र सन्ध्या सङ्केतकाल इति पद्मनिमीलनादिचेष्टया कयाचित् द्योत्यते । एवं वक्त्रादीनां व्यस्तसमस्तानां वैशिष्ट्ये बोद्धव्यं ॥

(२९) वैविध्यादियमर्थानां प्रत्येकं त्रिविधा मता ।

अर्थानां वाच्यलक्ष्यव्यङ्ग्यत्वेन त्रिरूपतया सर्वा अप्यनन्तरोक्ता व्यञ्जनास्त्रिविधाः ॥ तत्र वाच्यार्थस्य व्यञ्जना यथा । "कालो मधुः" इत्यादि ॥ लक्ष्यार्थस्य यथा । "निःशेषच्युतचन्दनं" इत्यादि ॥ व्यङ्ग्यार्थस्य यथा । "उअ णिच्चलेत्यादि"॥ प्रकृतिप्रत्ययव्यञ्जकत्वन्तु प्रपञ्चयिष्यते ।

(३०) शब्दबोध्यो व्यनक्त्यर्थः शब्दोऽप्यर्थान्तराश्रयः ॥
एकस्य व्यञ्जकत्वे तदन्यस्य सहकारिता ।

यतः शब्दो व्यञ्जकत्वेऽर्थान्तरमपेक्षते अर्थोऽपि शब्दं तदेकस्य व्यञ्जकत्वे अन्यस्य सहकारिताऽवश्यमङ्गीकार्या ॥

(३१) अभिधादित्रयोपाधिवैशिष्ट्यात्त्रिविधो मतः ॥
शब्दोऽपि वाचकस्तद्वल्लक्षको व्यञ्जकस्तथा ।

अभिधोपाधिको वाचकः। लक्षणोपाधिको लक्षकः। व्यञ्जनोपाधिको व्यञ्जकः॥ किञ्च।

(३२) तात्पर्य्याख्यां वृत्तिमाहुः पदार्थान्वयबोधने।
तात्पर्य्यार्थं तदर्थञ्च वाक्यं तद्बोधकं परे॥

अभिधाया एकैकपदार्थबोधनविरमाद्वाक्यार्थरूपस्य पदार्थान्वयस्य बोधिका तात्पर्य्या नाम वृत्तिस्तदर्थश्च तात्पर्य्यार्थः तद्बोधकञ्च वाक्यमित्यभिहितान्वयवादिनां मतं *॥ *॥

इति साहित्यदर्पणे वाक्यस्वरूपनिरूपणो नाम द्वितीयः परिच्छेदः॥ *॥

अथ कोऽयं रस इत्युच्यते।

(३३) विभावेनानुभावेन व्यक्तः सञ्चारिणा तथा।
रसतामेति रत्यादिः स्थायी भावः सचेतसां॥

विभावादयो वक्ष्यन्ते। सात्त्विकाश्चानुभावरूपत्वान्न पृथगुक्ताः। व्यक्तो दध्यादिन्यायेन रूपान्तरपरिणतो व्यक्तीकृत एव रसो न तु दीपेन घट इव पूर्व्वसिद्धो व्यज्यते। तदुक्तं लोचनकारैः। "रसाः प्रतीयन्त इति त्वोदनं पचतीतिवद्व्यवहार इति"। अत्र च रत्यादिपदोपादानादेव प्राप्ते स्थायित्वे पुनः स्थायिपदोपादानं रत्यादीनामपि रसान्तरेष्वस्थायित्वप्रति-

---

* अभिहितानामभिधया लक्षणया वा पदोपस्थापितानामन्वयबोधवादिनां प्राचीननैयायिकानामित्यर्थः। अन्विताभिधानवादिनो मीमांसकगुरवस्तु क्रियाकारकयोः प्रथमत एवान्वयबोधो जायते ततः प्रक्रियतः। पदविशेषसमभिव्याहारात् तु विशेषबुद्धिरिति किं तात्पर्य्याख्यवृत्तिस्वीकारेणेत्याहुः॥ टी०॥

पादनार्थं। ततश्च हासक्रोधादयः शृङ्गारवीरादौ व्यभिचारिण एव। तदुक्तं।“रसावस्थः परं भावः स्थायितां प्रतिपद्यते” इति॥ अस्य स्वरूपकथनगर्भं आस्वादप्रकारः कथ्यते॥

(३४) सत्त्वोद्रेकादखण्डस्वप्रकाशानन्दचिन्मयः।
वेद्यान्तरस्पर्शशून्यो ब्रह्मास्वादसहोदरः॥
लोकोत्तरचमत्कारप्राणः कैश्चित् प्रमातृभिः।
स्वाकारवदभिन्नत्वे नायमास्वाद्यते रसः॥
रजस्तमोभ्यामस्पृष्टं मनः सत्त्वमिहोच्यते।

इत्युक्तप्रकारो बाह्यमेयविमुखतापादकः कश्चनान्तरो धर्मः सत्त्वं तस्योद्रेकः रजस्तमसी अभिभूयाविर्भावः। अत्र च हेतुस्तथाविधालौकिककाव्यार्थपरिशीलनं। अखण्ड इत्येक एवायं विभावादिरत्यादिप्रकाशसुखचमत्कारात्मकः। अत्र हेतुं वक्ष्यामः। स्वप्रकाशत्वाद्यपि वक्ष्यमाणरीत्या। चिन्मय इति स्वरूपार्थे मयट्। चमत्कारश्चित्तविस्ताररूपो विस्मयापरपर्य्यायः॥ तत्प्राणत्वञ्चास्मद्वृद्धप्रपितामहसहृदयगोष्ठीगरिष्ठकविपण्डितमुख्यश्रीमन्नारायणपादैरुक्तं। तदाह धर्मदत्तः स्वग्रन्थे।

“रसे सारश्चमत्कारः सर्व्वत्राप्यनुभूयते।
तच्चमत्कारसारत्वे सर्व्वत्राप्यद्भुतो रसः।
तस्मादद्भुतमेवाह कृती नारायणो रसमिति”॥

कैश्चिदिति प्राक्तनपुण्यशालिभिः॥ यदुक्तं। “पुण्यवन्तः प्रमिण्वन्ति योगिवद्रससन्ततिमिति”॥ यद्यपि “स्वादः काव्यार्थसम्भेदादात्मानन्दसमुद्भवः” इत्युक्तदिशा रसस्यास्वादान-

तिरिक्तमुक्तं तथापि "रसः स्वाद्यते" इति काल्पनिकं भेदमुररीकृत्य कर्मकर्तरि वा प्रयोगः ॥ तदुक्तं । "रस्यमानतामात्रसारत्वात् प्रकाशशरीरादनन्य एव हि रसः" इति ॥ एवमन्यत्राप्येवंविधस्थलेषूपचारेण प्रयोगा ज्ञेयाः । नन्वेतावता रसस्याज्ञेयत्वमुक्तं भवतीति व्यञ्जनायाश्च ज्ञानविशेषत्वाद् द्वयोरैक्यमापतितं । ततश्च ।

"स्वज्ञानेनान्यधीहेतुः सिद्धेऽर्थे व्यञ्जको मतः ।
यथा दीपोऽन्यथाभावे को विशेषोऽस्य कारकात्" । इत्युक्तदिशा घटप्रदीपवद् व्यङ्ग्यव्यञ्जकयोः पार्थक्यमेवेति कथं रसस्य व्यङ्ग्यतेति चेत् सत्यमुक्तं । अत एवाहुः । विलक्षण एवायं कृतिज्ञप्तिभेदेभ्यः स्वादनाख्यः कश्चिद्व्यापारः । अत एव हि रसनास्वादनचमत्कारणादयो विलक्षणा एव व्यपदेशा इति अभिधादिविलक्षणव्यापारतात्र प्रसाधनग्रहिलैरस्माभी रसादीनां व्यङ्ग्यत्वमुक्तं भवतीति ॥ ननु तर्हि करुणादीनां रसानां दुःखमयत्वाद्रसत्वं न स्यादित्युच्यते ।

(३५) करुणादावपि रसे जायते यत् परं सुखं ।
सचेतसामनुभवः प्रमाणं तत्र केवलं ॥

आदिशब्दाद्बीभत्सभयानकादयः ॥ तथाप्यसहृदयानां मुखमुद्रणाय पक्षान्तरमुच्यते ।

(३६) किञ्च तेषु यदा दुःखं न कोऽपि स्यात्तदुन्मुखः ।

न हि कश्चित् सचेता आत्मनो दुःखाय प्रवर्त्तते । करुणादिषु च सकलस्यापि साभिनिवेशप्रवृत्तिदर्शनात् ॥ अनुपपत्त्यन्तरमाह ।

(३६) तथा रामायणादीनां भविता दुःखहेतुता ॥

करुणरसस्य दुःखहेतुत्वात् करुणरसप्रधानरामायणादिप्रबन्धानामपि दुःखहेतुत्वप्रसङ्गः स्यात् ॥ ननु कथं दुःखकारणेभ्यः सुखोत्पत्तिरित्याह ।

(३७) हेतुत्वं शोकहर्षादेर्गतेभ्यो लोकसंश्रयात् ।
शोकहर्षादयो लोके जायन्तां नाम लौकिकाः ॥
अलौकिकविभावत्वं प्राप्तेभ्यः काव्यसंश्रयात् ।
सुखं सञ्जायते तेभ्यः सर्व्वेभ्योऽपीति का क्षतिः ॥

ये खलु रामवनवासादयो लोके "दुःखकारणानि" इत्युच्यन्ते त एव हि काव्यनाट्यसमर्पिता अलौकिकविभावनव्यापारवत्तया कारणशब्दवाच्यत्वं विहायालौकिकविभावशब्दवाच्यत्वं भजन्ते । तेभ्यश्च सुरते दन्तघातादिभ्य इव सुखमेव जायते । अतश्च "लौकिकशोकहर्षादिकारणेभ्यो लौकिकशोकहर्षादयो जायन्ते" इति लोक एव प्रतिनियमः । काव्ये पुनः "सर्व्वेभ्योऽपि विभावादिभ्यः सुखमेव जायते" इति नियमान्न कश्चिद्दोषः ॥ कथं तर्हि हरिश्चन्द्रादिचरितस्य काव्यनाट्ययोरपि दर्शनश्रवणाभ्यामश्रुपातादयो जायन्त इत्युच्यते ।

(३८) अश्रुपातादयस्तद्वद्द्रुतत्वाच्चेतसो मताः ।

तर्हि कथं काव्यतः सर्व्वेषामीदृशी रसाभिव्यक्तिर्न जायत इत्याह ।

(३९) न जायते तदास्वादो विना रत्यादिवासनां ॥

वासना चेदानीन्तनी प्राक्तनी च रसास्वादहेतुः । तत्र यदि आद्या न स्यात्तदा श्रोत्रियजरन्मीमांसकादीनामपि स स्यात् । यदि द्वितीया न स्यात् यद्रागिणामपि केषाञ्चिद्रसोद्बोधो न दृश्यते तन्न स्यात् ॥ उक्तञ्च धर्म्मदत्तेन ।

"सवासनानां सभ्यानां रसस्यास्वादनं भवेत् ।
निर्व्वासनास्तु रङ्गान्तःकाष्ठकुड्याश्मसन्निभाः" ॥

इति ॥ ननु कथं रामादिरत्याद्युद्बोधकारणैः सीतादिभिः सामाजिकरत्याद्युद्बोध इत्युच्यते ।

(४०) व्यापारोऽस्ति विभावादेर्नाम्ना साधारणी कृतिः ।
तत्प्रभावेण यस्यासन् पाथोधिप्लवनादयः ॥
प्रमाता तदभेदेन स्वात्मानं प्रतिपद्यते ।

ननु कथं मनुष्यमात्रस्य समुद्रलङ्घनादावुत्साहोद्बोध इत्युच्यते ।

(४१) उत्साहादिसमुद्बोधः साधारण्याभिमानतः ॥
नृणामपि समुद्रादिलङ्घनादौ न दुष्यति ।

रत्यादयोऽपि साधारण्येन प्रतीयन्त इत्याह ।

(४२) साधारण्येन रत्यादिरपि तद्वत् प्रतीयते ॥

रत्यादेरपि स्वात्मगतत्वेन प्रतीतौ सभ्यानां व्रीडातङ्कादिर्भवेत् परगतत्वेन त्वरस्यतापातः ॥ विभावादयोऽपि प्रथमतः साधारण्येन प्रतीयन्त इत्याह ।

(४३) परस्य न परस्येति ममेति न ममेति च ॥
तदास्वादे विभावादेः परिच्छेदो न विद्यते।

ननु तथापि कथमेवमलौकिकत्वमेतेषां विभावादीनामित्युच्यते।

(४४) विभावनादिव्यापारमलौकिकमुपेयुषां ॥
अलौकिकत्वमेतेषां भूषणं न तु दूषणं।

आदिशब्दादनुभावनसञ्चारणे। तत्र विभावनं रत्यादेर्विशेषेणास्वादाङ्कुरणयोग्यतानयनं ॥ अनुभावनमेवम्भूतस्य रत्यादेः समनन्तरमेव रसादिरूपतया भावनं ॥ सञ्चारणं तथाभूतस्यैव तस्य सम्यक्चारणं ॥ विभावादीनां यथासङ्ख्यं कारणकार्य्यसहकारित्वे कथं त्रयाणामपि रसोद्बोधे कारणत्वमित्युच्यते।

(४५) कारणं कार्य्यसञ्चारि रूपा अपि हि लोकतः ॥
रसोद्बोधे विभावाद्याः कारणान्येव ते मताः।

ननु तर्हि कथं रसास्वादे तेषामेकः प्रतिभास इत्युच्यते।

(४६) प्रतीयमानः प्रथमं प्रत्येकं हेतुरुच्यते ॥
ततः सम्वलितः सर्व्वो विभावादिः सचेतसां।
प्रपानकरसन्यायाच्चर्व्यमाणो रसो भवेत् ॥

यथा खण्डमरिचादीनां सम्मेलनादपूर्व्व इव कश्चिदास्वादः प्रपानकरसे सञ्जायते विभावादिसम्मेलनादिहापि तथेत्यर्थः ॥ ननु यदि विभावानुभावव्यभिचारिभिर्म्मिलितैरेव रसस्तत् कथं एकस्य द्वयोर्वा सद्भावेऽपि स स्यादित्युच्यते।

(४७) सद्भावश्चेद्विभावादेर्द्वयोरेकस्य वा भवेत्।
झटित्यन्यसमाक्षेपे तदा दोषो न विद्यते॥

अन्यसमाक्षेपश्च प्रकरणादिवशात्। यथा।

"दीर्घाक्षं शरदिन्दुकान्ति वदनं बाहू नतावंसयोः
सङ्क्षिप्तं निबिडोन्नतस्तनमुरः पार्श्वे प्रमृष्टे इव।
मध्यः पाणिमितो नितम्बि जघनं पादावुदग्राङ्गुली
छन्दो नर्त्तयितुर्यथैव मनसः सृष्टं तथास्या वपुः"॥

अत्र मालविकामभिलषतोऽग्निमित्रस्य मालविकारूपविभावमात्रवर्णने सञ्चारिणामौत्सुक्यादीनामनुभावानाञ्च नयनविस्फारादीनामौचित्यादेवाक्षेपः। एवमन्याक्षेपेऽप्यूह्यं॥"अनुकार्य्यगतो रसः" इति वदतः प्रत्याह।

(४८) पारिमित्याल्लौकिकत्वात् सान्तरायतया तथा।
अनुकार्य्यस्य रत्यादेरुद्बोधो न रसो भवेत्॥

सीतादिदर्शनादिजो रामादिरत्याद्युद्बोधो हि परिमितो लौकिको नाट्यकाव्यदर्शनादेः सान्तरायश्च। तस्मात् कथं रसरूपतामियात्। रसस्यैतद्धर्म्मत्रितयविलक्षणधर्म्मकत्वात्॥ अनुकर्त्तृगतत्वञ्चास्य निरस्यति।

(५९) शिक्षाभ्यासादिमात्रेण राघवादेः स्वरूपतां।
दर्शयन् नर्त्तको नैव रसस्यास्वादको भवेत्॥

किञ्च।

(५०) काव्यार्थभावनेनायमपि सभ्यपदास्पदं।

यदि पुनर्नटोऽपि काव्यार्थभावनया रामादिरूपतामात्मनो दर्शयेत् तदा सोऽपि सभ्यमध्य एव गण्यते।

(५१) नायं ज्ञाप्यः स्वसत्तायां प्रतीत्यव्यभिचारतः॥

यो हि ज्ञाप्यो घटादिः स सन्नपि कदाचिदज्ञातो भवति। न ह्ययं तथा। प्रतीतिमन्तरेणाभावात्॥

(५२) यस्मादेष विभावादिसमूहालम्बनात्मकः।
तस्मान्न कार्य्यः

यदि रसः कार्य्यः स्यात् तदा विभावादिज्ञानकारणक एव स्यात्। ततश्च रसप्रतीतिकाले विभावादयो न प्रतीयेरन्। कारणज्ञानतत्कार्य्यज्ञानयोर्युगपदर्शनात्। न हि चन्दनस्पर्शज्ञानं तज्जन्यसुखज्ञानं चैकदा सम्भवति। रसस्य च विभावादिसमूहालम्बनात्मकतयैव प्रतीतेर्न विभावादिज्ञानकारणकत्वमित्यभिप्रायः॥

(५३) नो नित्यः पूर्व्वसंवेदनोज्झितः॥
असंवेदनकाले हि न भावोऽप्यस्य विद्यते।

न खलु नित्यस्य वस्तुनोऽसंवेदनकालेऽसम्भवो नापि भविष्यन्। साक्षादानन्दमयस्वप्रकाशरूपत्वात्। कार्य्यज्ञाप्यविलक्षणभावान् नो वर्त्तमानोऽपि॥

(५४) विभावादिपरामर्शविषयत्वात् सचेतसां॥
परानन्दमयत्वेन संवेद्यत्वादपि स्फुटं।

न निर्व्विकल्पकं ज्ञानं तस्य ग्राहकमिष्यते॥
तथाऽभिलापसंसर्गयोग्यत्वविरहान्न च।
सविकल्पकसंवेद्यः

सविकल्पकज्ञानसंवेद्यानां हि वचनप्रयोगयोग्यता न तु रसस्य। तथा।

(५५)　　साक्षात्कारतया न च॥
परोक्षस्तत्प्रकाशो नापरोक्षः शब्दसम्भवात्।

तत् कथय कीदृगस्य तत्त्वं॥ एवमश्रुतादृष्टपूर्व्वनिरूपणप्रकारस्येत्याह।

(५६) तस्मादलौकिकः सत्यं वेद्यः सहृदयैरयं॥

तत् किं पुनः प्रमाणं तस्य सद्भाव इत्याह।

(५७) प्रमाणं चर्व्वणैवात्र स्वाभिन्ने विदुषां मतं।

चर्व्वणाऽऽस्वादनं। तच्च "स्वादः काव्यार्थसम्भेदादात्मानन्दसमुद्भवः" इत्युक्तप्रकारं॥ ननु यदि रसो न कार्य्यस्तत् कथं महर्षिणा "विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः" इति लक्षणं कृतमित्युच्यते।

(५८) निष्पत्त्या चर्व्वणस्यास्य निष्पत्तिरुपचारतः॥

यद्यपि रसाभिन्नतया चर्व्वणस्यापि न कार्य्यत्वं तथापि तस्य कादाचित्कतया उपचरितेन कार्य्यत्वेन कार्य्यत्वमुपचर्य्यते॥

(५९) अवाच्यत्वादिकं तस्य वक्ष्ये व्यञ्जनरूपणे।

तस्य रसस्य। आदिशब्दादलक्ष्यत्वादि॥ ननु यदि

मिलिता रत्यादयो रसस्तत् कथमस्य प्रकाशत्वं कथं वाऽखण्ड-त्वमित्याह।

(६०) रत्यादिर्ज्ञानतादात्म्यादेव यस्माद्रसो भवेत्॥
अतोऽस्य स्वप्रकाशत्वमखण्डत्वञ्च सिध्यति।

यदि रत्यादिकं प्रकाशशरीरादतिरिक्तं स्यात् तदैवास्य स्वप्रकाशत्वं न सिध्येत्। न च तथा। तादात्म्याङ्गीकारात्। यदुक्तं। "यद्यपि रसानन्यतया चर्व्वणा न कार्य्या तथापि कादाचित्-कतया कार्य्यत्वमुपकल्प्य तदेकात्मन्यनादिवासनापरिणतिरूपे रत्यादिभागेऽपि व्यवहारः" इति। "सुखादितादात्म्याङ्गीकारे चास्माकं सिद्धान्तशय्यामधिशय्य दिव्यवर्षसहस्रं प्रमोदनिद्रा-मुपेयाः" इति च। "अभिन्नोऽपि स प्रमात्रा वासनोपनीतरत्या-दितादात्म्यगोचरीकृतः" इति च। ज्ञानस्य स्वप्रकाशत्वमनङ्गी कुर्व्वतामुपरि वेदान्तिभिरेव निपातनीयो दण्डः। तादात्म्यादे-वास्याखण्डत्वं। रत्यादयो हि प्रथममेकैकशः प्रतीयमानाः सर्व्वे ऽप्येकीभूताः स्फुरन्त एव रसतामापद्यन्ते॥ तदुक्तं।

"विभावा अनुभावास्च सात्त्विका व्यभिचारिणः।
प्रतीयमानाः प्रथमं खण्डशो यान्त्यखण्डतां"॥

इति। "परमार्थतस्त्वखण्ड एवायं वेदान्तप्रसिद्धब्रह्मतत्त्ववद्वेदि-तव्य इति च"॥ अथ के ते विभावानुभावव्यभिचारिण इत्य-पेक्षायां विभावमाह।

(६१) रत्याद्युद्बोधका लोके विभावाः काव्यनाट्ययोः॥

ये हि लोके रामादिगतरतिहासादीनामुद्बोधकारणानि

सीतादयस्त एव काव्ये नाट्ये च निवेशिताः सन्तो "विभाव्यन्ते आस्वादाङ्कुरप्रादुर्भावयोग्याः क्रियन्ते सामाजिकरत्यादिभावा एभिः" इति विभावा उच्यन्ते ॥ तदुक्तं भर्तृहरिणा।

"शब्दोपहितरूपांस्तान् बुद्धेर्विषयतां गतान्।
प्रत्यक्षानिव कंसादीन् साधनत्वेन मन्यते" ॥

इति। तद्भेदावाह।

(६२) आलम्बनोद्दीपनाख्यौ तस्य भेदावुभौ स्मृतौ॥

स्पष्टं॥ तत्र।

(६३) आलम्बनं नायकादिस्तमालम्ब्य रसोद्गमात्।

आदिशब्दान्नायिकाप्रतिनायकादयः। अत्र यो यस्य विभावः स तत्स्वरूपवर्णने वक्ष्यते॥ तत्र नायकः।

(६४) त्यागी कृती कुलीनः सुश्रीको रूपयौवनोत्साही॥
दक्षोऽनुरक्तलोकस्तेजोवैदग्ध्यशीलवान् नेता।

दक्षः क्षिप्रकारी। शीलं सद्वृत्तं। एवमादिगुणसम्पन्नो नेता नायको भवति॥ तद्भेदानाह।

(६५) धीरोदात्तो धीरोद्धतस्तथा धीरललितश्च॥
धीरप्रशान्त इत्ययमुक्तः प्रथमश्चतुर्भेदः।

स्पष्टं। अथ धीरोदात्तः।

(६६) अविकत्थनः क्षमावानतिगम्भीरो महासत्त्वः॥
स्थेयान् निगूढमानो धीरोदात्तो दृढव्रतः कथितः।

अविकत्थनोऽनात्मश्लाघाकरः। महासत्त्वो हर्षशोकाद्यन-

भिभूतस्वभावः। निगूढमानो विनयच्छन्नगर्व्वः। दृढव्रतोऽङ्गी-कृतनिर्व्वाहकः। यथा रामयुधिष्ठिरादिः॥ अथ धीरोद्धतः।

(६७) मायापरः प्रचण्डश्चपलोऽहङ्कारदर्पभूयिष्ठः॥
आत्मश्लाघानिरतो धीरैर्धीरोद्धतः कथितः।

यथा भीमसेनादिः॥ अथ धीरललितः।

(६८) निश्चिन्तो मृदुरनिशं कलापरो धीरललितः स्यात्॥

कला नृत्यादिका। यथा रत्नावल्यादौ वत्सराजादिः॥ अथ धीरप्रशान्तः।

(६९) सामान्यगुणैर्भूयान् द्विजादिको धीरप्रशान्तः स्यात्।

यथा मालतीमाधवादौ माधवादिः॥ एषाञ्च शृङ्गारिरूपत्वे भेदानाह।

(७०) एभिर्दक्षिणधृष्टानुकूलशठरूपिभिस्तु षोडशधा।

तत्र तेषां धीरोदात्तादीनां प्रत्येकं दक्षिणधृष्टानुकूलशठत्वेन षोडशप्रकारो नायकः॥

(७१) एषु त्वनेकमहिलासु समरागो दक्षिणः कथितः॥

दयोस्त्रिचतुःप्रभृतिषु नायिकासु तुल्यानुरागो दक्षिणनायकः। यथा।

"स्नाता तिष्ठति कुन्तलेश्वरसुता वारोऽङ्गराजस्वसुर्
द्यूतैर्रात्रिरियं जिता कमलया देवी प्रसाद्याद्य च।
इत्यन्तःपुरसुन्दरीः प्रति मया विज्ञाय विज्ञापिते
देवेनाऽप्रतिपत्तिमूढमनसा द्वित्राः स्थितं नाडिकाः"॥

(७२) कृतागा अपि निःशङ्कस्तर्जितोऽपि न लज्जितः ।
दृष्टदोषोऽपि मिथ्यावाक् कथितो धृष्टनायकः ॥

यथा मम ।

"शोणं वीक्ष्य मुखं विचुम्बितुमहं यातः समीपं ततः
पादेन प्रहृतं तया सपदि तं धृत्वा सहासे मयि ।
किञ्चित् तत्र विधातुमक्षमतया बाष्पं त्यजन्त्याः सखे
ध्यातश्चेतसि कौतुकं वितनुते कोपोऽपि वामभ्रुवः" ॥

(७३) अनुकूल एकनिरतः

एकस्यामेव नायिकायामासक्तोऽनुकूलनायकः । यथा ।

"अस्माकं सखि वाससी न रुचिरे ग्रैवेयकं नोज्ज्वलं
नो वक्रा गतिरुद्धतं न हसितं नैवास्ति कश्चिन्मदः ।
किन्त्वन्येऽपि जना वदन्ति सुभगोऽप्यस्याः प्रियो नान्यतो
दृष्टिं निक्षिपतीति विश्वमियता मन्यामहे दुःखितं" ॥

(७४) शठोऽयमेकत्र बद्धभावो यः ।
दर्शितबहिरनुरागो विप्रियमन्यत्र गूढमाचरति ॥

यः पुनरेकस्यामेव नायिकायां बद्धभावो द्वयोरपि नायिकयोर्बहिर्दर्शितानुरागोऽन्यस्यां नायिकायां गूढं विप्रियमाचरति स शठनायकः । यथा ।

"शठान्यस्याः काञ्चीमणिरणितमाकर्ण्य सहसा
यदाश्लिष्यन्नेव प्रशिथिलभुजग्रन्थिरभवः ।
तदेतत् क्वाचक्षे घृतमधुमयत्वद्बहुवचो-
विषेणाघूर्णन्ती किमपि न सखी मे गणयति" ॥

(७५) एषाञ्च त्रैविध्यात् सर्व्वेषामुत्तममध्याधमत्वेन ।
उक्ता नायकभेदाश्चत्वारिंशत्तथाऽष्टौ च ॥

सर्व्वेषामुक्तषोडशभेदानां ॥ अथ प्रसङ्गादेतेषां सहायानाह ।

(७६) दूरानुवर्त्तिनि स्यात् तस्य प्रासङ्गिकेतिवृत्ते तु ।
किञ्चित्तद्गुणहीनः सहाय एवास्य पीठमर्द्दाख्यः ॥

तस्य नायकस्य बहुव्यापिनि प्रसङ्गसङ्गते इतिवृत्तेऽनन्तरो-क्तैर्नायकसामान्यगुणैः किञ्चिदूनः पीठमर्द्दनामा सहायो भवति।
यथा रामचन्द्रादीनां सुग्रीवादयः ॥ अथ शृङ्गारसहायाः ।

(७७) शृङ्गारस्य सहाया विटचेटविदूषकाद्याः स्युः ।
भक्ता नर्म्मसु निपुणाः कुपितवधूमानभञ्जनाः शुद्धाः ॥

आदिशब्दान्मालाकाररजकताम्बूलिकगान्धिकादयः॥ तत्र विटः।

(७८) सम्भोगहीनसम्पद् विटस्तु धूर्त्तः कलैकदेशज्ञः ।
वेशोपचारकुशलो वाग्मी मधुरोऽथ बहुमतो गोष्ठ्यां ॥

चेटः प्रसिद्ध एव ।

(७९) कुसुमवसन्ताद्यभिधः कर्म्मवपुर्वेशभाषाद्यैः ।
हास्यकरः कलहरतिर्विदूषकः स्यात् स्वकर्म्मज्ञः ॥

स्वकर्म्म भोजनादि ॥ अर्थचिन्तनसहायमाह ।

(८०) मन्त्री स्यादर्थचिन्तायामर्थास्तन्त्रावपादयः ।

यत्तच सहायकथनप्रस्तावे "मन्त्री स्वं चोभयं वापि सखा तस्यार्थचिन्तने" इति केनचिल्लक्षणं कृतं तदपि राज्ञोऽर्थचिन्ता-नोपायलक्षणप्रकरणे लक्षितव्यं न तु सहायकथनप्रकरणे नाय-

कस्य । "अर्थचिन्तने मन्त्री सहायः" इत्युक्तेऽपि नायकस्यार्थत एव सिद्धत्वात्। यदुक्तं "मन्त्रिणा ललितः शेषा मन्त्रिस्वायत्तसिद्धयः" इति * तदपि ललितपदकथनेनैव धीरललितस्य मन्त्रिमात्रायत्तार्थचिन्तनोपपत्तेर्गतार्थं । न चार्थचिन्तने तस्य मन्त्री सहायः किन्तु स्वयमेव निष्पादकः । तस्यार्थचिन्तनाद्यभावात् ॥ अथान्तःपुरसहायाः । तदवरोधे ।

(८१) वामनषण्ढकिरातम्लेच्छाभीराः शकारकुब्जाद्याः ॥
मदमूर्खताभिमानी दुष्कुलतैश्वर्य्यसंयुक्तः ।
सोऽयमनूढाभ्राता राज्ञः श्यालः शकार इत्युक्तः ॥

आद्यशब्दान्मूकादयः । तत्र षण्ढवामनकिरातकुब्जादयो यथा रत्नावल्यां ।

"नष्टं वर्षवरैर्मनुष्यगणनाभावादपास्य त्रपा-
मन्तः कञ्चुकिकञ्चुकस्य विशति त्रासादयं वामनः ।
पर्य्यन्ताश्रयिभिर्निजस्य सदृशं नाम्नः किरातैः कृतं
कुब्जा नीचतयैव यान्ति शनकैरात्मेक्षणाशङ्किनः" ॥

शकारो मृच्छकटिकादिषु प्रसिद्धः । अन्येऽपि यथा दर्शनं ज्ञातव्याः ॥ अथ दण्डसहायाः ।

---

* मन्त्रिणेति । आयत्तसिद्धिरित्यन्वयः । ललितो धीरललितः । शेषा धीरोदात्तादयः । ललितपदेति । निश्चिन्त इति धीरललितलक्षणविशिष्टेन तस्यार्थचिन्ताद्यभावः । तेन च मन्त्रिमात्रायत्तार्थसिद्धित्वं प्रतीयते इति भावः ॥ इत्यादिविवरणदर्शनेन अस्य ग्रन्थस्य प्रथमैकवचनान्तत्वेन ग्रहणस्य चतुर्थ्येकवचनान्तत्वसिद्धये इति पदस्य च मुद्रितपूर्व्वस्वादि चलाचरत्वं हेयत्वं च प्रतीयते ॥

(८२) दण्डेषु सुहृत्कुमाराटविकाः सामन्तसैनिकाद्याश्च।

दुष्टनिग्रहो दण्डः स्पष्टं॥ अथ धर्म्मसहायाः।

(८३) ऋत्विक्पुरोधसः स्युर्ब्रह्मविदस्तापसास्तथा धर्म्मे॥

ब्रह्मविदो वेदविद आत्मविदो वा। तत्र।

(८४) उत्तमाः पीठमर्द्दाद्याः

आद्यशब्दाग्निपुरोहितादयः।

(८५) मध्यौ विटविदूषकौ।

तथा शकारचेटाद्या अधमाः परिकीर्त्तिताः॥

आद्यशब्दात्ताम्बूलिकगान्धिकादयः॥ अथ प्रसङ्गाद् दूतानां विभागगर्भलक्षणमाह।

(८६) निसृष्टार्थो मितार्थश्च तथा सन्देशहारकः।

कार्य्यप्रेष्यस्त्रिधा दूतो दूत्यश्चापि तथाविधाः॥

तत्र कार्य्यप्रेष्यो दूत इति लक्षणं। तत्र।

(८७) उभयोर्भावमुन्नीय स्वयं वदति चोत्तरं।

सुश्लिष्टं कुरुते कार्य्यं निसृष्टार्थस्तु संस्मृतः॥

उभयोरिति येन प्रेषितो यदन्तिकं प्रेषितश्च॥

(८८) मितार्थभाषी कार्य्यस्य सिद्धिकारी मितार्थकः।

यावद्भाषितसन्देशहारः सन्देशहारकः॥

अथ सात्त्विका नायकगुणाः।

(८९) शोभा विलासो माधुर्य्यं गाम्भीर्य्यं धैर्य्यतेजसी।

ललितौदार्य्यमित्यष्टौ सत्त्वजाः पौरुषा गुणाः॥

तत्र।

(९०) शूरता दक्षता सत्यं महोत्साहोऽनुरागिता।
नीचे घृणाऽधिके स्पर्द्धा यतः शोभेति तां विदुः॥

तत्रानुरागिता यथा।

"अहमेव मतो महीपतेरिति सर्व्वः प्रकृतिष्वचिन्तयत्।
उदधेरिव निम्नगाशतेष्वभवन् नास्य विमानना क्वचित्"॥

एवमन्यत्रापि॥ अथ विलासः।

(९१) धीरा दृष्टिर्गतिश्चित्रा विलासे सस्मितं वचः।

यथा।

"दृष्टिस्तृणीकृतजगत्त्रयसत्त्वसारा
धीरोद्धता नमयतीव गतिर्धरित्रीं।
कौमारकेऽपि गिरिवद्गुरुतान्दधानो
वीरो रसः किमयमित्युत दर्प एषः"॥

(९२) सङ्क्षोभेष्वप्यनुद्वेगो माधुर्य्यं परिकीर्त्तितं॥

ऊह्यमुदाहरणं॥

(९३) भीशोकक्रोधहर्षाद्यैर्गाम्भीर्य्यं निर्व्विकारता।

यथा।

"आहूतस्याभिषेकाय विसृष्टस्य वनाय च।
न मया लक्षितस्तस्य स्वल्पोऽप्याकारविभ्रमः"॥

(९४) व्यवसायादचलनं धैर्य्यं विघ्ने महत्यपि॥

यथा।

"श्रुताप्सरोगीतिरपि क्षणेऽस्मिन्
हरः प्रसङ्ख्यानपरो बभूव ।
आत्मेश्वराणां न हि जातु विघ्नाः
समाधिभेदप्रभवो भवन्ति" ॥

(९५) अधिक्षेपापमानादेः प्रयुक्तस्य परेण यत् ।
प्राणात्ययेऽप्यसहनं तत्तेजः समुदाहृतं ॥
वाग्वेशयोर्मधुरता तद्वच्छृङ्गारचेष्टितं ललितं ।
दानं सप्रियभाषणमौदार्य्यं शत्रुमित्रयोः समता ॥

एषामप्युदाहरणान्यूह्यानि ॥

(९६) अथ नायिका त्रिविधा स्वाऽन्या साधारणस्त्रीति ।
नायकसामान्यगुणैर्भवति यथासम्भवैर्युक्ता ॥

नायिका पुनर्नायकसामान्यगुणैस्त्यागादिभिर्यथासम्भवैर्युक्ता भवति । सा च स्वस्त्री अन्यस्त्री साधारणस्त्रीति त्रिविधा ॥ तत्र स्वस्त्री ।

(९७) विनयार्ज्जवादियुक्ता गृहकर्म्मपरा पतिव्रता स्वीया ।

यथा ।

"लज्जापज्जत्तपसाहणाइं परतत्तिणिप्पिवासाइं ।
अविणयदुम्मेहाइं धन्नाणं घरे कलत्ताइं" * ॥

(९८) सापि कथिता त्रिविधा मुग्धा मध्या प्रगल्भेति ।

तत्र ।

* लज्जापर्य्याप्तप्रसाधनानि परभर्तृनिष्पिपासानि ।
अविनयदुर्मेधांसि धन्यानां गृहे कलत्राणि ॥ स० । टी० ॥

(९९) प्रथमावतीर्णयौवनमदनविकारा रतौ वामा।
कथिता मृदुश्च माने समधिकलज्जावती मुग्धा॥

तत्र प्रथमावतीर्णयौवना यथा मम तातपादानाम्।

"मध्यस्य प्रथिमानमेति जघनं वक्षोजयोर्मन्दतां
दूरं यात्युदरस्य रोमलतिका नेत्रार्जवं धावति।
कन्दर्पं परिवीक्ष्य नूतनमनोराज्याभिषिक्तं क्षणाद्
अङ्गानीव परस्परं विदधते निर्लुण्ठनं सुभ्रुवः"॥

प्रथमावतीर्णमदनविकारा यथा मम प्रभावतीपरिणये।

"दत्ते सालसमन्थरं भुवि पदं निर्याति नान्तःपुरान्
नोद्दामं हसति क्षणात् कलयते ह्रीयन्त्रणां कामपि।
किञ्चिद्भावगभीरवक्रिमलवस्पृष्टं मनाग्भाषते
सभ्रूभङ्गमुदीक्षते प्रियकथामुल्लापयन्तीं सखीं"॥

रतौ वामा यथा।

"दृष्टा दृष्टिमधो ददाति कुरुते नालापमाभाषिता
शय्यायां परिवृत्य तिष्ठति बलादालिङ्गिता वेपते।
निर्यान्तीषु सखीषु वासभवनान्निर्गन्तुमेवेहते
जाता वामतयैव सम्प्रति मम प्रीत्यै नवोढा प्रिया"॥

माने मृदुर्यथा।

"सा पत्युः प्रथमापराधसमये सख्योपदेशं विना
नो जानाति सविभ्रमाङ्गवलना वक्रोक्तिसंसूचनं।
स्वच्छैरच्छकपोलमूलगलितैः पर्यस्तनेत्रोत्पला
बाला केवलमेव रोदिति लुठल्लोलालकैरश्रुभिः"

समधिकलज्जावती यथा "दत्ते सालससमन्थरमित्यत्र श्लोके" ॥

अत्र समधिकलज्जावत्त्वेनापि लब्धाया रतिवामताया विच्छित्तिविशेषवत्तया पुनः कथनं ॥ अथ मध्या।

(१००) मध्या विचित्रसुरता प्ररूढस्मरयौवना।
ईषत्प्रगल्भवचना मध्यमव्रीडिता मता ॥

तत्र विचित्रसुरता यथा।

"कान्ते तथा कथमपि प्रथितं मृगाक्ष्या
चातुर्य्यमुद्धतमनोभवया रतेषु।
तत्कूजितान्यनुवदद्भिरनेकवारं
शिष्यायितं गृहकपोतशतैर्यथास्याः" ॥

प्ररूढस्मरा यथाऽत्रैवोदाहरणे ॥ प्ररूढयौवना यथा मम।

"नेत्रे खञ्जनगञ्जने सरसिजप्रत्यर्थि पाणिद्वयं
वक्षोजौ करिकुम्भविभ्रमकरीमत्युन्नतिं गच्छतः।
कान्तिः काञ्चनचम्पकप्रतिनिधिर्व्वाणी सुधास्पर्द्धिनी
स्मेरेन्दीवरदामसोदरवपुस्तस्याः कटाक्षच्छटा" ॥

एवमन्यत्रापि ॥ अथ प्रगल्भा।

(१०१) स्मरान्धा गाढतारुण्या समस्तरतकोविदा।
भावोन्नता दरव्रीडा प्रगल्भाऽऽक्रान्तनायका ॥

स्मरान्धा यथा।

"धन्यासि या कथयसि प्रियसङ्गमेऽपि
विश्रब्धचाटुकशतानि रतान्तरेषु।

न निर्व्विकल्पकं ज्ञानं तस्य ग्राहकमिष्यते॥
तथाऽभिलापसंसर्गयोग्यत्वविरहान्न च।
सविकल्पकसंवेद्यः

सविकल्पकज्ञानसंवेद्यानां हि वचनप्रयोगयोग्यता न तु रसस्य। तथा।

(५५) साक्षात्कारतया न च॥
परोक्षस्तत्प्रकाशो नापरोक्षः शब्दसम्भवात्।

तत् कथय कीदृगस्य तत्त्वं॥ एवमश्रुतादृष्टपूर्व्वनिरूपणप्रकारस्येत्याह।

(५६) तस्मादलौकिकः सत्यं वेद्यः सहृदयैरयं॥

तत् किं पुनः प्रमाणं तस्य सद्भाव इत्याह।

(५७) प्रमाणं चर्व्वणैवात्र स्वाभिन्ने विदुषां मतं।

चर्व्वणाऽऽस्वादनं। तच्च "स्वादः काव्यार्थसम्भेदादात्मानन्दसमुद्भवः" इत्युक्तप्रकारं॥ ननु यदि रसो न कार्य्यस्तत् कथं महर्षिणा "विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः" इति लक्षणं कृतमित्युच्यते।

(५८) निष्पत्त्या चर्व्वणस्यास्य निष्पत्तिरुपचारतः॥

यद्यपि रसाभिन्नतया चर्व्वणस्यापि न कार्य्यत्वं तथापि तस्य कादाचित्कतया उपचरितेन कार्य्यत्वेन कार्य्यत्वमुपचर्य्यते॥

(५९) अवाच्यत्वादिकं तस्य वक्ष्ये व्यञ्जनरूपणे।

तस्य रसस्य। आदिशब्दाल्लक्ष्यत्वादि॥ ननु यदि

मिलिता रत्यादयो रसस्तत् कथमस्य प्रकाशत्वं कथं वाऽखण्ड-त्वमित्याह।

(६०) रत्यादिज्ञानतादात्म्यादेव यस्माद्रसो भवेत्॥
अतोऽस्य स्वप्रकाशत्वमखण्डत्वञ्च सिद्धति।

यदि रत्यादिकं प्रकाशशरीरादतिरिक्तं स्यात् तदैवास्य स्वप्रकाशत्वं न सिद्धेत्। न च तथा। तादात्म्याङ्गीकारात्। यदुक्तं। "यद्यपि रसानन्यतया चर्व्वणा न कार्य्या तथापि कादाचित्-कतया कार्य्यत्वमुपकल्प्य तदेकात्मन्यनादिवासनापरिणतिरूपे रत्यादिभागेऽपि व्यवहारः" इति। "सुखादितादात्म्याङ्गीकारे चास्माकीं सिद्धान्तशय्यामधिशय्य दिव्यवर्षसहस्रं प्रमोदनिद्रा-मुपेयाः" इति च। "अभिन्नोऽपि स प्रमात्रा वासनोपनीतरत्या-दितादात्म्यगोचरीकृतः" इति च। ज्ञानस्य स्वप्रकाशत्वमनङ्गी कुर्व्वतामुपरि वेदान्तिभिरेव निपातनीयो दण्डः। तादात्म्यादे-वास्याखण्डत्वं। रत्यादयो हि प्रथममेकैकशः प्रतीयमानाः सर्व्वे ऽप्येकीभूताः स्फुरन्त एव रसतामापद्यन्ते॥ तदुक्तं।

"विभावा अनुभावाश्च सात्त्विका व्यभिचारिणः।
प्रतीयमानाः प्रथमं खण्डशो यान्त्यखण्डतां"॥

इति। "परमार्थतस्त्वखण्ड एवायं वेदान्तप्रसिद्धब्रह्मतत्त्ववद्वेदि-तव्य इति च"॥ अथ के ते विभावानुभावव्यभिचारिण इत्य-पेक्षायां विभावमाह।

(६१) रत्याद्युद्बोधका लोके विभावाः काव्यनाट्ययोः॥

ये हि लोके रामादिगतरतिहासादीनामुद्बोधकारणानि

सीतादयस्त एव काव्ये नाट्ये च निवेशिताः सन्तो "विभाव्यन्ते आस्वादाङ्कुरप्रादुर्भावयोग्याः क्रियन्ते सामाजिकरत्यादिभावा एभिः" इति विभावा उच्यन्ते ॥ तदुक्तं भर्तृहरिणा।

"शब्दोपहितरूपांस्तान् बुद्धेर्विषयतां गतान्।
प्रत्यक्षानिव कंसादीन् साधनत्वेन मन्यते" ॥

इति। तद्भेदावाह।

(६२) आलम्बनोद्दीपनाख्यौ तस्य भेदावुभौ स्मृतौ ॥

स्पष्टं ॥ तत्र।

(६३) आलम्बनं नायकादिस्तमालम्ब्य रसोद्गमात्।

आदिशब्दान्नायिकाप्रतिनायकादयः। अत्र यो यस्य विभावः स तत्स्वरूपवर्णने वक्ष्यते ॥ तत्र नायकः।

(६४) त्यागी कृती कुलीनः सुश्रीको रूपयौवनोत्साही ॥
दक्षोऽनुरक्तलोकस्तेजोवैदग्ध्यशीलवान् नेता।

दक्षः क्षिप्रकारी। शीलं सद्वृत्तं। एवमादिगुणसम्पन्नो नेता नायको भवति ॥ तद्भेदानाह।

(६५) धीरोदात्तो धीरोद्धतस्तथा धीरललितश्च ॥
धीरप्रशान्त इत्ययमुक्तः प्रथमश्चतुर्भेदः।

स्पष्टं। अत्र धीरोदात्तः।

(६६) अविकत्थनः क्षमावानतिगम्भीरो महासत्त्वः ॥
स्थेयान् निगूढमानो धीरोदात्तो दृढव्रतः कथितः।

अविकत्थनोऽनात्मश्लाघाकरः। महासत्त्वो हर्षशोकाद्यन-

भिभूतस्वभावः। निगूढमानो विनयच्छन्नगर्व्वः। दृढव्रतोऽङ्गी-
कृतनिर्व्वाहकः। यथा रामयुधिष्ठिरादिः॥ अथ धीरोद्धतः।

(६७) मायापरः प्रचण्डश्चपलोऽहङ्कारदर्पभूयिष्ठः॥
आत्मश्लाघानिरतो धीरैर्धीरोद्धतः कथितः।

यथा भीमसेनादिः॥ अथ धीरललितः।

(६८) निश्चिन्तो मृदुरनिशं कलापरो धीरललितः स्यात्॥

कला नृत्यादिका। यथा रत्नावल्यादौ वत्सराजादिः॥ अथ
धीरप्रशान्तः।

(६९) सामान्यगुणैर्भूयान् द्विजादिको धीरप्रशान्तः स्यात्।

यथा मालतीमाधवादौ माधवादिः॥ एषाञ्च शृङ्गारिरूपत्वे
भेदानाह।

(७०) एभिर्दक्षिणधृष्टानुकूलशठरूपिभिस्तु षोडशधा।

तत्र तेषां धीरोदात्तादीनां प्रत्येकं दक्षिणधृष्टानुकूलशठत्वेन
षोडशप्रकारो नायकः॥

(७१) एषु त्वनेकमहिलासु समरागो दक्षिणः कथितः॥

द्वयोस्त्रिचतुःप्रभृतिषु नायिकासु तुल्यानुरागो दक्षिणनायकः।
यथा।

"स्नाता तिष्ठति कुन्तलेश्वरसुता वारोऽङ्गराजस्वसुर्
द्यूतैर्रात्रिरियं जिता कमलया देवी प्रसाद्याद्य च।
इत्यन्तःपुरसुन्दरीः प्रति मया विज्ञाय विज्ञापिते
देवेनाऽप्रतिपत्तिमूढमनसा द्वित्राः स्थितं नाडिकाः"॥

(७२) कृतागा अपि निःशङ्कस्तर्जितोऽपि न लज्जितः।
दृष्टदोषोऽपि मिथ्यावाक् कथितो धृष्टनायकः॥

यथा मम।

"शोणं वीक्ष्य मुखं विचुम्बितुमहं यातः समीपं ततः
पादेन प्रहृतं तया सपदि तं धृत्वा सहासे मयि।
किञ्चित् तत्र विधातुमक्षमतया वाष्पं त्यजन्त्याः सखे
ध्यातश्चेतसि कौतुकं वितनुते कोपोऽपि वामभ्रुवः"॥

(७३) अनुकूल एकनिरतः

एकस्यामेव नायिकायामासक्तोऽनुकूलनायकः। यथा।

"अस्माकं सखि वाससी न रुचिरे ग्रैवेयकं नोज्ज्वलं
नो वक्रा गतिरुद्धतं न हसितं नैवास्ति कश्चिन्मदः।
किन्त्वन्येऽपि जना वदन्ति सुभगोऽप्यस्याः प्रियो नान्यतो
दृष्टिं निक्षिपतीति विश्वमियता मन्यामहे दुःखितं"॥

(७४) शठोऽयमेकत्र बद्धभावो यः।
दर्शितबहिरनुरागो विप्रियमन्यत्र गूढमाचरति॥

यः पुनरेकस्यामेव नायिकायां बद्धभावो द्वयोरपि नायिकयोर्वहिर्दर्शितानुरागोऽन्यस्यां नायिकायां गूढं विप्रियमाचरति स शठनायकः। यथा।

"शठोऽन्यस्याः काञ्चीमणिरणितमाकर्ण्य सहसा
यदाश्लिष्यन्नेव प्रशिथिलभुजग्रन्थिरभवः।
तदेतत् क्वाचक्षे घृतमधुमयत्वद्बहुवचो-
विषेणाघूर्णन्ती किमपि न सखी मे गणयति"॥

(७५) एषाञ्च त्रैविध्यात् सर्व्वेषामुत्तममध्याधमत्वेन।
उक्ता नायकभेदाश्चत्वारिंशत्तथाऽष्टौ च॥

सर्व्वेषामुक्तषोडशभेदानां॥ अथ प्रसङ्गादेतेषां सहायानाह।

(७६) दूरानुवर्त्तिनि स्यात् तस्य प्रासङ्गिकेतिवृत्ते तु।
किञ्चित्तद्गुणहीनः सहाय एवास्य पीठमर्द्दाख्यः॥

तस्य नायकस्य बहुव्यापिनि प्रसङ्गसङ्गते इतिवृत्तेऽनन्तरोक्तैर्नायकसामान्यगुणैः किञ्चिदूनः पीठमर्द्दनामा सहायो भवति। यथा रामचन्द्रादीनां सुग्रीवादयः॥ अथ शृङ्गारसहायाः।

(७७) शृङ्गारस्य सहाया विटचेटविदूषकाद्याः स्युः।
भक्ता नर्म्मसु निपुणाः कुपितवधूमानभञ्जनाः शुद्धाः॥

आदिशब्दान्मालाकाररजकताम्बूलिकगान्धिकादयः॥ तत्र विटः।

(७८) सम्भोगहीनसम्पद् विटस्तु धूर्त्तः कलैकदेशज्ञः।
वेशोपचारकुशलो वाग्मी मधुरोऽथ बहुमतो गोष्ठ्यां॥

चेटः प्रसिद्ध एव।

(७९) कुसुमवसन्ताद्यभिधः कर्म्मवपुर्वेशभाषाद्यैः।
हास्यकरः कलहरतिर्विदूषकः स्यात् स्वकर्म्मज्ञः॥

स्वकर्म भोजनादि॥ अर्थचिन्तनसहायमाह।

(८०) मन्त्री स्यादर्थचिन्तायामर्थास्तत्त्वावपादयः।

यत्तु सहायकथनप्रस्तावे "मन्त्री स्वं वोभयं वापि सखा तस्यार्थचिन्तने" इति केनचिल्लक्षणं कृतं तदपि राज्ञोऽर्थचिन्तनोपायलक्षणप्रकरणे लक्षितव्यं न तु सहायकथनप्रकरणे नाय-

कस्य। “अर्थचिन्तने मन्त्री सहायः” इत्युक्तेऽपि नायकस्यार्थत एव सिद्धत्वात्। यदुक्तं “मन्त्रिणा ललितः शेषा मन्त्रिस्वायत्तसिद्धयः” इति * तदपि स्वलक्षणकथनेनैव धीरललितस्य मन्त्रिमात्रायत्तार्थचिन्तनोपपत्तेर्गतार्थं । न चार्थचिन्तने तस्य मन्त्री सहायः किन्तु स्वयमेव निष्पादकः । तस्यार्थचिन्तनाद्यभावात् ॥ अथान्तःपुरसहायाः । तदवरोधे ।

(८१) वामनषण्ढकिरातम्लेच्छाभीराः शकारकुब्जाद्याः ॥
मदमूर्खताभिमानी दुष्कुलतैश्वर्य्यसंयुक्तः ।
सोऽयमनूढाभ्राता राज्ञः श्यालः शकार इत्युक्तः ॥

आद्यशब्दान्मूकादयः । तत्र षण्ढवामनकिरातकुब्जादयो यथा रत्नावल्यां ।

“नष्टं वर्षवरैर्मनुष्यगणनाभावादपास्य त्रपा-
मन्तः कञ्चुकिकञ्चुकस्य विशति त्रासादयं वामनः ।
पर्य्यन्ताश्रयिभिर्निजस्य सदृशं नाम्नः किरातैः कृतं
कुब्जा नीचतयैव यान्ति शनकैरात्मेक्षणाशङ्किनः”॥

शकारो मृच्छकटिकादिषु प्रसिद्धः । अन्येऽपि यथा दर्शनं ज्ञातव्याः ॥ अथ दण्डसहायाः ।

---

* मन्त्रिणेति। आयत्तसिद्धिरित्यन्वयः। ललितो धीरललितः। शेषा धीरोदात्तादयः। स्वलक्षणेति। निश्चिन्त इति धीरललितलक्षणविशिष्टेन तस्यार्थचिन्ताद्यभावः। तेन च मन्त्रिमात्रायत्तार्थसिद्धित्वं प्रतीयते इति भावः॥ इत्यादिविवरणदर्शनेन अस्यांशस्य प्रथमैकवचनान्तशेषशब्दस्य चतुर्थ्येकवचनान्तसिद्धये इति पदस्य च मुद्रितपूर्व्वस्यापि अनादरत्वं हेयत्वं च प्रतीयते॥

(८२) दण्डेषु सुहृत्कुमाराटविकाः सामन्तसैनिकाद्याश्च।

दुष्टनिग्रहो दण्डः स्पष्टं॥ अथ धर्म्मसहायाः।

(८३) ऋत्विक्पुरोधसः स्युर्ब्रह्मविदस्तापसास्तथा धर्म्मे॥

ब्रह्मविदो वेदविद आत्मविदो वा। तत्र।

(८४) उत्तमाः पीठमर्द्दाद्याः

आद्यशब्दाग्निपुरोहितादयः।

(८५) मध्यौ विटविदूषकौ।

तथा शकारचेटाद्या अधमाः परिकीर्त्तिताः॥

आद्यशब्दात्ताम्बूलिकगान्धिकादयः॥ अथ प्रसङ्गाद् दूतानां विभागगर्भलक्षणमाह।

(८६) निसृष्टार्थो मितार्थश्च तथा सन्देशहारकः।

कार्य्यप्रेष्यस्त्रिधा दूतो दूत्यश्चापि तथाविधाः॥

तत्र कार्य्यप्रेष्यो दूत इति लक्षणं। तत्र।

(८७) उभयोर्भावमुन्नीय स्वयं वदति चोत्तरं।

सुश्लिष्टं कुरुते कार्य्यं निसृष्टार्थस्तु संस्मृतः॥

उभयोरिति येन प्रेषितो यदन्तिकं प्रेषितश्च॥

(८८) मितार्थभाषी कार्य्यस्य सिद्धिकारी मितार्थकः।

यावद्भाषितसन्देशहारः सन्देशहारकः॥

अथ सात्त्विका नायकगुणाः।

(८९) शोभा विलासो माधुर्य्यङ्गाम्भीर्य्यं धैर्य्यतेजसी।

ललितौदार्य्यमित्यष्टौ सत्त्वजाः पौरुषा गुणाः॥

तच।

(९०) शूरता दक्षता सत्यं महोत्साहोऽनुरागिता।
नीचे घृणाऽधिके स्पर्द्धा यतः शोभेति तां विदुः॥

तत्रानुरागिता यथा।

"अहमेव मतो महीपतेरिति सर्व्वः प्रकृतिष्वचिन्तयत्।
उदधेरिव निम्नगाशतेष्वभवन् नास्य विमानना क्वचित्"॥

एवमन्यत्रापि॥ अथ विलासः।

(९१) धीरा दृष्टिर्गतिश्चित्रा विलासे सस्मितं वचः।

यथा।

"दृष्टिस्तृणीकृतजगत्त्रयसत्त्वसारा
धीरोद्धता नमयतीव गतिर्धरित्रीं।
कौमारकेऽपि गिरिवद्गुरुतान्दधानो
वीरो रसः किमयमित्युत दर्प एषः"॥

(९२) सङ्क्षोभेष्वप्यनुद्वेगो माधुर्य्यं परिकीर्त्तितं॥

ऊह्यमुदाहरणं॥

(९३) भीशोकक्रोधहर्षाद्यैर्गाम्भीर्य्यं निर्व्विकारता।

यथा।

"आहूतस्याभिषेकाय विसृष्टस्य वनाय च।
न मया लक्षितस्तस्य स्वल्पोऽप्याकारविभ्रमः"॥

(९४) व्यवसायादचलनं धैर्य्यं विघ्ने महत्यपि॥

यथा।

"श्रुताप्सरोगीतिरपि क्षणेऽस्मिन्
हरः प्रसङ्ख्यानपरो बभूव।
आत्मेश्वराणां न हि जातु विघ्नाः
समाधिभेदप्रभवो भवन्ति" ॥

(९५) अधिक्षेपापमानादेः प्रयुक्तस्य परेण यत्।
प्राणात्ययेऽप्यसहनं तत्तेजः समुदाहृतं ॥
वाग्वेषयोर्मधुरता तद्वच्छृङ्गारचेष्टितं ललितं।
दानं सप्रियभाषणमौदार्य्यं शत्रुमित्रयोः समता ॥

एषामप्युदाहरणान्यूह्यानि ॥

(९६) अथ नायिका त्रिविधा स्वाऽन्या साधारणस्त्रीति।
नायकसामान्यगुणैर्भवति यथासम्भवैर्युक्ता ॥

नायिका पुनर्नायकसामान्यगुणैस्त्यागादिभिर्यथासम्भवैर्युक्ता भवति। सा च स्वस्त्री अन्यस्त्री साधारणस्त्रीति त्रिविधा ॥ तत्र स्वस्त्री।

(९७) विनयार्ज्जवादियुक्ता गृहकर्म्मपरा पतिव्रता स्वीया।

यथा।

"लज्जापज्जत्तपसाहणाइं परतत्तिणिप्पिवासाइं।
अविणयदुम्मेहाइं धण्णाणं घरे कलत्ताइं" * ॥

(९८) सापि कथिता त्रिविधा मुग्धा मध्या प्रगल्भेति।

तत्र।

---

* लज्जापर्य्याप्तप्रसाधनानि परभर्तृनिष्पिपासानि।
अविनयदुर्मेधांसि धन्यानां गृहे कलत्राणि ॥ स०। टी०॥

(९९) प्रथमावतीर्णयौवनमदनविकारा रतौ वामा।
कथिता मृदुश्च माने समधिकलज्जावती मुग्धा॥

तत्र प्रथमावतीर्णयौवना यथा मम तातपादानां।

"मध्यस्य प्रथिमानमेति जघनं वक्षोजयोर्मन्दता
दूरं यात्युदरञ्च रोमलतिका नेत्रार्ज्जवं धावति।
कन्दर्पं परिवीक्ष्य नूतनमनोराज्याभिषिक्तं क्षणाद्
अङ्गानीव परस्परं विदधते निर्लुण्ठनं सुभ्रुवः"॥

प्रथमावतीर्णमदनविकारा यथा मम प्रभावतीपरिणये।

"दत्ते सालसमन्थरं भुवि पदं निर्य्याति नान्तःपुरान्
नोद्दामं हसति क्षणात् कलयते ह्रीयन्त्रणां कामपि।
किञ्चिद्भावगभीरवक्रिमलवस्पृष्टं मनाग्भाषते
सभ्रूभङ्गमुदीक्षते प्रियकथामुल्लासयन्तीं सखीं"॥

रतौ वामा यथा।

"दृष्टा दृष्टिमधो ददाति कुरुते नालापमाभाषिता
शय्यायां परिवृत्य तिष्ठति बलादालिङ्गिता वेपते।
निर्य्यान्तीषु सखीषु वासभवनान्निर्गन्तुमेवेहते
जाता वामतयैव सम्प्रति मम प्रीत्यै नवोढा प्रिया"॥

माने मृदुर्यथा।

"सा पत्युः प्रथमापराधसमये सख्योपदेशं विना
नो जानाति सविभ्रमाङ्गवलना वक्रोक्तिसंसूचनं।
स्वच्छैरच्छकपोलमूलगलितैः पर्य्यस्तनेत्रोत्पला
बाला केवलमेव रोदिति लुठल्लोलालकैरश्रुभिः"॥

समधिकलज्जावती यथा "दत्ते सालसमन्थरमित्यत्र श्लोके"॥

अत्र समधिकलज्जावत्त्वेनापि लब्धाया रतिवामताया विच्छित्तिविशेषवत्तया पुनः कथनं॥ अथ मध्या।

(१००) मध्या विचित्रसुरता प्ररूढस्मरयौवना।
ईषत्प्रगल्भवचना मध्यमव्रीडिता मता॥

तत्र विचित्रसुरता यथा।

"कान्ते तथा कथमपि प्रथितं मृगाक्ष्या
चातुर्य्यमुद्धतमनोभवया रतेषु।
तत्कूजितान्यनुवदद्भिरनेकवारं
शिष्यायितं गृहकपोतशतैर्यथास्याः"॥

प्ररूढस्मरा यथाऽत्रैवोदाहरणे॥ प्ररूढयौवना यथा मम।

"नेत्रे खञ्जनगञ्जने सरसिजप्रत्यर्थि पाणिद्वयं
वक्षोजौ करिकुम्भविभ्रमकरीमत्युन्नतिं गच्छतः।
कान्तिः काञ्चनचम्पकप्रतिनिधिर्व्वाणी सुधास्पर्द्धिनी
स्मेरेन्दीवरदामसोदरवपुस्तस्याः कटाक्षच्छटा"॥

एवमन्यत्रापि॥ अथ प्रगल्भा।

(१०१) स्मरान्धा गाढतारुण्या समस्तरतकोविदा।
भावोन्नता दरव्रीडा प्रगल्भाऽऽक्रान्तनायका॥

स्मरान्धा यथा।

"धन्यासि या कथयसि प्रियसङ्गमेऽपि
विश्रब्धचाटुकशतानि रतान्तरेषु।

G

मौर्वीं प्रति प्रणिहिते तु करे प्रियेण
सख्यः शपामि यदि किञ्चिदपि स्मरामि" ॥

माढतारुण्या यथा ।

"अत्युन्नतस्तनमुरो नयने सुदीर्घे
वक्रे भ्रुवावतितरां वचनं ततोऽपि ।
मध्योऽधिकं तनुरनूनगुरुर्नितम्बो
मन्दा गतिः किमपि चाद्भुतयौवनायाः" ॥

विविधसुरतज्ञा यथा ।

"क्वचित्ताम्बूलाक्तः क्वचिदगरुपङ्काङ्कमलिनः
क्वचिच्चूर्णोद्गारी क्वचिदपि च सालक्तकपदः ।
वलीभङ्गाभोगैरलकपतितैः शीर्णकुसुमैः
स्त्रियाः सर्व्वावस्थं कथयति रतं प्रच्छदपटः" ॥

भावोन्नता यथा ।

"मधुरवचनैः सभ्रूभङ्गैः कृताङ्गुलितर्ज्जनैर्
अलसवलितैरङ्गन्यासैर्महोत्सवबन्धुभिः ।
असकृदसकृत् स्फारस्फारैरपाङ्गविलोकितैस्
त्रिभुवनजये सा पञ्चेषोः करोति सहायताम्" ॥

स्वल्पव्रीडा यथा । "धन्यासि या कथयसीत्यपि नैव" ॥

आक्रान्तनायका यथा ।

"स्वामिन् भङ्गुरयालकं सतिलकं भालं विलासिन् कुरु
प्राणेश त्रुटितं पयोधरतटे हारं पुनर्योजय ।

इत्युक्त्वा सुरतावसानसमये संपूर्णचन्द्रानना
स्पृष्टा तेन तथैव जातपुलका प्राप्ता पुनर्मोहनं" ॥

मध्याप्रगल्भाभेदान्तराण्याह ।

(१०२) ते धीरा चाप्यधीरा च धीराधीरेति षड्विधे ।

ते मध्याप्रगल्भे । तत्र ।

(१०३) प्रियं सोत्प्रासवक्रोक्त्या मध्याधीरा दहेद्रुषा ॥
धीराधीरा तु रुदितैरधीरा परुषोक्तिभिः ।

तत्र मध्याधीरा यथा ।

"तदवितथमवादीर्यन्मम त्वं प्रियेति
प्रियजनपरिभुक्तं यद् दुकूलं दधानः ।
मदधिवसतिमागाः कामिनां मण्डनश्रीर्
व्रजति हि सफलत्वं वल्लभालोकनेन" ॥

मध्यैव धीराधीरा यथा ।

"बाले नाथ विमुञ्च मानिनि रुषं रोषान्मया किं कृतं
खेदोऽस्मासु न मेऽपराध्यति भवान् सर्व्वेऽपराधा मयि ।
तत् किं रोदिषि गद्गदेन वचसा कस्याग्रतो रुद्यते
नन्वेतन्मम का तवास्मि दयिता नास्मीत्यतो रुद्यते"॥

इयमेवाधीरा यथा ।

"सार्द्धं मनोरथशतैस्तव धूर्त्त कान्ता
सैव स्थिता मनसि कृत्रिमहावरम्या ।
अस्माकमस्ति न च कश्चिदिहावकाशस्
तस्मात् कृतं चरणपातविडम्बनाभिः" ॥

(१०४) प्रगल्भा यदि धीरा स्याच्छन्नकोपाकृतिस्तदा ॥
उदास्ते सुरते तत्र दर्शयन्त्यादरान् बहिः ।

तत्र प्रिये । यथा ।

"एकत्रासनसंस्थितिः परिहृता प्रत्युद्गमाद् दूरतस्
ताम्बूलानयनच्छलेन रभसाऽऽश्लेषोऽपि संविघ्नितः ।
आलापोऽपि न मिश्रितः परिजनं व्यापारयन्त्याऽन्तिके
कान्तं प्रत्युपचारतश्चतुरया कोपः कृतार्थीकृतः" ॥

(१०५) धीराधीरा तु सोल्लुण्ठभाषितैः खेदयेदमुं ॥

अमुं नायकं । यथा मम ।

"अनलङ्कृतोऽपि सुन्दर हरसि मनो मे यतः प्रसभं ।
किं पुनरलङ्कृतस्त्वं संप्रति नखरक्षतैस्तस्याः" ॥

(१०६) तर्ज्जयेत्ताडयेदन्या

अन्या अधीरा । यथा "शोणं वीक्ष्य मुखं" इत्यत्रैव । अत्र च सर्व्वत्र रुषेत्यनुवर्त्तते ।

(१०७) प्रत्येकं ता अपि द्विधा ।
कनिष्ठज्येष्ठरूपत्वान्नायकप्रणयं प्रति ॥

ता अनन्तरोक्ताः षड्भेदा नायिकाः ॥ यथा ।

"दृष्ट्वैकासनसंस्थिते प्रियतमे पश्चादुपेत्यादराद्
एकस्या नयने पिधाय विहितक्रीडानुबन्धच्छलः ।
ईषद्वक्रितकन्धरः सपुलकः प्रेमोल्लसन्मानसाम्
अन्तर्हासलसत्कपोलफलकां धूर्त्तोऽपरां चुम्बति" ॥

(१०८) मध्याप्रगल्भयोर्भेदास्तस्माद् द्वादश कीर्त्तिताः।
मुग्धा त्वेकैव तेन स्युः स्वीयाभेदास्त्रयोदश ॥
परकीया द्विधा प्रोक्ता परोढा कन्यका तथा।

तत्र।

(१०९) यात्रादिनिरताऽन्योढा कुलटा गलितत्रपा ॥

यथा।

"स्वामी निश्वसितेऽप्यसूयति मनोजिघ्रः सपत्नीजनः
श्वश्रूरिङ्गितदैवतं नयनयोरीहालिहो यातरः।
तद्दूरादयमञ्जलिः किमधुना दृग्भङ्गिभावेन ते
वैदग्धीमधुर प्रबन्धरसिक व्यर्थोऽयमत्र श्रमः" ॥

अत्र हि मम परिणेताऽन्नाच्छादनादिदातृतया स्वाम्येव न तु वल्लभः। त्वन्तु वैदग्धीमधुरप्रबन्धरसिकतया मम वल्लभो ऽसीत्यादिव्यङ्ग्यार्थवशादस्याः परनायकविषया रतिः प्रतीयते॥

(११०) कन्या त्वजातापयमा सलज्जा नवयौवना।

अस्याश्च पित्राद्यायत्तत्वात् परकीयात्वं। यथा मालतीमाधवादौ मालत्यादिः॥

(१११) धीरा कलाप्रगल्भा स्याद्वेश्या सामान्यनायिका ॥
निर्गुणानपि न द्वेष्टि न रज्यति गुणिष्वपि।
वित्तमात्रं समालोक्य सा रागं दर्शयेद् बहिः ॥
काममङ्गीकृतमपि परिक्षीणधनं नरं।
मात्रा निष्कासयेदेषा पुनः सन्धानकाङ्क्षया ॥
तस्कराः पण्डका मूर्खाः सुखप्राप्तधनास्तथा।

छिन्नाभिन्नकामाद्या आसां प्रायेण वल्लभाः ॥
एषापि मदनायत्ता क्वापि सत्यानुरागिणी ।
रक्तायां वा विरक्तायां रतमस्यां सुदुर्लभं ॥

पण्डको वातरोगपण्डादिः । छन्नं प्रच्छन्नं ये कामयन्ते ते छन्नकामाः ॥ तत्र रागहीना यथा लटकमेलकादौ मदनमञ्जर्यादिः ॥ रक्ता यथा मृच्छकटिकादौ वसन्तसेनादिः ॥ पुनश्च ।

(११२) अवस्थाभिर्भवन्त्यष्टावेताः षोडशभेदिताः ।
स्वाधीनभर्तृका तद्वत् खण्डिताऽथाभिसारिका ॥
कलहान्तरिता विप्रलब्धा प्रोषितभर्तृका ।
अन्या वासकसज्जा स्याद्विरहोत्कण्ठिता तथा ॥

तत्र ।

(११३) कान्तो रतिगुणाकृष्टो न जहाति यदन्तिकं ।
विचित्रविभ्रमासक्ता सा स्यात् स्वाधीनभर्तृका ॥

यथा "अस्माकं सखि वाससी" इत्यादि ॥

(११४) पार्श्वमेति प्रियो यस्या अन्यसम्भोगचिह्नितः ।
सा खण्डितेति कथिता धीरैरीर्ष्याकषायिता ॥

यथा "तदवितथमवादीरित्यादि" ॥

(११५) अभिसारयते कान्तं या मन्मथवशम्वदा ।
स्वयं वाऽभिसरत्येषा धीरैरुक्ताऽभिसारिका ॥

क्रमाद् यथा ।

"न च मेऽवगच्छति यथा लघुतां
करुणां यथा च कुरुते स मयि ।

निपुणं तथैनमवगम्य वदेर्
अभिदूति काचिदिति संदिदिशे" ॥
"उत्क्षिप्तं करकङ्कणद्वयमिदं बद्धा दृढं मेखला
यत्नेन प्रतिपादिता मुखरयोर्मञ्जीरयोर्मूकता ।
आरम्भे रभसान्मया प्रियसखि क्रीडाभिसारोत्सवे
चण्डालस्तिमिरावगुण्ठनपटक्षेपं विधत्ते विधुः" ॥

(११६) संलीना स्वेषु गात्रेषु मूकीकृतविभूषणा ।
अवगुण्ठनसंवीता कुलजाऽभिसरेद्यदि ॥
विचित्रोज्ज्वलवेशा तु रणन्नूपुरनिस्वना ।
प्रमोदस्मेरवदना स्याद्वेश्याऽभिसरेद्यदि ॥
मदस्खलितसंलापा विभ्रमोत्फुल्ललोचना ।
आविद्धगतिसञ्चारा स्यात् प्रेष्याऽभिसरेद्यदि ॥

तत्राद्ये "उत्क्षिप्तमित्यादि" * । अन्ययोरूह्यमुदाहरणं ॥
प्रसङ्गादभिसारस्थानानि कथ्यन्ते ॥

(११७) क्षेत्रं वाटी भग्नदेवालयो दूतीगृहं वनं ।
मालयञ्च श्मशानञ्च नद्यादीनां तटी तथा ॥
एवं कृताभिसाराणां पुंश्चलीनां विनोदने ।

---

* तत्र यथा प्रेष्याभिसारिका ।
"ताम्बूलाक्तं दशनमसकृद् दर्शयन्तीह चेटी
चेटी क्रेवाविकृतविहतं हेतुहीनं हसन्ती ।
स्थानस्थानस्खलितपदविन्यासमाभासमाना
यूनामग्रे वसति कुटिलं नर्त्तितोच्चैर्मितम्बं ॥"
आदृतपूर्व्वोऽप्येष पाठः प्रकृतानुपयोगित्वादधः कृतः ॥

स्थानान्यष्टौ तथा भ्रान्तकुञ्जेषु क्वचिदाश्रयः ॥
चाटुकारमपि प्राणनाथं रोषादपास्य या ।
पश्चात्तापमवाप्नोति कलहान्तरिता तु सा ॥

यथा मम तातपादानां ।

"नो चाटुश्रवणं कृतं न च दृशा हारोऽन्तिके वीक्षितः
कान्तस्य प्रियहेतवे निजसखीवाचोऽपि दूरीकृताः ।
पादान्ते विनिपत्य तत्क्षणमसौ गच्छन्मया मूढया ।
पाणिभ्यामवरुध्य हन्त सहसा कण्ठे कथं नार्पितः" ॥

(११८) प्रियः कृत्वापि सङ्केतं यस्या नायाति सन्निधिं ।
विप्रलब्धा तु सा ज्ञेया नितान्तमवमानिता ॥

यथा ।

"उत्तिष्ठ दूति यामो यामो यातस्तथापि नायातः ।
याऽतः परमपि जीवेज्जीवितनाथो भवेत् तस्याः" ॥

(११९) नानाकार्य्यवशाद् यस्या दूरदेशं गतः पतिः ।
सा मनोभवदुःखार्त्ता भवेत् प्रोषितभर्तृका ॥

यथा ।

"तां जानीथाः परिमितकथां जीवितं मे द्वितीयं
दूरीभूते मयि सहचरे चक्रवाकीमिवैकां ।
गाढोत्कण्ठां गुरुषु दिवसेष्वेषु गच्छत्सु बालां
जातां मन्ये शिशिरमथितां पद्मिनीं वान्यरूपां" ॥

(१२०) कुरुते मण्डनं यस्याः सज्जिते वासवेश्मनि ।
सा तु वासकसज्जा स्याद्विदितप्रियसङ्गमा ॥

यथा राघवानन्दानां नाटके।

"विदूरे केयूरे कुरु करयुगे रत्नवलयैर्
अलं गुर्वी ग्रीवाभरणलतिकेयं किमनया।
नवामेकामेकावलिमपि मयि त्वं विरचयेर्
न पथ्यं नेपथ्यं बहुतरमनङ्गोत्सवविधौ"॥

(१२१) आगन्तुं कृतचित्तोऽपि दैवान्नायाति यत्प्रियः।
तदनागमदुःखार्त्ता विरहोत्कण्ठिता तु सा॥

यथा।

"किं रुद्धः प्रियया कयाचिदथवा सख्या ममोद्वेजितः
किं वा कारणगौरवं किमपि यन्नाद्यागतो वल्लभः।
इत्यालोच्य मृगीदृशा करतले विन्यस्य वक्त्राम्बुजं
दीर्घं निश्वसितं चिरं च रुदितं क्षिप्ताश्च पुष्पस्रजः"॥

(१२२) इति साष्टाविंशतिशतमुत्तममध्यमाधमस्वरूपतः।
चतुरधिकाशीतियुतं शतत्रयं नायिकाभेदानां स्यात्॥

इह च "परस्त्रियौ कन्यकोढे सङ्केतात् पूर्वं विरहोत्कण्ठिते पश्चाद्विदूषकादिना सहाभिसरन्त्यावभिसारिके कुतोऽपि सङ्केतितस्थानमप्राप्ते नायके विप्रलब्धे इति त्र्यवस्थैवानयोरस्वाधीनप्रिययोरवस्थान्तराभावादिति कश्चित्"॥

(१२३) क्वचिदन्योन्यसाङ्कर्य्यमासां लक्ष्येषु दृश्यते।

यथा।

"न खलु वयममुष्य दानयोग्याः पिबति च पाति च यासकौ रहस्त्वां।

विट विटपममुं ददस्व तस्यै भवति यतः सदृशोश्चिराय योगः॥
तव कितव किमाहितैर्वृथा नः क्षितिरुहपल्लवपुष्पकर्णपूरैः।
ननु जनविदितैर्भवद्व्यलीकैश्चिरपरिपूरितमेव कर्णयुग्मं॥
इति गदितवती रुषा जघान स्फुरितमनोरमपक्ष्मकेसरेण।
श्रवणनियमितेन कान्तमन्या सममसितांबुरुहेण चक्षुषा च" ॥

इयं हि वक्रोक्त्या पद्यवचनेन कर्णोत्पलताडनेन च धीरमध्यताऽधीरमध्यताऽधीरप्रगल्भताभिः सङ्कीर्णा। एवमन्यच्चाप्यूह्यं।

(१२४) इतरा अप्यसङ्ख्यास्ता नोक्ता विस्तरशङ्कया।

ता नायिकाः॥ अथासामलङ्काराः।

(१२५) यौवने सत्त्वजास्तासामष्टाविंशतिसङ्ख्यकाः॥
अलङ्कारास्तत्र भावहावहेलास्त्रयोऽङ्गजाः।
शोभा कान्तिश्च दीप्तिश्च माधुर्य्यञ्च प्रगल्भता॥
औदार्य्यं धैर्य्यमित्येते सप्तैव स्युरयत्नजाः।
लीलाविलासौ विच्छित्तिर्व्विव्वोकः किलकिञ्चितं।
मोट्टायितं कुट्टमितं विभ्रमो ललितं मदः॥
विहृतं तपनं मौग्ध्यं विक्षेपश्च कुतूहलं।
हसितं चकितं केलिरित्यष्टादशसङ्ख्यकाः॥
स्वभावजाश्च भावाद्या दश पुंसां भवन्त्यपि।

पूर्व्वे भावादयो धैर्य्यान्ता दश नायकानामपि सम्भवन्ति

किन्तु सर्व्वेऽप्यमी नायिकाश्रिता एव विच्छित्तिविशेषं पुष्णन्ति।

तत्र भावः।

(१२६) निर्व्विकारात्मके चित्ते भावः प्रथमविक्रिया॥

जन्मतः प्रभृति निर्विकारे मनसि उद्बुद्धमात्रो विकारो भावः। यथा॥

"स एव सुरभिः कालः स एव मलयानिलः।

सैवेयमबला किन्तु मनोऽन्यदिव दृश्यते"॥

अथ हावः॥

(१२७) भ्रुनेत्रादिविकारैस्तु सम्भोगेच्छाप्रकाशकः।

भाव एवाल्पसंलक्ष्यविकारो हाव उच्यते॥

यथा॥

"विवृण्वती शैलसुतापि भावमङ्गैः स्फुरद्बालकदम्बकल्पैः।

साचीकृता चारुतरेण तस्थौ मुखेन पर्य्यस्तविलोचनेन"॥

अथ हेला।

(१२८) हेलात्यन्तं समालक्ष्यविकारः स्यात् स एव च।

स एव भाव एव। यथा॥

"तह से झत्ति पउत्ता वहूए सव्वङ्गविब्भमा सअला।

संसइअ मुद्धभावा होइ चिरं जह सहीणम्पि"*॥

अथ शोभा॥

---

* तथास्से इति। तथा तस्या झटिति प्रवृत्ता वध्वाः सर्व्वाङ्गविभ्रमाः सकलाः। संशयितमुग्धभावा भवति चिरं यथा सखीनामपि॥ इति सं०। टी०॥

(१२९) रूपयौवनलालित्यभोगाद्यैरङ्गभूषणं॥

शोभा प्रोक्ता

तत्र यौवनशोभा यथा।

"असम्भृतं मण्डनमङ्गयष्टेरनासवाख्यं करणं मदस्य।

कामस्य पुष्पव्यतिरिक्तमस्त्रं बाल्यात्परं साथ वयः प्रपेदे"॥

एवमन्यत्रापि॥ अथ कान्तिः।

(१३०) सैव कान्तिर्मन्मथाप्यायिता द्युतिः।

मन्मथोन्मेषेणातिविस्तीर्णशोभैव कान्तिरुच्यते। यथा।

"नेत्रे खञ्जनगञ्जने इत्यादि"॥ अथ दीप्तिः।

(१३१) कान्तिरेवातिविस्तीर्णा दीप्तिरित्यभिधीयते॥

यथा मम चन्द्रकलानामनाटिकायां चन्द्रकलावर्णनं॥

"तारुण्यस्य विलासः समधिकलावण्यसम्पदो हासः।

धरणितलस्याभरणं युवजनमनसो वशीकरणं"॥

अथ माधुर्य्यं।

(१३२) सर्व्वावस्थाविशेषेषु माधुर्य्यं रमणीयता।

यथा।

"सरसिजमनुविद्धं शैवलेनापि रम्यं

मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति।

इयमधिकमनोज्ञा वल्कलेनापि तन्वी

किमिव हि मधुराणां मण्डनं नाकृतीनां"॥

अथ प्रगल्भता।

(१३३) निःसाध्वसत्वं प्रागल्भ्यं

यथा।

"समाश्लिष्टाः समाश्लेषैश्चुम्बिताश्चुम्बनैरपि।
दष्टाश्च दंशनैः कान्तं दासीकुर्व्वन्ति योषितः"॥

अथौदार्य्यं।

(१३४) औदार्य्यं विनयः सदा॥

"न ब्रूते परुषां गिरं वितनुते न भ्रूयुगं भङ्गुरं
नोत्तंसं क्षिपति क्षितौ श्रवणतः सा मे स्फुटेऽप्यागसि।
कान्ता गर्भगृहे गवाक्षविवरव्यापारिताक्ष्या बहिः
सख्या वक्त्रमभिप्रयच्छति परं पर्य्यश्रुणी लोचने"।

अथ धैर्य्यं।

(१३५) मुक्तात्मश्लाघना धैर्य्यं मनोवृत्तिरचञ्चला।

यथा।

"ज्वलतु गगने रात्रौ रात्रावखण्डकलः शशी
दहतु मदनः किं वा मृत्योः परेण विधास्यति।
मम तु दयितः श्लाघ्यस्तातो जनन्यमलान्वया
कुलममलिनं न त्वेवायं जनो न च जीवितं"॥

अथ लीला।

(१३६) अङ्गैर्व्वेशैरलङ्कारैः प्रेमभिर्व्वचनैरपि॥
प्रीतिप्रयोजितैर्लीलां प्रियस्यानुकृतिं विदुः।

यथा।

"मृणालव्यालवलया वेणीबन्धकपर्दिनी।
हरानुकारिणी पातु लीलया पार्वती जगत्"॥

अथ विलासः।

(१३७) यानस्थानासनादीनां मुखनेत्रादिकर्म्मणां॥
विशेषस्तु विलासः स्यादिष्टसन्दर्शनादिना।

यथा।

"अत्रान्तरे किमपि वाग्विभवातिवृत्त-
वैचित्र्यमुल्लसितविभ्रममायताक्ष्याः।
तद्भूरिसात्त्विकविकारमपास्तधैर्य्यम्
आचार्य्यकं विजयि मान्मथमाविरासीत्"॥

अथ विच्छित्तिः।

(१३८) स्तोकाऽप्याकल्परचना विच्छित्तिः कान्तिपोषकृत्॥

यथा।

"स्वच्छाम्भःस्नपनविधौतमङ्गमोष्ठस्
ताम्बूलद्युतिविशदो विलासिनीनां।
वासस्तु प्रतनुविविक्तमस्त्वितीयान्
आकल्पो यदि कुसुमेषुणा न शून्यः"॥

अथ विव्वोकः।

(१३९) विव्वोकस्त्वतिगर्व्वेण वस्तुनीष्टे ऽप्यनादरः।

यथा।

"यासां सत्यपि सद्गुणानुसरणे दोषानुवृत्तिः परा
याः प्राणान् वरमर्पयन्ति न पुनः संपूर्णदृष्टिं प्रिये।

अत्यन्ताभिमतेऽपि वस्तुनि विधिर्यासां निषेधात्मक-
स्तास्त्रैलोक्यविलक्षणप्रकृतयो वामाः प्रसीदन्तु ते" ॥

अथ किलकिञ्चितं।

(१४०) स्मितशुष्करुदितहसितत्रासक्रोधश्रमादीनां ॥
साङ्कर्य्यं किलकिञ्चितमभीष्टतमसङ्गमादिजाद्धर्षात् ।

यथा।

"पाणिरोधमविरोधितवाञ्छं भर्त्सनाश्च मधुरस्मितगर्भाः ।
कामिनः स्म कुरुते करभोरूर्हारि शुष्करुदितञ्च सुखेऽपि"॥

अथ मोट्टायितं।

(१४१) तद्भावभाविते चित्ते वल्लभस्य कथादिषु ॥
मोट्टायितमिति प्राहुः कर्णकण्डूयनादिकं।

यथा।

"सुभग त्वत्कथारम्भे कर्णकण्डूतिलालसा।
उज्जृम्भवदनाम्भोजा भिनत्त्यङ्गानि साङ्गना" ॥

अथ कुट्टमितं।

(१४२) केशस्तनाधरादीनां ग्रहे हर्षेऽपि सम्भ्रमात् ॥
प्राहुः कुट्टमितं नाम शिरःकरविधूननं।

यथा।

"पल्लवोपमितिसाम्यसपक्षं दष्टवत्यधरबिम्बमभीष्टे।
पर्य्यकूजि सरुजेव तरुण्यास्तारलोलवलयेन करेण" ॥

अथ विभ्रमः।

(१४३) त्वरया हर्षरागादेर्दयितागमनादिषु ॥
अस्थाने भूषणादीनां विन्यासो विभ्रमो मतः ।

"श्रुत्वाऽऽयान्तं बहिः कान्तमसमाप्तविभूषया ।
भालेऽञ्जनं दृशोर्लाक्षा कपोले तिलकः कृतः" ॥

अथ ललितं ।

(१४४) सुकुमारतयाऽङ्गानां विन्यासो ललितं भवेत् ॥

यथा ।

"गुरुतरकलनूपुरानुनादं सललितनर्त्तितवामपादपद्मा ।
इतरदनतिलोलमादधाना पदमथ मन्मथमन्थरं जगाम" ॥

अथ मदः ।

(१४५) मदो विकारः सौभाग्ययौवनाद्यवलेपजः ।

यथा ।

"मा गर्व्वमुद्वह कपोलतले चकास्ति
कान्तस्वहस्तलिखिता मम मञ्जरीति ।
अन्याऽपि किं न खलु भाजनमीदृशीनां
वैरी न चेद्भवति वेपथुरन्तरायः" ॥

अथ विहृतं ।

(१४६) वक्तव्यकालेऽप्यवचो व्रीडया विहृतं मतं ।

यथा ।

"दूरागतेन कुशलं पृष्टा नोवाच सा मया किञ्चित् ।
पर्य्यश्रुणी तु नयने तस्याः कथयाम्बभूवतुः सर्व्वं ॥

अथ तपनं।

(१४७) तपनं प्रियविच्छेदे स्मरावेगोत्थचेष्टितं॥

यथा मम।

"श्वासान्मुञ्चति भूतले विलुठति त्वन्मार्गमालोकते
दीर्घं रोदिति विक्षिपत्यत इतः क्षामां भुजावल्लरीं।
किञ्च प्राणसमा न काङ्क्षितवती स्वप्नेऽपि ते सङ्गमं
निद्रां वाञ्छति न प्रयच्छति पुनर्दग्धो विधिस्तामपि"॥

अथ मौग्ध्यं।

(१४८) अज्ञानादिव या पृच्छा प्रतीतस्यापि वस्तुनः।
वल्लभस्य पुरः प्रोक्तं मौग्ध्यं तत्तत्त्ववेदिभिः॥

यथा।

"के द्रुमास्ते क्व वा ग्रामे सन्ति केन प्ररोपिताः।
नाथ मत्कङ्कणन्यस्तं येषां मुक्ताफलं फलं"॥

अथ विक्षेपः।

(१४९) भूषाणामर्द्धरचना वृथा विष्वगवेक्षणं।
रहस्याख्यानमीषच्च विक्षेपो दयितान्तिके॥

यथा।

"धम्मिल्लमर्द्धमुक्तं कलयति तिलकं तथा सकलं।
किञ्चिद्वदति रहस्यं चकितं विष्वगवलोकते तन्वी"॥

अथ कुतूहलं।

(१५०) रम्यवस्तुसमालोके लोलता स्यात् कुतूहलं।

यथा।

"प्रसाधिकालम्बितमग्रपादमाक्षिप्य काचिद्द्रवरागमेव।
उत्सृष्टलीलागतिरागवाक्षादलक्तकाङ्कां पदवीं ततान"॥

अथ हसितं।

(१५१) हसितन्तु वृथाहासो यौवनोद्भेदसम्भवः॥

यथा।

"अकस्मादेव तन्वङ्गी जहास यदियं पुनः।
नूनं प्रसूनवाणोऽस्यां स्वाराज्यमधितिष्ठति"॥

अथ चकितं।

(१५२) कुतोऽपि दयितस्याग्रे चकितं भयसम्भ्रमः।

यथा।

"त्रस्यन्ती चलशफरीविघट्टितोरू-
र्वामोरूरतिशयमाप विभ्रमस्य।
क्षुभ्यन्ति प्रसभमहो विनाऽपि हेतो-
र्लीलाभिः किमु सति कारणे तरुण्यः"॥

अथ केलिः।

(१५३) विहारे सह कान्तेन क्रीडितं केलिरुच्यते॥

यथा।

"व्यपोहितुं लोचनतो मुखानिलै-
रपारयन्तं किल पुष्पजं रजः।
पयोधरेणोरसि काचिदुन्मनाः
प्रियं जघानोन्नतपीवरस्तनी"॥

अथ मुग्धाकन्ययोरनुरागेङ्गितानि।

(१५४) दृष्ट्वा दर्शयति व्रीडां सम्मुखं नैव पश्यति।
प्रच्छन्नं वा भ्रमन्तं वाऽतिक्रान्तं पश्यति प्रियं॥
बहुधा पृच्छ्यमानाऽपि मन्दमन्दमधोमुखी।
सगद्गदस्वरं किञ्चित् प्रियं प्रायेण भाषते॥
अन्यैः प्रवर्त्तितां शश्वत् सावधाना च तत्कथां।
शृणोत्यन्यत्र दत्ताक्षी प्रिये बालानुरागिणी॥

अथ सकलानामपि नायिकानामनुरागेङ्गितानि।

(१५५) चिराय सविधे स्थानं प्रियस्य बहु मन्यते।
विलोचनपथञ्चास्य न गच्छत्यनलङ्कृता॥
क्वापि कुन्तलसंव्यानसंयमव्यपदेशतः।
बाहुमूलं स्तनौ नाभिपङ्कजं दर्शयेत् स्फुटं॥
आच्छादयति वागाद्यैः प्रियस्य परिचारकान्।
विश्वसित्यस्य मित्रेषु बहु मानं करोति च॥
सखीमध्ये गुणान् ब्रूते स्वधनं प्रददाति च।
सुप्ते स्वपिति दुःखस्य दुःखं धत्ते सुखे सुखं॥
स्थिता दृष्टिपथे शश्वत् प्रिये पश्यति दूरतः।
आभाषते परिजनं सम्मुखे स्मरविक्रियं॥
यत्किञ्चिदपि संवीक्ष्य कुरुते हसितं मुधा।
कर्णकण्डूयनं तद्वत् कवरीमोक्षसंयमौ॥
जृम्भते स्फोटयत्यङ्गं बालमाश्लिष्य चुम्बति।

भाले तथा वयस्याया आरभेत्तिलकक्रियां ॥
अङ्गुष्ठाग्रेण लिखति सकटाक्षं निरीक्षते।
दशति स्वाधरं चापि ब्रूते प्रियमधोमुखी ॥
न मुञ्चति च तं देशं नायको यत्र दृश्यते।
आगच्छति गृहं चास्य कार्य्यव्याजेन केनचित् ॥
दत्तं किमपि कान्तेन धृत्वाङ्गे मुहुरीक्षते।
नित्यं हृष्यति तद्योगे वियोगे मलिना कृशा ॥
मन्यते बहु तच्छीलं तत्प्रियं मन्यते प्रियं।
प्रार्थयत्यल्पमूल्यानि सुप्ता न परिवर्त्तते ॥
विकारान् सात्त्विकानस्य सम्मुखी नाधिगच्छति।
भाषते सूनृतं स्निग्धमनुरक्ता नितम्बिनी ॥
एतेष्वधिकलज्जानि चेष्टितानि नवस्त्रियाः।
मध्यव्रीडानि मध्यायाः स्रंसमानत्रपाणि तु ॥
अन्यस्त्रियाः प्रगल्भायास्तथा स्युर्व्वारयोषितः ॥

दिङ्मात्रं यथा मम।

"अन्तिकगतमपि मामियमलोकयतीव हन्त दृष्ट्वापि।
सरसनखक्षतमण्डितमाविष्कुरुते भुजामूलं ॥

तथा।

(१५६) लेख्यप्रस्थापनैः स्निग्धैर्वीक्षितैर्मृदुभाषितैः।
दूतीसंप्रेषणैर्नार्य्या भावाभिव्यक्तिरिष्यते ॥

दूत्यश्च।

(१५७) दूत्यः सखी नटी दासी धात्रेयी प्रतिवेशिनी।
बाला प्रव्रजिता कारूः शिल्पिन्याद्याः स्वयं तथा ॥

कारू रजकीप्रभृतिः। शिल्पिनी चित्रकारादिस्त्री। आदि-शब्दात्ताम्बूलिकगान्धिकस्त्रीप्रभृतयः॥ तत्र सखी यथा। "श्वासान्मुञ्चतीत्यादि"। स्वयं दूती यथा मम।

"पन्थिअ पिआसिओ विअ लच्छीअसि जासि ता किमण्णत्तो।
ण मणं विवारओ इध अत्थि घरे घणरसं पिअन्ताणं"*॥

एतास्तु नायिकाविषये नायकानामपि दूत्यो भवन्ति॥ दूतीगुणानाह।

(१५८) कलाकौशलमुत्साहो भक्तिश्चित्तज्ञता स्मृतिः।
माधुर्य्यं नर्म्मविज्ञानं वाग्मिता चेति तद्गुणाः॥
एता अपि यथौचित्यादुत्तमाधममध्यमाः।

एता दूत्यः॥ अथ प्रतिनायकः।

(१५९) धीरोद्धतः पापकारी व्यसनी प्रतिनायकः॥

यथा रामस्य रावणः॥ अथोद्दीपनविभावाः।

(१६०) उद्दीपनविभावास्ते रसमुद्दीपयन्ति ये।

ते च।

(१६१) आलम्बनस्य चेष्टाद्या देशकालादयस्तथा॥

---

* पथिक इति। पान्थ पिपासित इव लक्ष्यसे यासि तत् किमन्यत्र। न मनागपि वारक इहास्ति गृहे घनरसं पिबतां॥ इति सं टी॰॥

चेष्टादीत्यादिशब्दाद्रूपभूषणादयः । कालादीत्यादिशब्दात् चन्द्रचन्दनकोकिलालापभ्रमरझङ्कारादयः ॥ तत्र चन्द्रो यथा मम ।

"करमुदयमहीधरस्तनाग्रे गलिततमःपटलांशुके निवेश्य ।
विकसितकुमुदेक्षणं विचुम्बत्ययममरेशदिशो मुखं सुधांशुः"॥

यो यस्य रसस्य उद्दीपनविभावः स तत्स्वरूपवर्णने वक्ष्यते ।

अथानुभावाः ।

(१६२) उद्बुद्धं कारणैः स्वैः स्वैर्बहिर्भावं प्रकाशयन् ।
लोके यः कार्य्यरूपः सोऽनुभावः काव्यनाट्ययोः ॥

यः खलु लोके सीतादिचन्द्रादिभिः स्वैः स्वैरालम्बनोद्दीपनकारणैरामादेरन्तरुद्बुद्धं रत्यादिकं बहिः प्रकाशयन् कार्य्यमित्युच्यते स काव्यनाट्ययोः पुनरनुभावः । कः पुनरसावित्याह ।

(१६३) उक्ताः स्त्रीणामलङ्कारा अङ्गजाश्च स्वभावजाः ।
तद्रूपाः सात्त्विका भावास्तथा चेष्टाः परा अपि ॥

तद्रूपा अनुभावस्वरूपाः । तत्र च यो यस्य रसस्यानुभावः स तत्स्वरूपवर्णने वक्ष्यते । तत्र सात्त्विकाः ।

(१६४) विकाराः सत्त्वसम्भूताः सात्त्विकाः परिकीर्त्तिताः ।

सत्त्वं नाम स्वात्मविश्रामप्रकाशकारी कश्चनाऽऽन्तरो धर्म्मः ।

(१६५) सत्त्वमात्रोद्भवत्वात्ते भिन्ना अप्यनुभावतः ॥

गोबलीवर्द्दन्यायेन इति शेषः । के ते इत्याह ।

(१६६) स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः।
वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विकाः स्मृताः॥

तत्र।

(१६७) स्तम्भश्चेष्टाप्रतीघातो भयहर्षामयादिभिः।
वपुर्जलोद्गमः स्वेदो रतिघर्म्मश्रमादिभिः॥
हर्षाद्भुतभयादिभ्यो रोमाञ्चो रोमविक्रिया।
मदसंमदपीडाद्यैर्वैस्वर्य्यं गद्गदं विदुः॥
रागद्वेषश्रमादिभ्यः कम्पो गात्रस्य वेपथुः।
विषादमदरोषाद्यैर्वर्णान्यत्वं विवर्णता॥
अश्रु नेत्रोद्भवं वारि क्रोधदुःखप्रहर्षजं।
प्रलयः सुखदुःखाभ्यां चेष्टाज्ञाननिराकृतिः॥

यथा मम।

"तनुस्पर्शादस्या दरमुकुलिते हन्त नयने
उदञ्चद्रोमाञ्चं व्रजति जडतामङ्गमखिलं।
कपोलौ घर्म्मार्द्रौ ध्रुवमुपरताशेषविषयं
मनः सान्द्रानन्दं स्पृशति झटिति ब्रह्म परमं"॥

एवमन्यत्। अथ व्यभिचारिणः।

(१६८) विशेषादाभिमुख्येन चरन्तो व्यभिचारिणः।
स्थायिन्युन्मग्ननिर्म्मग्नास्त्रयस्त्रिंशश्च तद्भिदाः॥

स्थिरतया वर्त्तमाने हि रत्यादौ निर्व्वेदादयः प्रादुर्भाव-

तिरोभावाभ्यामाभिमुख्येन चरणाद्व्यभिचारिणः कथ्यन्ते ॥
के ते इत्याह।

(१६९)निर्व्वेदावेगदैन्यश्रममदजडता औग्र्यमोहौ विबोधः
स्वप्नापस्मारगर्व्वामरणमलसतामर्षनिद्रावहित्थाः।
औत्सुक्योन्मादशङ्काः स्मृतिमतिसहिता व्याधिसन्त्रासलज्जा
हर्षासूयाविषादाः सधृतिचपलताग्लानिचिन्तावितर्काः ॥

तत्र निर्व्वेदः।

(१७०) तत्त्वज्ञाना*पदोर्ष्यादे† र्निर्व्वेदः स्वावमानना।
दैन्यचिन्ताश्रुनिश्वासवैवर्ण्योच्छ्वसितादि*कृत् ॥

तत्र तत्त्वज्ञानान्निर्व्वेदो यथा।

"मृत्कुम्भवालुकारन्ध्रपिधानरचनार्थिना।
दक्षिणावर्त्तशङ्खोऽयं हन्त चूर्णीकृतो मया" ॥

(१७१) आवेगः सम्भ्रमस्तत्र वर्षजे पोण्डिताङ्गता।
उत्पातजे स्तम्भताङ्गे धूमाद्याकुलताग्निजे ॥
राजविद्रवजादेस्तु शस्त्रनागादियोजनं।
गजादेःस्तम्भकम्पादिः पांश्वाद्याकुलतानिलात् ॥
इष्टाद्धर्षाः शुचोऽनिष्टाज्ज्ञेयाश्चान्ये यथायथं।

---

* तत्त्वज्ञानमिह देहविषयादावनुपादेयत्वज्ञानमेव न तु जीवात्मपरमात्मनोरभेदज्ञानं तस्मिन् सति मोक्ष एव न तु स्वावमाननं ॥ टी० ॥

† आदिपदात् पुरातत्त्ववस्तादीनां ग्रहः ॥ टी० ॥

* आदिपदात् स्वस्य कुकर्म्मोद्भावनादीनां ग्रहणं ॥ टी० ॥

तत्र प्रचुरो यथा।

"अर्घ्यमर्घ्यमिति वादिनं नृपं सोऽनवेक्ष्य भरताग्रजो यतः।
क्षत्रकोपदहनार्चिषं ततः सन्दधे दृशमुदग्रतारकां"॥

एवमन्यदूह्यं। अथ दैन्यं।

(१७२) दौर्गत्याद्यैरनौजस्यं दैन्यं मलिनतादिकृत्॥

यथा।

"वृद्धोऽन्धः पतिरेष मञ्चकगतः स्थूणावशेषं गृहं
कालोऽभ्यर्णजलागमः कुशलिनी वत्सस्य वार्त्तापि नो।
यत्नात्सञ्चिततैलबिन्दुघटिका भग्नेति पर्याकुला
दृष्ट्वा गर्भभरालसां निजवधूं श्वश्रूश्चिरं रोदिति"॥

अथ श्रमः।

(१७३) खेदो रत्यध्वगत्यादेः श्वासनिद्रादिकृच्छ्रमः।

यथा।

"सद्यः पुरीपरिसरे च शिरीषमृद्वी
गत्वा जवात्त्रिचतुराणि पदानि सीता।
गन्तव्यमस्ति कियदित्यसकृद्ब्रुवाणा
रामाश्रुणः कृतवती प्रथमावतारं"॥

अथ मदः।

(१७४) सम्मोहानन्दसम्भेदो मदो मद्योपयोगजः॥
अमुना चोत्तमः शेते मध्यो हसति गायति।
अधमप्रकृतिश्चापि परुषं वक्ति रोदिति॥

यथा।

"प्रातिभं* चिरसकेन† गतानां वक्राक्षरचमत्कृतिर्नयमय: ।
गूढसूचितरहस्यसहास: सुभुवां प्रवहते परिहास:" ॥

अथ जडता ।

(१७५) अप्रतिपत्तिर्जडता स्यादिष्टानिष्टदर्शनश्रुतिभिः ।
अनिमिषनयननिरीक्षणतूष्णीम्भावादयस्तत्र ॥

यथा मम कुवलयाश्वचरिते प्राकृतकाव्ये ।

"णवरिअ तं जुअजुअलं अण्णोण्णणिहिदसजलमन्थरदिट्ठिं ।
आलेक्खअप्पिअं विअ खणमेत्तं तत्थ संठिअं मुइअसण्णं"‡ ॥

अथोग्रता ।

(१७६) शौर्य्यापराधादिभवं भवेच्चण्डत्वमुग्रता ।
तत्र स्वेदः शिरःकम्पतर्जनाताडनादयः ॥

यथा ।

"प्रणयिसखीसलीलपरिहासरसाधिगतै-
र्ललितशिरीषपुष्पहननैरपि ताम्यति यत् ।
वपुषि वधाय तत्र तव शस्त्रमुपक्षिपत:
पततु शिरस्यकाण्डयमदण्ड इवैष भुज:" ॥

अथ मोहः ।

---

* प्रातिभं प्रागल्भ्यं इति ॥ टी० ॥

† चिरसकेन मद्येनेति ॥ टी० ॥

‡ णवरिअ इति । केवलं तद् युवयुगलमन्योन्यनिहितसजलम-
न्थरदृष्टि । आलेख्यार्पितमिव क्षणमात्रं तत्र स्थितं मुक्तसञ्ज्ञ-
मिति सं ॥ टी० ॥ णवरिअशब्दः केवलार्थोपदेशी ॥

(१७७) मोहो विचित्तता भीतिदुःखावेगानुचिन्तनैः ।
मूर्च्छनाज्ञानपतनभ्रमणादर्शनादिकृत् ॥

यथा ।

"तीव्राभिषङ्गप्रभवेण वृत्तिं मोहेन संस्तम्भयतेन्द्रियाणाम् ।
अज्ञातभर्तृव्यसना मुहूर्त्तं कृतोपकारेव रतिर्बभूव" ॥

अथ विबोधः ।

(१७८) निद्रापगमहेतुभ्यो विबोधश्चेतनागमः ।
जृम्भाङ्गभङ्गनयनमीलनाङ्गावलोककृत् ॥

यथा ।

"चिररतिपरिखेदात् प्राप्तनिद्रासुखानां
चरममपि शयित्वा पूर्व्वमेव प्रबुद्धाः ।
अपरिचलितगात्राः कुर्व्वते न प्रियाणा-
मशिथिलभुजचक्राश्लेषभेदं तरुण्यः" ॥

अथ स्वप्नः ।

(१७९) स्वप्नो निद्रामुपेतस्य विषयानुभवस्तु यः ।
कोपावेगभयग्लानिसुखदुःखादिकारकः ॥

यथा ।

"मामाकाशप्रणिहितभुजं निर्दयाश्लेषहेतो-
र्लब्धायास्ते कथमपि मया स्वप्नसन्दर्शनेन ।
पश्यन्तीनां न खलु बहुशो न स्थलीदेवतानां
मुक्तास्थूलास्तरुकिसलयेष्वश्रुलेशाः पतन्ति" ॥

अथापस्मारः ।

(१८०) मनःक्षेपस्त्वपस्मारो ग्रहाद्यावेशनादिजः।
भूपातकम्पप्रस्वेदफेनलालादिकारकः॥

यथा।

"आश्लिष्टभूमिं रसितारमुच्चैर्लोलद्भुजाकारबृहत्तरङ्गं।
फेनायमानं पतिमापगानामसावपस्मारिणमाशशङ्के"॥

अथ गर्व्वः।

(१८१) गर्व्वो मदः प्रभावश्रीविद्यासत्कुलतादिजः।
अवज्ञासविलासाङ्गदर्शनाविनयादिकृत्॥

यथा।

"धृतायुधो यावदहं तावदन्यैः किमायुधैः।
यद्वा न सिद्धमस्त्रेण मम तत् केन साध्यतां"*॥

अथ मरणं।

(१८२) शराद्यैर्म्मरणं जीवत्यागोऽङ्गपतनादिकृत्।

यथा।

"राममन्मथशरेण ताडिता दुःसहेन हृदये निशाचरी।
गन्धवद्रुधिरचन्दनोक्षिता जीवितेशवसतिं जगाम सा"॥

अथालस्यं।

(१८३) आलस्यं श्रमगर्भाद्यैर्जाड्यं जृम्भासितादिकृत॥

यथा।

---

* यद्वा सिद्धं ममास्त्रेण वद तत् केन साध्यते इत्युत्तरार्द्धस्य पाठान्तरः।

"न तथा भूषयत्यङ्गं न तथा भाषते सखी ।
जृम्भते मुग्धराधीना बाला गर्भभरालसा" ॥

अथामर्षः ।

(१८४) निन्दाक्षेपापमानादेरमर्षोऽभिनिविष्टता ।
नेत्ररागशिरःकम्पभ्रूभङ्गोत्तर्ज्जनादिकृत् ॥

यथा ।

"प्रायश्चित्तं चरिष्यामि पूज्यानां वो व्यतिक्रमात् ।
न त्वेवं दूषयिष्यामि शस्त्रग्रहमहाव्रतं" ॥

अथ निद्रा ।

(१८५) चेतःसम्मीलनं निद्रा श्रमक्लममदादिजं ।
जृम्भाक्षिमीलनोच्छ्वासगात्रभङ्गादिकारणं ॥

यथा ।

"सार्थकानर्थकपदं ब्रुवती मन्थराक्षरं ।
निद्रार्द्धमीलिताक्षी सा लिखितेवास्ति मे हृदि" ॥

अथावहित्था ।

(१८६) भयगौरवलज्जादेर्हर्षाद्याकारगुप्तिरवहित्था ।
व्यापारान्तरसक्त्यन्यथावभाषणविलोकनादिकरी ॥

यथा ।

"एवं वादिनि देवर्षौ पार्श्वे पितुरधोमुखी ।
लीलाकमलपत्राणि गणयामास पार्वती" ॥

अथोन्मादः ।

(१८७) इष्टानवाप्तेरौत्सुक्यं कालक्षेपासहिष्णुता ।
चित्ततापत्वरास्वेददीर्घनिःश्वसितादिकृत् ॥

यथा ।

"यः कौमारहरः स एव हि वरस्ता एव चैत्रक्षपा-
स्ते चोन्मीलितमालतीसुरभयः प्रौढाः कदम्बानिलाः ।
सा चैवास्मि तथापि तत्र सुरतव्यापारलीलाविधौ
रेवारोधसि वेतसीतरुतले चेतः समुत्कण्ठते" ॥

अत्र यत्काव्यप्रकाशकारेण रसस्य प्राधान्यमित्युक्तं तद्रसधर्म्मयोगित्वाद् व्यभिचारिभावस्यापि रसशब्दवाच्यत्वेन गतार्थं मन्तव्यं ॥ अथोन्मादः ।

(१८८) चित्तसम्मोह उन्मादः कामशोकभयादिभिः ।
अस्थानहासरुदितगीतप्रलपनादिकृत् ॥

यथा मम ।

"भ्रातर्द्विरेफ भवता भ्रमता समन्तात्
प्राणाधिका प्रियतमा मम वीक्षिता किं" ।
झङ्कारमनुभूय सानन्दं ।
ब्रूषे किमोमिति सखे कथयाशु तन्मे
किं किं व्यवस्यति कुतोऽस्ति च कीदृशीयं ॥

अथ शङ्का ।

(१८९) परक्रौर्य्यात्मदोषाद्यैः शङ्कानर्थस्य तर्कणं ।
वैवर्ण्यकम्पवैस्वर्य्यपार्श्वालोकास्यशोषकृत् ॥

यथा मम ।

"प्राक्प्रेम प्रथितनखरेष्वङ्गकेषु त्वपाङ्गे
आतातङ्का रचयति चिरं चन्दनालेपनानि ।
धत्ते छायामसकृदधरे दन्तदंशावघाते
वामाङ्गीयं चकितमभितश्चक्षुषी विक्षिपन्ती" ॥

अथ स्मृतिः ।

(१९०) सदृशज्ञानचिन्ताद्यैर्भ्रूसमुन्नमनादिकृत् ।
स्मृतिः पूर्व्वानुभूतार्थविषयज्ञानमुच्यते ॥

यथा मम ।

"मयि सकपटं किञ्चित् क्वापि प्रणीतविलोचने
किमपि नयनं प्राप्ते तिर्य्यग्विजृम्भिततारकं ।
स्मितमुपगतामालीं दृष्ट्वा सलज्जमवाञ्चितं
कुवलयदृशः स्मेरं स्मेरं स्मरामि तदाननं" ॥

अथ मतिः ।

(१९१) नीतिमार्गानुसृत्यादेरर्थनिर्द्धारणं मतिः ।
स्मेरता धृतिसन्तोषौ बहुमानश्च तद्भवाः ॥

यथा ।

"असंशयं क्षत्रपरिग्रहक्षमा यदार्य्यमस्यामभिलाषि मे मनः ।
सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः" ॥

अथ व्याधिः ।

(१९२) व्याधिर्ज्वरादिर्व्वाताद्यैर्भूमीच्छोत्कम्पनादिकृत् ।

तत्र दाहमयत्वे भूमीच्छादयः । शैत्यमयत्वे उत्कम्पनादयः । स्पष्टमुदाहरणं । अथ त्रासः ।

(१९३) निर्व्वानमिमयुतक्रान्तौ स्वासः कम्पादिकारकः ॥

यथा।

"परिस्फुरन्मीनविघट्टितोरवः सुराङ्गनास्त्रासविलोलदृष्टयः।
उपाययुः कम्पितपाणिपल्लवाः सखीजनस्यापि विलोकनीयतां"*॥

अथ व्रीडा।

(१९४) धार्ष्ट्याभावो व्रीडा वदनानमनादिकृद् दुराचारात्।

यथा। "मयि सकपटमित्यादि"। अथ हर्षः।

(१९५) हर्षस्त्विष्टावाप्तेर्मनःप्रसादोऽश्रुगद्गदादिकरः ॥

यथा।

"समीक्ष्य पुत्रस्य चिरात्पिता मुखं निधानकुम्भस्य यथैव दुर्गतः।
मुदा शरीरे प्रबभूव नात्मनः पयोधिरिन्दूदयमूर्च्छितो यथा"॥

अथासूया।

(१९६) असूयान्यगुणर्द्धीनामौद्धत्यादसहिष्णुता।
दोषोद्घोषभ्रूविभेदावज्ञाक्रोधेङ्गितादिकृत् ॥

यथा।

"अथ तत्र पाण्डुतनयेन सदसि विहितं मधुद्विषः।
मानमसहत न चेदिपतिः परवृद्धिमत्सरि मनो हि मानिनां"॥

अथ विषादः।

---

* परिस्फुरदिति जलविहारवर्णनमिति टीका॥

(१९७) उपायाभावजन्मा तु विषादः सत्त्वसंक्षयः।

निःश्वासोच्छ्वासहृत्तापसहायान्वेषणादिकृत्॥

यथा मम।

"एसा कुडिलघणेण चिउरकलावेण तुह णिबद्धा वेणी।

मह सहि दारइ डंसइ आअसजट्ठिव्व कालउरइव्व हिअअं"*॥

अथ धृतिः।

(१९८) ज्ञानाभीष्टागमाद्यैस्तु सम्पूर्णस्पृहता धृतिः।

सौहित्यवचनोल्लासहासप्रतिभादिकृत्॥

यथा मम।

"कृत्वा दीननिपीडनां निजजने बद्ध्वा वचोविग्रहं

नैवालोच्य गरीयसीरपि चिरादामुष्मिकीर्यातनाः।

द्रव्यौघाः परिसञ्चिताः खलु मया यस्याः कृते साम्प्रतं

नीवाराञ्जलिनापि केवलमहो सेयं कृतार्था तनुः"॥

अथ चपलता।

(१९९) मात्सर्यद्वेषरागादेश्चापल्यं त्वनवस्थितिः।

तत्र भर्त्सनपारुष्यस्वच्छन्दाचरणादयः॥

यथा।

"अन्यासु तावदुपमर्दसहासु भृङ्ग

लोलं विनोदय मनः सुमनोलतासु।

---

* एषेति। एषा कुटिलघनेन चिकुरकलापेन तव निबद्धा वेणी। मम सखि दारयति दशत्यायसयष्टिरिव कालोरगीव हृदयं॥ इति सं॥ टी॰॥

मुग्धामजातरजसं कलिकामकाले
व्यर्थं कदर्थयसि किं नवमालिकायाः" ॥

अथ ग्लानिः।

(२००) रत्यायासमनस्तापक्षुत्पिपासादिसम्भवा।
ग्लानिर्निष्प्राणताकम्पकार्श्यानुत्साहतादिकृत् ॥

यथा।

"किसलयमिव मुग्धं बन्धनाद्विप्रलूनं
हृदयकुसुमशोषी दारुणो दीर्घशोकः।
ग्लपयति परिपाण्डु क्षाममस्याः शरीरं
शरदिज इव घर्मः केतकीपत्रगर्भम्" ॥

अथ चिन्ता।

(२०१) ध्यानं चिन्ता हितानाप्तेः शून्यताश्वासतापकृत्।

यथा मम।

"कमलेण विअसिएण संजोएन्ती विरोहिणं ससिबिम्बं।
करअलपल्लत्थमुही किं चिन्तसि सुमुहि अन्तराहिअहिअआ"* ॥

अथ वितर्कः।

(२०२) तर्को विचारः सन्देहाद् भ्रूशिरोऽङ्गुलिनर्त्तकः ॥

यथा। "किं रुद्धः प्रियवेत्यादि" ॥ "एते च त्रयस्त्रिंशद्व्यभिचारिभेदा इति यदुक्तं" तदुपलक्षणमित्याह।

---

* कमलेनेति। कमलेन विकसितेन संयोजयन्ती विरोधिनं शशिबिम्बं। करतलपर्य्यस्तमुखी किं चिन्तयसि सुमुखि अन्तराहितहृदया। इति सं० टी०।

(२०३) रत्यादयोऽप्यनियते रसे स्युर्व्यभिचारिणः।

तथा हि शृङ्गारेऽनुच्छिद्यमानतयावस्थानाद् रतिरेव स्थायिशब्दवाच्या। हासः पुनरुत्पद्यमानो व्यभिचार्येव व्यभिचारित्वव्यपदेशयोगात्। तदुक्तं "रसावस्थः परं भावः स्थायितां प्रतिपद्यते"। तत्कस्य स्थायिनः कस्मिन् रसे सञ्चारित्वमित्याह।

(२०४) शृङ्गारवीरयोर्हासो वीरे क्रोधस्तथा मतः॥
शान्ते जुगुप्सा कथिता व्यभिचारितया पुनः।
इत्याद्यन्यत्समुन्नेयं स्वयंभावितबुद्धिभिः॥

अथ स्थायी भावः।

(२०५) अविरुद्धा विरुद्धा वा यं तिरोधातुमक्षमाः।
आस्वादाङ्कुरकन्दोऽसौ भावः स्थायीति सम्मतः॥

यदुक्तं।

"सक्चन्दनवत्या भावानामन्येषामनुगामुकः।
न तिरोधीयते स्थायी तैरसौ पुष्यते परमिति"॥

तद्भेदानाह।

(२०६) रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा।
जुगुप्सा विस्मयश्चेत्यमष्टौ प्रोक्ताः शमोऽपि च॥

तत्र।

(२०७) रतिर्मनोनुकूलेऽर्थे मनसः प्रवणायितं।
वागादिवैकृतैश्चेतोविकासो हास इष्यते॥
इष्टनाशादिभिश्चेतोवैक्लव्यं शोकशब्दभाक्।
प्रतिकूलेषु तैक्ष्ण्यस्यावबोधः क्रोध इष्यते॥

कार्य्यारम्भेषु संरम्भः स्थेयानुत्साह उच्यते ।
रौद्रशक्त्या तु जनितं चित्तवैक्लव्यदं भयं ॥
दोषेक्षणादिभिर्गर्हा जुगुप्सा विषयोद्भवा ।
विविधेषु पदार्थेषु लोकसीमातिवर्त्तिषु ॥
विस्फारश्चेतसो यस्तु स विस्मय उदाहृतः ।
शमो निरीहावस्थायामात्मविश्रामजं सुखं ॥

यथा मालतीमाधवे रतिः । लटकमेलके हासः । रामायणे शोकः । महाभारते शमः । एवमन्येऽपि । एते हि एतेष्वन्तरा उत्पद्यमानैस्तैस्तैर्विरुद्धैरविरुद्धैश्च भावैरनुच्छिन्नाः प्रत्युत परिपुष्टा एव सहृदयानुभवसिद्धाः । किञ्च ।

(२०८) नानाभिनयसम्बन्धान् भावयन्ति रसान् यतः ।
तस्माद्भावा अमी प्रोक्ताः स्थायिसञ्चारिसात्त्विकाः ॥

यदुक्तं ।

"सुखदुःखादिभिर्भावैर्भावस्तद्भावभावनं" ॥

अथ रसस्य भेदानाह ।

(२०९) शृङ्गारहास्यकरुणरौद्रवीरभयानकाः ।
बीभत्सोऽद्भुत इत्यष्टौ रसाः शान्तस्तथा मतः ॥

तत्र शृङ्गारः ।

(२१०) शृङ्गं हि मन्मथोद्भेदस्तदागमनहेतुकः ।
उत्तमप्रकृतिप्रायो रसः शृङ्गार इष्यते ॥
परोढां वर्ज्जयित्वात्र वेश्याञ्चाननुरागिणीं ।
आलम्बनं नायिकाः स्युर्दक्षिणाद्याश्च नायकाः ॥

चन्द्रचन्दनरोलम्बरुताद्युद्दीपनं मतं।
भ्रूविक्षेपकटाक्षादिरनुभावः प्रकीर्त्तितः॥
त्यक्त्वौग्र्यमरणालस्यजुगुप्सा व्यभिचारिणः।
स्थायी भावो रतिः श्यामवर्णोऽयं विष्णुदैवतः॥

यथा। "शून्यं वासगृहमित्यादि"। अत्र उक्तस्वरूपः पतिरुक्तस्वरूपा च बाला आलम्बनविभावौ। शून्यं वासगृहमुद्दीपनविभावः। चुम्बनमनुभावः। लज्जाहासौ व्यभिचारिणौ। एतैरभिव्यक्तः सहृदयरतिभावः शृङ्गाररूपतां भजते। तद्भेदावाह।

(२११) विप्रलम्भोऽथ सम्भोग इत्येष द्विविधो मतः।

तत्र।

(२१२) यत्र तु रतिः प्रकृष्टा नाभीष्टमुपैति विप्रलम्भोऽसौ॥

अभीष्टं नायकं नायिकां वा।

(२१३) स च पूर्व्वरागमानप्रवासकरुणात्मकश्चतुर्द्धा स्यात्॥

तत्र।

(२१४) श्रवणाद्दर्शनाद्वापि मिथःसंरूढरागयोः।
दशाविशेषो योऽप्राप्तौ पूर्व्वरागः स उच्यते॥
श्रवणन्तु भवेत्तत्र दूतवन्दिसखीमुखात्।
इन्द्रजाले च चित्रे च साक्षात्स्वप्ने च दर्शनं॥
अभिलाषश्चिन्ता स्मृतिगुणकथनोद्वेगसंप्रलापाश्च।
उन्मादोऽथ व्याधिर्ज्जडता मृतिरिति दशात्र कामदशाः॥
अभिलाषः स्पृहा चिन्ता प्राप्त्युपायादिचिन्तनं।

उन्मादश्चापरिच्छेदश्चेतनाचेतनेष्वपि ॥

अलक्ष्यवाक् प्रलापः स्याच्चेतसो भ्रमणाद्भृशम्।

व्याधिस्तु दीर्घनिःश्वासपाण्डुताकृशतादिकः ॥

जडता हीनचेष्टत्वमङ्गानां मनसस्तथा।

शेषं स्पष्टं। क्रमेणोदाहरणानि।

"प्रेमार्द्राः प्रणयस्पृशः परिचयादुद्गाढरागोदया-
स्तास्ता मुग्धदृशो निसर्गमधुराश्चेष्टा भवेयुर्मयि।
यास्वन्तःकरणस्य बाह्यकरणव्यापाररोधी क्षणा-
दाशंसापरिकल्पितास्वपि भवत्यानन्दसान्द्रो लयः" ॥

अत्र मालतीसाक्षाद्दर्शनप्ररूढरागस्य माधवस्याभिलाषः ॥

"कथमीक्षे कुरङ्गाक्षीं साक्षाल्लक्ष्मीं मनोभुवः।
इति चिन्ताकुलः कान्तो निद्रां नैति निशीथिनीं ॥

अत्र कस्याश्चिन्नायिकाया इन्द्रजालदर्शनप्ररूढरागस्य नायकस्य चिन्ता। इदं मम। "मयि सकपटमिति" आदौ नायकस्य स्मृतिः। "नेत्रे खञ्जनगञ्जने" इत्यादौ गुणकथनम्। "श्वासान् मुञ्चतीत्यादौ" उद्वेगः।

"त्रिभागशेषासु निशासु च क्षणं निमील्य नेत्रे सहसा व्यबुध्यत।
क्व नीलकण्ठ व्रजसीत्यलक्ष्यवागसत्यकण्ठार्पितबाहुबन्धना"।

अत्र प्रलापः। "भ्रातर्द्विरेफेत्यादौ" उन्मादः।

"पाण्डुक्षामं वदनं हृदयं सरसं तवालसं च वपुः।
आवेदयति नितान्तं क्षेत्रियरोगं सखि हृदन्तः"।

अत्र व्याधिः।

"भिसिणीअलअसणीए णिहिअं सव्वं सुणिच्चलं अङ्गं।
दीहो णीसासहरो एसोसाहेइ जीअइ त्ति परं"* ॥

अत्र जडता। इदं मम ॥

(२१५) रसविच्छेदहेतुत्वान्मरणं नैव वर्ण्यते।
जातप्रायन्तु तद्वाच्यं चेतसाकाङ्क्षितं तथा ॥
वर्ण्यतेऽपि यदि प्रत्युज्जीवनं स्याददूरतः।

तत्राद्यं यथा।

"शेफालिकां विदलितामवलोक्य तन्वी
प्राणान् कथञ्चिदपि धारयितुं प्रभूता।
आकर्ण्य सम्प्रति रुतं चरणायुधानां
किं वा भविष्यति न वेद्मि तपस्विनी सा" ॥

द्वितीयं यथा।

"रोलम्बाः परिपूरयन्तु हरितो झङ्कारकोलाहलै-
र्मन्दं मन्दमुपैतु चन्दनवनीजातो नभस्वानपि।
माद्यन्तः कलयन्तु चूतशिखरे केलीपिकाः पञ्चमं
प्राणाः सत्वरमश्मसारकठिना गच्छन्तु गच्छन्त्वमी" ॥

अत्रैतौ। तृतीयं यथा।

कादम्बर्यां महाश्वेतापुण्डरीकवृत्तान्ते। एष च प्रकारः करुणविप्रलम्भविषय इति वक्ष्यामः ॥ केचित्तु। "नयनप्रीतिः प्रथमं चित्तासङ्गस्ततोऽथ सङ्कल्पः। निद्राच्छेदस्तनुताविषय-

---

* भिसिणीति ॥ बिसिनीदलशयनीये निहितं सर्व्वं सुनिश्चलं अङ्गं। दीर्घो निश्वासभर एव साधयति जीवयति परं॥ इति सं०॥टी०॥

मित्यन्तिकपानाद्यः । उन्मादो मूर्च्छामृतिरित्येताः स्मरदशा-
दशैव स्युः" इत्याहुः ॥ तत्र च ।

(२१६) आदौ वाच्यस्त्रिया रागः पुंसः पश्चात्तदिङ्गितैः ॥

इङ्गितान्युक्तानि यथा रत्नावल्यां सागरिकावत्सराजयोः ।
आदौ पुरुषानुरागे सम्भवत्यप्येवमधिकं हृदयङ्गमं भवति ।

(२१७) नीलीकुसुम्भमञ्जिष्ठाः पूर्व्वरागोऽपि च त्रिधा ।
न चातिशोभते यन्नापैति प्रेम मनोगतं ॥
तन्नीलीरागमाख्यान्ति यथा श्रीरामसीतयोः ।
कुसुम्भरागं तं प्राहुर्यदपैति च शोभते ॥
मञ्जिष्ठारागमाहुस्तं यन्नापैत्यतिशोभते ।

अथ मानः ।

(२१८) मानः कोपः स तु द्वेधा प्रणयेर्ष्यासमुद्भवः ।
द्वयोः प्रणयमानः स्यात् प्रमोदे सुमहत्यपि ॥
प्रेम्णः कुटिलगामित्वात् कोपो यः कारणं विना ।

द्वयोरिति नायकस्य नायिकायाश्च उभयोः प्रणयमानो वर्णनीयः।
उदाहरणं। तत्र नायकस्य यथा।
"अलीअपसुत्तअ विणिमीलिअच्छ देसु सुहअ मज्झ ओआसं।
गण्डपरिउम्बणपुलइअङ्ग ण उणो चिराइस्सं"* ॥

---

* अली इति । अलीकप्रसुप्तक विनिमीलिताक्ष देहि सुभग मम-
मवकाशं । गण्डपरिचुम्बनपुलकिताङ्ग न पुनश्चिरयिष्यामीति
सं० ॥ टी० ॥

नायिकाया यथा कुमारसम्भवे सन्ध्यावर्णनावसरे। उभयोर्यथा।

"पणअकुविआणं दोण्णंवि अलिअपसुत्ताणं माणइल्लाणं।
णिच्चलणिरुद्धणीसासदिण्णअण्णाणं को मल्लः" * ॥

अनुनयपर्य्यन्तासहने तस्य न विप्रलम्भभेदता किन्तु सम्भोगसञ्चारीर्ष्याख्यभावत्वं। यथा।

"भ्रूभेदे रचितेऽपि दृष्टिरधिकं सोत्कण्ठमुद्वीक्षते
रुद्धायामपि वाचि सस्मितमिदं दग्धाननं जायते।
कार्कश्यं गमितेऽपि चेतसि तनूरोमाञ्चमालम्बते
दृष्टे निर्व्वहणं भविष्यति कथं मानस्य तस्मिन् जने"॥

यथा वा।

"एकस्मिन् शयने पराङ्मुखतया वीतोत्तरं ताम्यतो-
रन्योन्यस्य हृदि स्थितेऽप्यनुनये संरक्षतोर्गौरवं।
दम्पत्योः शनकैरपाङ्गवलनान्मिश्रीभवच्चक्षुषो-
र्भग्नो मानकलिः सहासरभसव्यासक्तकण्ठग्रहः"॥

(२१९) पत्युरन्यप्रियासङ्गे दृष्टेऽथानुमिते श्रुते॥
ईर्ष्या मानो भवेत् स्त्रीणां तत्र त्वनुमितिस्त्रिधा।
उत्स्वप्नायितभोगाङ्कगोत्रस्खलनसम्भवा॥

तत्र दृष्टे यथा।

"विनयति सुदृशो दृशोः परागं प्रणयिनि कौसुममाननानिलेन।
तदहितयुवतेरभीक्ष्णमक्ष्णोर्द्वयमपि रोषरजोभिरापुपूरे"॥

---

* पणअकुविआणमिति। प्रणयकुपितयोर्द्वयोरप्यसुप्तयोर्मानमिश्र-
योः। निश्चलनिरुद्धनिश्वासदत्तकर्णयोः को मल्ल इति। सं॰॥टी॰॥

सम्भोगचिह्नेनानुमिते यथा।

"नवनखपदमङ्गं गोपयस्यंशुकेन
स्थगयसि पुनरोष्ठं पाणिना दन्तदष्टं।
प्रतिदिशमपरस्त्रीसङ्गशंसी विसर्पन्
नवपरिमलगन्धः केन शक्यो वरीतुं"॥

एवमन्यच।

(२२०) साम भेदोऽथ दानञ्च नत्युपेक्षे रसान्तरं।
तद्भङ्गाय पतिः कुर्य्यात् षडुपायानिति क्रमात्॥
तत्र प्रियवचः साम भेदस्तत्सख्युपार्ज्जनं।
दानं व्याजेन भूषादेः पादयोः पतनं नतिः॥
सामादौ तु परिक्षीणे स्यादुपेक्षावधारणं।
रभसत्रासहर्षादेः कोपभ्रंशो रसान्तरं॥

यथा। "नो चाटुश्रवणे इत्यादि"॥ अत्र हि सामादयः पञ्च सूचिताः। रसान्तरमूह्यं॥ अथ प्रवासः।

(२२१) प्रवासो भिन्नदेशत्वं कार्य्याच्छापाच्च सम्भ्रमात्।
तत्राङ्गचेलमालिन्यमेकवेणीधरं शिरः॥
निश्वासोच्छ्वासरुदितभूमिपातादि जायते।

किञ्च।

(२२२) अङ्गेष्वसौष्ठवं तापः पाण्डुता कृशतारुचिः॥
अधृतिः स्यादनालम्बस्तन्मयोन्मादमूर्च्छनाः।
मृतिश्चेति क्रमाज्ज्ञेया दश स्मरदशा इह॥
असौष्ठवं मलापत्तिस्तापस्तु विरहज्वरः।

अरुचिर्व्वस्तुवैराग्यं सर्व्वत्रारागिता धृतिः॥
अनालम्बनता चापि शून्यता मनसः स्मृता।
तन्मयं तत्प्रकाशो हि वाह्याभ्यन्तरतस्तथा॥

शेषं स्पष्टं। एकदेशतो यथा मम तातपादानां।

"चिन्ताभिः स्तिमितं मनः करतले लीना कपोलस्थली
प्रत्यूषक्षणदेशपाण्डुवदनं श्वासैकखिन्नोऽधरः।
अङ्गःशीकरपद्मिनीकिशलयैर्नापैति तापः शमं
कोऽस्याः प्रार्थितदुर्लभोऽस्ति सहते दीनां दशामीदृशीं"॥

(२२१) भावी भवन् भूत इति त्रिधा स्यात्तत्र कार्य्यजः।

कार्य्यस्य बुद्धिपूर्व्वकत्वात् त्रैविध्यं। तत्र भावी यथा मम।

"यामः सुन्दरि याहि पान्थ दयिते शोकं वृथा मा कृथाः
शोकस्ते गमने कुतो मम ततो वाष्पं कथं मुञ्चसि।
शीघ्रं न व्रजसीति मां गमयितुं कस्मादियं ते त्वरा
भूयानस्य सह त्वया जिगमिषोर्जीवस्य मे सम्भ्रमः"॥

भवन् यथा।

"प्रस्थानं वलयैः कृतं प्रियसखैरस्रैरजस्रं गतं
धृत्या न क्षणमासितं व्यवसितं चित्तेन गन्तुं पुरः।
यातुं निश्चितचेतसि प्रियतमे सर्व्वे समं प्रस्थिता
गन्तव्ये सति जीवितप्रियसुहृत् सार्थः किमु त्यज्यते"॥

भूतो यथा। "चिन्ताभिः स्तिमितमित्यादि"। शापाद् यथा।
"तां जानीया इत्यादि"। सम्भ्रमो दिव्यमानुषनिर्घातोत्पा-
तादिजः। यथा। विक्रमोर्व्वश्यामुर्व्वशीपुरूरवसोः॥

अथ पूर्व्वरागोक्तानामभिलाषादीनामप्रवासोक्तानामङ्गासौष्ठवादीनामपि दशानामनुभवेषामप्युभयत्र सत्त्वेऽपि चिरन्तनप्रसिद्ध्या विविच्य प्रतिपादनं ॥

अथ करुणः ।

(२२४) यूनोरेकतरस्मिन् गतवति लोकान्तरं पुनर्लभ्ये ॥
विमनायते यदैकस्तदा भवेत् करुणविप्रलम्भाख्यः ।

यथा कादम्बर्य्यां पुण्डरीकमहाश्वेतावृत्तान्ते ॥

पुनरलभ्ये शरीरान्तरेण वा लभ्ये तु करुणाख्य एव रसः । किञ्चात्राकाशसरस्वतीभाषानन्तरमेव शृङ्गारः । सङ्गमप्रत्याशया रतेरुद्भवात् । प्रथमन्तु "करुणः" इत्यभियुक्ता मन्यन्ते । यच्चात्र "सङ्गमप्रत्याशानन्तरमपि भवतो विप्रलम्भशृङ्गारस्य प्रवासाख्यो भेद एव इति" केचिदाहुः । तदन्ये मरणरूपविशेषसम्भवात्तद्भिन्नमपि मन्यन्ते । अथ सम्भोगः ॥

(२२५) दर्शनस्पर्शनादीनि निषेवेते विलासिनौ ॥
यत्रानुरक्तावन्योन्यं सम्भोगोऽयमुदाहृतः ।

आदिशब्दादन्योन्याधरपानचुम्बनादयः । यथा । "शून्यं वासगृहमित्यादि" ।

(२२६) संख्यातुमशक्यतया चुम्बनपरिरम्भणादिबहुभेदात् ॥
अयमेक एव धीरैः कथितः सम्भोगशृङ्गारः ।
तत्र स्यादृतुषट्कं चन्द्रादित्यौ तथास्तमयः ॥
जलकेलिवनविहारप्रभातमधुपानयामिनीप्रभृतिः ।
अनुलेपनभूषाद्या वाच्यं शुचि मेध्यमन्यच्च ॥

तथाच भरतः ।"यत्किञ्चिल्लोके शुचि मेध्यमुज्ज्वलं दर्शनीयं वा तच्छृङ्गारेणोपमीयते उपयुज्यते ।" किञ्च ।

(२२७) कथितश्चतुर्विधोऽसावानन्तर्य्यात्तु पूर्व्वरागादेः ।

यदुक्तं ।

"न विना विप्रलम्भेन सम्भोगः पुष्टिमश्नुते ।
कषायिते हि वस्त्रादौ भूयान् रागो विवर्द्धते ॥

तत्र पूर्व्वरागानन्तरं सम्भोगो यथा कुमारसम्भवे पार्व्वतीपरमेश्वरयोः । प्रवासानन्तरं सम्भोगो यथा मम तातपादानां ।

"क्षेमं ते ननु पक्ष्मलाक्षि किमतः क्षेमं महङ्गं दृढं
एतादृक् कृशता कुतस्तव पुणो पुट्ठं सरीरं जदो ।
केनाहं पृथुलः प्रिये पणइणीदेहस्स सम्मीलनात्
त्वत्तः सुभ्रु न कापि मे जइ इयं क्षेमं कुदो पुच्छसि" * ॥

एवमन्यत्राप्यूह्यं । अथ हासः ।

---

* क्षेमं ते इति संस्कृतेन नायकस्य प्रश्नः । प्राकृतेन नायिकाया उत्तरं । किमतः कृशत्वं क्षेमं ममाङ्गं दृढं अतिशयं कृशं यन्ममाङ्गं तदेव क्षेममित्यर्थः ।

† अपरौ यथा मम ।

"पदप्रणतमालोक्य कान्तमेकान्तकातरं ।
मुञ्चन्ती बाष्पसन्तानं सुमुखी तेन चुम्बिता ॥ १ ॥
कान्ते घोरकृतान्तवक्त्रकुहरात् त्वं पुण्यपुञ्जेन मे
मुक्ता हन्त तदर्जनश्रमभरं प्रत्यङ्गमालिङ्ग्य मां ।
इत्याकर्ण्य निमीलितार्द्धनयनं स्मेरं शनैरानतं
लोलाक्ष्या वदनाम्बुजं स्मरदृशः चिरं चुचुम्बे प्रियः" टी०॥२॥

(२२८) विकृताकारवाग्वेषचेष्टादेः कुहकाद्भवेत् ॥
हासो हास्यस्थायिभावः श्वेतः प्रमथदैवतः ।

विकृताकारवाक्चेष्टं यदालोक्य हसेज्जनः ॥
तदत्रालम्बनं प्राहुस्तच्चेष्टोद्दीपनं मतं ।
अनुभावोऽक्षिसङ्कोचवदनस्मेरतादिकः ॥
निद्रालस्यावहित्याद्या अत्र स्युर्व्यभिचारिणः ।
ज्येष्ठानां स्मितहसिते मध्यानां विहसितावहसिते च ॥
नीचानामपहसितं तथाऽतिहसितन्तु षड्भेदाः ।
ईषद्विकासि नयनं स्मितं स्यात् स्पन्दिताधरं ॥
किञ्चिल्लक्ष्यद्विजं तत्र हसितं कथितं बुधैः ।
मधुरस्वरं विहसितं सांसशिरःकम्पमवहसितं ॥
अपहसितं सास्राक्षं विक्षिप्ताङ्गं भवत्यतिहसितं ।

यथा मम ।

गुरोर्गिरः पञ्च दिनान्यधीत्य वेदान्तशास्त्राणि दिनत्रयञ्च ।
अमी समाघ्राय च तर्कवादान् समागताः कुक्कुटमिश्रपादाः ।
अस्य नटकमेलकप्रभृतिषु परिपोषो द्रष्टव्यः ।

अत्र च ।

(२२९) यस्य हासः स चेत् क्वापि साक्षान्नैव निबध्यते ॥
तथाप्येष विभावादिसामर्थ्यादुपलभ्यते ।
अभेदेन विभावादिः साधारण्यात् प्रतीयते ॥
सामाजिकैस्ततो हास्यरसोऽयमनुभूयते ।

एवमन्येष्वपि रसेषु बोद्धव्यं। अथ करुणः।

(२३०) इष्टनाशादनिष्टाप्तेः करुणाख्यो रसो भवेत्॥
धीरैः कपोतवर्णोऽयं कथितो यमदैवतः।
शोकोऽत्र स्थायिभावः स्याच्छोच्यमालम्बनं मतं॥
तस्य दाहादिकावस्था भवेदुद्दीपनं पुनः।
अनुभावा दैवनिन्दा भूपातक्रन्दितादयः॥
वैवर्ण्योच्छ्वासनिःश्वासस्तम्भप्रलपनानि च।
निर्व्वेदमोहापस्मारव्याधिग्लानिस्मृतिश्रमाः॥
विषादजडतोन्मादचिन्ताद्या व्यभिचारिणः।

शोच्यं विनष्टबन्धुप्रभृति। यथा मम राघवविलासे।

"विपिने क्व जटानिबन्धनं तव चेदं क्व मनोहरं वपुः।
अनयोर्घटनाविधेः स्फुटं ननु खड्गेन शिरीषकर्त्तनं"॥

अत्र हि रामवनवासजनितशोकार्त्तस्य दशरथस्य दैवनिन्दा। एवं बन्धुवियोगविभवनाशादावप्युदाहार्य्यं। परिपोषस्तु महाभारते स्त्रीपर्व्वणि द्रष्टव्यः। अस्य करुणविप्रलम्भाद्भेदमाह।

(२३१) शोकस्थायितया भिन्नो विप्रलम्भादयं रसः॥
विप्रलम्भे रतिः स्थायी पुनः सम्भोगहेतुकः।

अथ रौद्रः।

(२३२) रौद्रः क्रोधस्थायिभावो रक्तो रुद्राधिदैवतः॥
आलम्बनमरिस्तत्र तच्चेष्टोद्दीपनं मतं।

मुष्टिप्रहारपतनविकृतच्छेदावदारणैश्चैव ॥
सङ्ग्रामसम्भ्रमाद्यैरस्योद्दीप्तिर्भवेत् प्रौढा।
भ्रूविभङ्गोष्ठनिर्दंशबाहुस्फोटनतर्ज्जनाः ॥
आत्मावदानकथनमायुधोत्क्षेपणानि च।
अनुभावास्तथाक्षेपक्रूरसन्दर्शनादयः ॥
उग्रतावेगरोमाञ्चस्वेदवेपथवो मदः।
मोहामर्षादयस्तत्र भावाः स्युर्व्यभिचारिणः ॥

यथा।

"कृतमनुमतं दृष्टं वा यैरिदं गुरु पातकं
मनुजपशुभिर्निर्मर्य्यादैर्भवद्भिरुदायुधैः।
नरकरिपुणा सार्द्धं तेषां सभीमकिरीटिना-
मयमहमसृङ्मेदोमांसैः करोमि दिशां बलिं" ॥

अथ युद्धवीरादिरमाह।

(२३३) रक्तास्यनेत्रता चात्र भेदिनी युद्धवीरतः।

अथ वीरः।

(२३४) उत्तमप्रकृतिर्व्वीर उत्साहस्थायिभावकः ॥
महेन्द्रदैवतो हेमवर्णोऽयं समुदाहृतः।
आलम्बनविभावास्तु विजेतव्यादयो मताः ॥
विजेतव्यादिचेष्टाद्यास्तस्योद्दीपनरूपिणः।
अनुभावास्तु तत्र स्युः सहायान्वेषणादयः ॥

सञ्चारिणस्तु धृतिमतिगर्व्वस्मृतितर्करोमाञ्चाः।
स च दानधर्म्मयुद्धैर्दयया च समन्वितश्चतुर्द्धा स्यात्॥

स च वीरः। दानवीरो धर्म्मवीरो दयावीरो युद्धवीरश्चेति चतुर्व्विधः। तत्र दानवीरो यथा परशुरामः। "त्यागः सप्तसमुद्रमुद्रितमहीनिर्व्याजदानावधिरिति"। अत्र परशुरामस्य त्यागे उत्साहः स्थायी भावः। सम्प्रदानब्राह्मणैरालम्बनविभावैः सत्त्वाध्यवसायादिभिश्चोद्दीपनविभावैर्विभावितः सर्व्वस्वत्यागादिभिरनुभावितो हर्षधृत्यादिभिः सञ्चारिभिः पुष्टिं नीतो दानवीरतां भजते। धर्म्मवीरो यथा युधिष्ठिरः।

"राज्यञ्च वसु देहश्च भार्य्याभ्रातृसुताश्च ये।
यच्च लोके ममायत्तं तद्धर्म्माय सदोद्यतं"॥

युद्धवीरो यथा श्रीरामचन्द्रः।

"भो लङ्केश्वर दीयतां जनकजा रामः स्वयं याचते
कोऽयं ते मतिविभ्रमः स्मर नयं नाद्यापि किञ्चित् कृतं।
नैवञ्चेत् खरदूषणत्रिशिरसां कण्ठासृजा पङ्किलः
पत्री नैष सहिष्यते मम धनुर्ज्याबन्धबन्धूकृतः"॥

दयावीरो यथा जीमूतवाहनः।

"शिरामुखैः स्यन्दत एव रक्तमद्यापि देहे मम मांसमस्ति।
तृप्तिं न पश्यामि तवापि तावत् किं भक्षणात्त्वं विरतो गरुत्मन्"॥
एष्वपि भावादयः पूर्व्वोदाहरणवदूह्याः।

अथ भयानकः।

(२३५) भयानको भयस्थायिभावः कालाधिदैवतः।
स्त्रीनीचप्रकृतिः कृष्णो मतस्तत्त्वविशारदैः॥
यस्मादुत्पद्यते भीतिस्तदचालम्बनं मतं।
चेष्टा घोरतरास्तस्य भवेदुद्दीपनं पुनः॥
अनुभावोऽत्र वैवर्ण्यगद्गदस्वरभाषणं।
प्रलयस्वेदरोमाञ्चकम्पदिक्प्रेक्षणादयः॥
जुगुप्सावेगसम्मोहसन्त्रासग्लानिदीनताः।
शङ्कापस्मारसम्भ्रान्तिमृत्य्वाद्या व्यभिचारिणः॥

यथा।

"नष्टं वर्षवरैर्मनुष्यगणनाभावादपास्य चपामन्तःकञ्चुकि कञ्चुकस्य विशति चासादयं वामन इत्यादि"॥

अथ बीभत्सः।

(२३६) जुगुप्सास्थायिभावस्तु बीभत्सः कथ्यते रसः।
नीलवर्णो महाकालदैवतोऽयमुदाहृतः॥
दुर्गन्धमांसपिशितमेदांस्यालम्बनं मतं।
तत्रैव कृमिपाताद्यमुद्दीपनमुदाहृतं॥
निष्ठीवनास्यवलननेत्रसङ्कोचनादयः।
अनुभावास्तत्र मतास्तथा स्युर्व्यभिचारिणः॥
मोहोऽपस्मार आवेगो व्याधिश्च मरणादयः।

यथा।

"उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूच्छोथभूयांसि मांसान्यंसस्फिक्पृष्ठपिण्ड्याद्यवयवसुलभान्युग्रपूतीनि जग्ध्वा।

अन्तः पर्य्यस्तनेत्रः प्रकटितदशनः प्रेतरङ्कः करङ्का-
दङ्कस्थादस्थिसंस्थं स्थपुटगतमपि क्रव्यमव्यग्रमत्ति" ॥

अथाद्भुतः।

(२३७) अद्भुतो विस्मयस्थायिभावो गन्धर्व्वदैवतः ॥
पीतवर्णो वस्तु लोकातिगमालम्बनं मतं।
गुणानां तस्य महिमा भवेदुद्दीपनं पुनः ॥
स्तम्भः स्वेदोऽथ रोमाञ्चगद्गदस्वरसम्भ्रमाः।
तथा नेत्रविकासाद्या अनुभावाः प्रकीर्त्तिताः ॥
वितर्कावेगसम्भ्रान्तिहर्षाद्या व्यभिचारिणः।

यथा।

"दोर्द्दण्डाञ्चितचन्द्रशेखरधनुर्द्दण्डावभङ्गोद्यत-
टङ्कारध्वनिरार्य्यबालचरितप्रस्तावनाडिण्डिमः।
द्राक्पर्य्यस्तकपालसंपुटमिलद्ब्रह्माण्डभाण्डोदर-
भ्राम्यत्पिण्डितचण्डिमा कथमहो नाद्यापि विश्राम्यति" ॥

अथ शान्तः।

(२३८) शान्तः शमस्थायिभाव उत्तमप्रकृतिर्म्मतः ॥
कुन्देन्दुसुन्दरच्छायः श्रीनारायणदैवतः।
अनित्यत्वादिनाऽशेषवस्तुनिःसारता तु या ॥
परमात्मस्वरूपं वा तस्यालम्बनमिष्यते।
पुण्याश्रमहरिक्षेत्रतीर्थरम्यवनादयः ॥
महापुरुषसङ्गाद्यास्तस्योद्दीपनरूपिणः।

रोमाञ्चाद्याश्चानुभावास्तथा स्युर्व्यभिचारिणः ॥
निर्वेदहर्षस्मरणमतिभूतदयादयः ।

यथा ।

"रत्नानामुरतस्यथा धृतजरत्कन्थास्यबन्धाध्वगैः
सवासस्य सकौतुकस्य सदयं दृष्टस्य तैर्नागरैः ।
गिर्व्याजीकृतचित्सुधारसमुदा निद्रायमाणस्य मे
निःशङ्कं करटः कदा करपुटीभिक्षां विलुण्ठिष्यति" ॥

पुष्टिस्तु महाभारतादौ द्रष्टव्या ॥

(२३९) निरहङ्काररूपत्वाद्दयावीरादिरेष नो ॥

दयावीरादौ हि जीमूतवाहनादौ अन्तरा मलयवत्याद्यनुरागादेरन्ते च विद्याधरचक्रवर्त्तित्वाद्याप्तेर्दर्शनादहङ्कारोपशमो न दृश्यते । शान्तस्तु सर्व्वप्रकारेणाहङ्कारप्रशमैकरूपत्वान्न तत्रान्तर्भावमर्हति । अतश्च नागानन्दे शान्तस्य प्रधानत्वमपास्तं ॥

ननु ।

"न यत्र दुःखं न सुखं न चिन्ता न द्वेषरागौ न च काचिदिच्छा ।
रसः स शान्तः कथितो मुनीन्द्रैः सर्व्वेषु भावेषु शमप्रमाणः" ॥

इत्येवंरूपस्य शान्तस्य मोक्षावस्थायामेवात्मस्वरूपापत्तिलक्षणायां प्रादुर्भावात् तत्र सञ्चार्य्यादीनामभावात् कथं रसत्वमित्युच्यते ।

(२४०) युक्तवियुक्तदशायामवस्थितो यः शमः स एव यतः ।
रसतामेति तदस्मिन् सञ्चार्य्यादेः स्थितिश्च न विरुद्धा ॥

यद्यस्मिन् सुखाभावोऽप्युक्तस्तस्य वैषयिकसुखपरत्वान्न विरोधः।
उक्तं हि।

"यच्च कामसुखं लोके यच्च दिव्यं महासुखं।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलां॥
सर्व्वाकारमहङ्काररहितत्वं व्रजन्ति चेत्।
अत्रान्तर्भावमर्हन्ति दयावीरादयस्तदा"॥

आदिशब्दात् धर्म्मवीरदानवीरदेवताविषयरतिप्रभृतयः।
तत्र देवताविषया रतिर्यथा।

"कदा वाराणस्यामिह सुरधुनीरोधसि वसन्
वसानः कौपीनं शिरसि निदधानोऽञ्जलिपुटं।
अये गौरीनाथ त्रिपुरहर शम्भो त्रिनयन
प्रसीदेति क्रोशन्निमिषमिव नेष्यामि दिवसान्"॥

अथ मुनीन्द्रसम्मतो वत्सलः।

(२४१) स्फुटं चमत्कारितया वत्सलञ्च रसं विदुः।
स्थायी वत्सलतास्नेहः पुत्राद्यालम्बनं मतं॥
उद्दीपनानि तच्चेष्टाविद्याशौर्य्यदयादयः।
आलिङ्गनाङ्गसंस्पर्शशिरश्चुम्बनमीक्षणं॥
पुलकानन्दवाष्पाद्या अनुभावाः प्रकीर्त्तिताः।
सञ्चारिणोऽनिष्टशङ्का हर्षगर्व्वादयो मताः॥
पद्मगर्भच्छविर्व्वर्णो दैवतं लोकमातरः।

"यदाह धाम्ना प्रथमोदितं वचो
ययौ तदीयामवलम्ब्य चाङ्गुलीं ।
अभूच्च नम्रः प्रणिपातशिक्षया
पितुर्मुदं तेन ततान सोऽर्भकः" ॥

एषाञ्च रसानां परस्परविरोधमाह ।

(२४२) आद्यः करुणबीभत्सरौद्रवीरभयानकैः ॥
भयानकेन करुणेनापि हास्यो विरोधभाक् ।
करुणो हास्यशृङ्गाररसाभ्यामपि तादृशः ॥
रौद्रस्तु हास्यशृङ्गारभयानकरसैरपि ।
भयानकेन शान्तेन तथा वीररसः स्मृतः ॥
शृङ्गारवीररौद्राख्यहास्यशान्तैर्भयानकः ।
शान्तस्तु वीरशृङ्गाररौद्रहास्यभयानकैः ॥
शृङ्गारेण तु बीभत्स इत्याख्याता विरोधिता ।

आद्यः शृङ्गारः । एषाञ्च समावेशप्रकारा वक्ष्यन्ते ।

(२४३) कुतोऽपि कारणात् क्वापि स्थिरतामुपयन्नपि ॥
उन्मादादिर्नतु स्थायी पात्रेन स्थैर्य्यमेति यत् ।

यथा । विक्रमोर्व्वश्यां चतुर्थेऽङ्के पुरूरवस उन्मादः ।

(२४४) रसभावौ तदाभासौ भावस्य प्रशमोदयौ ॥
सन्धिः शबलता चेति सर्व्वेऽपि रसनाद्रसाः ।

रसनधर्म्मयोगित्वाद्भावादिष्वपि रसत्वमुपचारादित्यभिप्रायः। भावादय उच्यन्ते।

(२४५) सञ्चारिणः प्रधानानि देवादिविषया रतिः॥
उद्बुद्धमात्रः स्थायी च भाव इत्यभिधीयते।

"न भावहीनोऽस्ति रसो न भावो रसवर्ज्जितः।
परस्परकृता सिद्धिरनयोर्रसभावयोः"॥

इत्युक्तदिशा परमालोचनया परमविश्रान्तिस्थानेन रसेन सहैव वर्त्तमाना अपि राजानुगतविवाहप्रवृत्तभृत्यवद् आपाततो यत्र प्राधान्येनाभिव्यक्ता व्यभिचारिणो देवमुनिगुरुनृपादिविषया रतिः उद्बुद्धमात्रा विभावादिभिरपरिपुष्टतया रसतामनापाद्यमानाश्च स्थायिनो भावा भावशब्दवाच्याः। तत्र व्यभिचारी यथा। "एवं वादिनि देवर्षावित्यादि"। अत्राव-हित्था देवविषया रतिः। यथा कुन्दमालायां।

"दिवि वा भुवि वा ममास्तु वासो
नरके वा नरकान्तक प्रकामं।
अवधीरितशारदारविन्दौ
चरणौ ते मरणेऽपि चिन्तयामि"॥

मुनिविषया रतिर्यथा।

"विलोकनेनैव तवाऽमुना मुने
कृतः कृतार्थोऽस्मि निवर्हितांहसा।
तथापि शुश्रूषुरहं गरीयसीर्
गिरोऽथवा श्रेयसि केन तृप्यते"॥

राजविषया रतिर्यथा मम।

"त्वद्वाजिराजिनिर्द्धूतधूलीपटलपङ्किलां।
न धत्ते शिरसा गङ्गां भूरिभारभिया हरः"॥

एवमन्यत्।

उद्बुद्धमात्रस्थायी भावो यथा।

"हरस्तु किञ्चित्परिवृत्तधैर्य्यश्चन्द्रोदयारम्भ इवाम्बुराशिः।
उमामुखे विम्बफलाधरोष्ठे व्यापारयामास विलोचनानि"॥

अत्र पार्व्वतीविषया भगवतो रतिः॥ ननूक्तं "प्रपानकरसव-द्विभावादीनामेकोऽवभासो रस इति" तत्र सञ्चारिणः पार्थ-क्याभावात् कथं प्राधान्येनाभिव्यक्तिरित्युच्यते।

(२४६) यथा मरीचखण्डादेरेकीभावे प्रपानके॥
उद्रेकः कस्यचित् क्वापि तथा सञ्चारिणो रसे।

अथ रसाभासभावाभासौ।

(२४७) अनौचित्यप्रवृत्तत्वे आभासो रसभावयोः॥

अनौचित्यञ्चात्र रसानां भरतादिप्रणीतलक्षणानां साम-ग्रीरहितत्वे सत्येकदेशयोगित्वोपलक्षणपरं बोध्यं तच्च बालव्युत्प-त्तये एकदेशतो दर्श्यते।

(२४८) उपनायकसंस्थायां मुनिगुरुपत्नीगतायाञ्च।
बहुनायकविषयायां रतौ तथाऽनुभयनिष्ठायां॥
प्रतिनायकनिष्ठत्वे तद्वदधमपात्रतिर्य्यगादिगते।
शृङ्गारेऽनौचित्यं रौद्रे गुर्व्वादिगतकोपे॥

आग्ने च हीननिष्ठे गुर्व्वाद्यालम्बने हास्ये।
ब्रह्मवधाद्युत्साहेऽधमपात्रगते तथा वीरे॥
उत्तमपात्रगतत्वे भयानके ज्ञेयमेवमन्यत्र।

तत्र रतेरुपनायकनिष्ठत्वे यथा मम।

"स्वामी मुग्धतरो वनं घनमिदं बालाहमेकाकिनी
क्षोणीमावृणुते तमालमलिनच्छायातमःसन्ततिः।
तन्मे सुन्दर मुञ्च कृष्ण सहसा वर्त्मेति गोप्या गिरः
श्रुत्वा तां परिरभ्य मन्मथकलासक्तो हरिः पातु वः"।

बहुनायकनिष्ठत्वे यथा।

"कान्तास्त एव भुवनत्रितयेऽपि मन्ये
येषां कृते सुतनु पाण्डुरयं कपोलः"॥

अनुभयनिष्ठत्वे यथा। मालतीमाधवे नन्दनस्य मालत्यां।

"पश्चादुभयनिष्ठत्वेऽपि प्रथममेकनिष्ठत्वे रतेराभासत्वं" इति श्रीमल्लोचनकाराः॥

तथोदाहरणं यथा रत्नावल्यां। सागरिकाया अन्योन्यदर्शनात् प्राक् वत्सराजे रतिः॥

प्रतिनायकनिष्ठत्वे यथा। हयग्रीववधे हयग्रीवस्य जलक्रीडावर्णने।

अधमपात्रगतत्वे यथा।

"जघनस्थलनद्धपत्रवल्ली गिरिमल्लीकुसुमानि कापि भिल्ली।
अवचित्य गिरौ पुरो निषण्णा स्वकचानुत्कचयाञ्चकार भर्त्रा"॥

तिर्य्यग्गतत्वे यथा।

"मल्लीमतल्लीषु वनान्तरेषु वल्ल्यन्तरे वल्लभमाह्वयन्ती ।
चञ्चद्विपञ्चीकलनादभङ्गी सङ्गीतमङ्गीकुरुते स्म भृङ्गी" ॥

आदिशब्दात्तापसादयः । रौद्राभासो यथा ।

"रक्तोत्फुल्लविशाललोलनयनः कम्पोत्तराङ्गो मुहु-
र्मुक्त्वा कर्णमपेतभीर्धृतधनुर्बाणो हरेः पश्यतः ।
आध्मातः कटुकोक्तिभिः स्वमसकृद्दोर्विक्रमं कीर्त्तय-
न्नंसास्फोटपटुर्युधिष्ठिरमसौ हन्तुं प्रविष्टोऽर्जुनः" ॥

भयानकाभासो यथा ।

"अशक्नुवन् सोढुमधीरलोचनः सहस्ररश्मेरिव यस्य दर्शनं ।
प्रविश्य हेमाद्रिगुहागृहान्तरं निनाय बिभ्यद्दिवसानि कौशिकः" ॥

स्त्रीनीचविषयमेव हि भयं रसप्रकृतिः । एवमन्यच्च ।

(२४८) भावाभासो लज्जादिके तु वेश्यादिविषये स्यात् ॥

स्पष्टं ।

(२४९) भावस्य शान्तावुदये सन्धिमिश्रे तयोः क्रमात् ।
भावस्य शान्तिरुदयः सन्धिः शबलता मता ॥

क्रमेण यथा ।

"सुतनु जहिहि कोपं पश्य पादानतं मां
न खलु तव कदाचित्कोप एवंविधोऽभूत् ।
इति निगदति नाथे तिर्य्यगामीलिताक्ष्या
नयनजलमनल्पं मुक्तमुक्तं न किञ्चित्" ॥

अत्र बाष्पमोचनेनेर्ष्याख्यसञ्चारिभावस्य शमः ।

"चरणपतनप्रत्याख्यानात् प्रसादपराङ्मुखे
निभृतकितवाचारेत्युक्त्वा रुषा परुषीकृते।
व्रजति रमणे निःश्वस्योच्चैः स्तनस्थितहस्तया
नयनसलिलच्छन्ना दृष्टिः सखीषु निवेशिता"॥

अत्र विषादस्योदयः।

"नयनयुगासेचनकं मानसवृत्त्यापि दुष्प्रापं।
रूपमिदं मदिराक्ष्या मदयति हृदयं दुनोति च मे"॥

अत्र हर्षविषादयोः सन्धिः।

"क्वाकार्य्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा
दोषाणां प्रशमाय मे श्रुतमहो कोपेऽपि कान्तं मुखं।
किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा
चेतः स्वास्थ्यमुपैहि कः खलु युवा धन्योऽधरं धास्यति"॥

अत्र वितर्कौत्सुक्यमतिस्मरणशङ्कादैन्यधृतिचिन्तानां शबलता॥ *॥

इति साहित्यदर्पणे रसभावादिनिरूपणो नाम तृतीयः परिच्छेदः॥ *॥

अथ काव्यभेदमाह।

(२५०) काव्यं ध्वनिर्गुणीभूतव्यङ्ग्यञ्चेति द्विधा मतं।

तत्र।

(२५१) वाच्यातिशयिनि व्यङ्ग्ये ध्वनिस्तत्काव्यमुत्तमं॥

वाच्यादधिकचमत्कारिणि व्यङ्ग्यार्थे ध्वन्यतेऽस्मिन्निति व्युत्पत्त्या ध्वनिर्नामोत्तमं काव्यं।

(२५२) भेदौ ध्वनेरपि द्वावुदीरितौ लक्षणाभिधामूलौ।
अविवक्षितवाच्योऽन्यो विवक्षितान्यपरवाच्यश्च॥

तत्राविवक्षितवाच्यो नाम लक्षणामूलो ध्वनिः। लक्षणामूलत्वादेवात्र वाच्यमविवक्षितं बाधितस्वरूपं। विवक्षितान्यपरवाच्यस्त्वभिधामूलः। अत एवात्र वाच्यं विवक्षितं। अन्यपरं व्यङ्ग्यनिष्ठं। अत्र हि वाच्योऽर्थः स्वरूपं प्रकाशयन्नेव व्यङ्ग्यार्थस्य प्रकाशकः। यथा प्रदीपो घटस्य। अभिधामूलस्य बहुविषयतया पश्चान्निर्देशः। अविवक्षितवाच्यस्य भेदावाह॥

(२५३) अर्थान्तरं संक्रमिते वाच्येऽत्यन्तं तिरस्कृते।
अविवक्षितवाच्योऽपि ध्वनिर्द्वैविध्यमृच्छति॥

अविवक्षितवाच्यो नाम ध्वनिरर्थान्तरसंक्रमितवाच्योऽत्यन्ततिरस्कृतवाच्यश्चेति द्विविधः। यत्र स्वयमनुपयुज्यमानो मुख्योऽर्थः स्वविशेषरूपेऽर्थान्तरे परिणमति तत्र मुख्यार्थस्य स्वविशेषरूपार्थान्तरसंक्रमितत्वादर्थान्तरसंक्रमितवाच्यत्वं। यथा।

"कदली कदली करभः करभः करिराजकरः करिराजकरः।
भुवनत्रितयेऽपि बिभर्त्ति तुलामिदमूरुयुगं न चमूरुदृशः"॥

अत्र द्वितीयकदल्यादिशब्दाः पौनरुक्त्यभिया सामान्यकदल्यादिरूपे मुख्यार्थे बाधिता जाड्यादिगुणविशिष्टकदल्यादिरूपमर्थं बोधयन्ति जाड्याद्यतिशयश्च व्यङ्ग्यः। यत्र पुनः स्वार्थं सर्वथा परित्यजन्नर्थान्तरे परिणमति तत्र मुख्यार्थस्यात्यन्ततिरस्कृतत्वादत्यन्ततिरस्कृतवाच्यत्वं। यथा।

"निःश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते"॥

अत्रान्धशब्दो मुख्यार्थे बाधितोऽप्रकाशरूपमर्थं बोधयति अप्रकाशातिशयश्च व्यङ्ग्यः। अन्धत्वाप्रकाशत्वयोः सामान्यविशेषभावाभावाच्चार्थान्तरसङ्क्रमितवाच्यत्वं॥ यथा।

"भम धम्मिअ वीसत्थो सो सुणहो अज्ज मारिओ देण।
गोलाणईकच्छकुडङ्गवासिणा दरीअसीहेण" *॥

अत्र भ्रम धार्म्मिकेत्यतो भ्रमणस्य विधिः प्रकृतेऽनुपपद्यमानतया भ्रमणनिषेधे पर्य्यवस्यतीति विपरीतलक्षणाशङ्का न कार्य्या। यत्र खलु विधिनिषेधावुत्पद्यमानावेव निषेधविध्योः पर्य्यवस्यतस्तत्रैव तदवसरः। यत्र पुनः प्रकरणादिपर्य्यालोचनेन विधिनिषेधयोर्निषेधविधी अवगम्येते तत्र ध्वनित्वमेव। तदुक्तं॥

"क्वचिद्बाध्यतया ख्यातिः क्वचित् ख्यातस्य बाधनं।
पूर्व्वत्र लक्षणैव स्यादुत्तरत्राभिधैव तु"॥

अत्राद्ये मुख्यार्थस्यार्थान्तरे सङ्क्रमणं प्रवेशः न तु तिरोभावः अत एवाजहत्स्वार्थलक्षणा। द्वितीये तु स्वार्थस्यात्यन्तं तिरस्कृतत्वाज्जहत्स्वार्था॥

(२५४) विवक्षिताभिधेयोऽपि द्विभेदः प्रथमं मतः।
असंलक्ष्यक्रमो यत्र व्यङ्ग्यो लक्ष्यक्रमस्तथा॥

विवक्षितान्यपरवाच्योऽपि ध्वनिरसंलक्ष्यक्रमव्यङ्ग्यः संलक्ष्यक्रमव्यङ्ग्यश्चेति द्विविधः।

---

* भम धम्मिअ इति। भ्रम धार्म्मिक विश्वस्तः स श्वाऽद्य मारितस्तेन। गोदावरीकच्छकुञ्जवासिना दृप्तसिंहेन॥ इति सं॰टी॰॥

(२५५) तत्राद्यो रसभावादिरेक एवात्र गण्यते ।
एकोऽपि भेदोऽनन्तत्वात् सङ्ख्येयस्तस्य नैव यत् ॥

उक्तस्वरूपो रसभावादिरसंलक्ष्यक्रमव्यङ्ग्यः । अत्र व्यङ्ग्यप्रतीतेर्विभावादिप्रतीतिकारणकत्वात् क्रमोऽवश्यमस्ति किन्तु उत्पलपत्रशतव्यतिभेदवल्लाघवान्न संलक्ष्यते । एषु रसादिषु च एकस्यापि भेदस्यानन्तत्वात् सङ्ख्यातुमशक्यत्वादसंलक्ष्यक्रमव्यङ्ग्यध्वनिर्नाम काव्यमेकभेदमेवोक्तं । तथाहि एकस्यैव शृङ्गारस्य एकोऽपि सम्भोगरूपो भेदः परस्परालिङ्गनाधरपानचुम्बनादिभेदात् प्रत्येकञ्च विभावादिवैचित्र्यात् सङ्ख्यातुमशक्यः का गणना सर्व्वेषां ॥

(२५६) शब्दार्थोभयशक्त्युत्थव्यङ्ग्येऽनुस्वानसन्निभे ।
ध्वनिर्लक्ष्यक्रमव्यङ्ग्यस्त्रिविधः कथितो बुधैः ॥

क्रमलक्ष्यत्वादेवानुरणनरूपो यो व्यङ्ग्यस्तस्य शब्दशक्त्युद्भवत्वेन अर्थशक्त्युद्भवत्वेन शब्दार्थशक्त्युद्भवत्वेन च त्रैविध्यात् संलक्ष्यक्रमव्यङ्ग्यनाम्नो ध्वनेः काव्यस्यापि त्रैविध्यं । तत्र ।

(२५७) वस्त्वलङ्काररूपत्वाच्छब्दशक्त्युद्भवो द्विधा ।

अलङ्कारशब्दस्य पृथगुपादानादनलङ्कारं वस्तुमात्रं गृह्यते । तत्र वस्तुरूपशब्दशक्त्युद्भवो व्यङ्ग्यो यथा ॥

"पन्थिअ ण एत्थ सत्थरमत्थि मणं पत्थरत्थले गामे ।
उण्णअपओहरं पेक्खिअ उण जइ वससि ता वससु" * ॥

---

* पन्थिअ इति । पथिक नात्र स्तरोऽस्ति मनाक् प्रस्तरस्थले ग्रामे । उन्नतपयोधरं प्रेक्ष्य पुन र्यदि वससि तद्वस ॥ इति सं० । टी० ॥

अत्र सत्वरादिशब्दशक्त्या यद्युपभोगक्षमोऽसि तदास्खेति वस्तु व्यज्यते।

अलङ्काररूपो यथा ॥ "दुर्गालङ्घितविग्रह इत्यादि" ॥ अत्र प्राकरणिकस्य उमानामममहादेवीवल्लभभानुदेवनृपतेर्वर्णने द्वितीयार्थसूचितमप्राकरणिकस्य पार्वतीवल्लभस्य वर्णनमसम्बद्धं मा प्रसाङ्क्षीदितीश्वरभानुदेवयोरुपमानोपमेयभावः कल्प्यते। तदत्र उमावल्लभ उमावल्लभ इवेत्युपमालङ्कारो व्यङ्ग्यः।

यथा वा ॥

"अमितः समितः प्राप्तैरुत्कर्षैर्हर्षद: प्रभो।
अहितः सहितः साधुयशोभिरसतामसि" ॥

अत्रामित इत्यादावपिशब्दाभावाद्विरोधाभासो व्यङ्ग्यः। व्यङ्ग्यस्यालङ्कार्य्यत्वेऽपि ब्राह्मणश्रमणन्यायादलङ्कारत्वमुपचर्य्यते ॥

(२५८) वस्तु वालङ्कृतिर्व्वापि द्विधार्थः सम्भवी स्वतः।
कवेः प्रौढोक्तिसिद्धो वा तन्निबद्धस्य चेति षट् ॥
षड्भिस्तैर्व्यज्यमानस्तु वस्त्वलङ्काररूपकः।
अर्थशक्त्युद्भवो व्यङ्ग्यो याति द्वादशभेदताम् ॥

स्वतः सम्भवी औचित्याद्बहिरपि सम्भाव्यमानः। प्रौढोक्त्या सिद्धो न त्वौचित्येन। तत्र क्रमेण यथा ॥

"दृष्टिं हे प्रतिवेशिनि क्षणमिहाप्यस्मद्गृहे दास्यसि
प्रायेणास्य शिशोः पिता न विरसाः कौपीरपः पास्यति।
एकाकिन्यपि यामि सत्वरमितः स्रोतस्तमालाकुलं
नीरन्ध्रास्तनुमालिखन्तु जरठच्छेदा नलग्रन्थयः" ॥

अनेन स्वतः सम्भविना वस्तुमात्रेण एतत्प्रतिपादिकाया भाविपरपुरुषोपभोगजनखक्षतादिगोपनरूपं वस्तुमात्रं व्यज्यते ॥

"दिशि मन्दायते तेजो दक्षिणस्यां रवेरपि ।
तस्यामेव रघोः पाण्ड्याः प्रतापं न विषेहिरे" ॥

अनेन स्वतः सम्भविना वस्तुना रवितेजसो रघुप्रतापोऽधिक इति व्यतिरेकालङ्कारो व्यज्यते ॥

"आपतन्तममुं दूराद्दूरीकृतपराक्रमः ।
बलोऽवलोकयामास मातङ्गमिव केसरी" ॥

अत्रोपमालङ्काररूपेण स्वतः सम्भविना व्यञ्जकार्थेन बलदेवः क्षणेनैव वेणुदारिणः क्षयं करिष्यतीति वस्तु व्यज्यते ॥

"गाढकान्तदशनक्षतव्यथासङ्कटादरिवधूजनस्य यः ।
ओष्ठविद्रुमदलान्यमोचयन्निर्दशन् युधि रुषा निजाधरं" ॥

अत्र स्वतः सम्भविना विरोधालङ्कारेणाधरो निर्दष्टः अनेन आपादितास्तेति समुच्चयालङ्कारो व्यङ्ग्यः ॥

"सज्जेइ सुरहिमासो ण दाव अप्पेइ जुअइजणलक्खमुहे ।
अहिणवसहआरमुहे णवपल्लवपत्तले अणङ्गस्स सरे" * ॥

अत्र वसन्तः शरकारः कामो धन्वी युवतयो लक्ष्यं पुष्पाणि शरा इति कविप्रौढोक्तिसिद्धं वस्तु प्रकाशीभवन्मदनविजृम्भणरूपं वस्तु व्यनक्ति ॥

---

* सज्जेइ इति । सज्जयति सुरभिमासो न तावदर्पयति युवतिजनलक्ष्यसहान् । अभिनवसहकारमुखान् नवपल्लवपत्त्रलाननङ्गस्य शरान् ॥ इति सं० ॥ टी० ॥

"रश्मीषु विमलभानोः करजालेन प्रकाशितं वीर।
धवलयति भुवनमण्डलमखिलं तव कीर्त्तिसन्ततिः सततं"॥

अत्र कविप्रौढोक्तिसिद्धेन वस्तुना कीर्त्तिसन्ततेश्चन्द्रकरजालादधिककालप्रकाशकत्वेन व्यतिरेकालङ्कारो व्यङ्ग्यः॥

"दशाननकिरीटेभ्यस्तत्क्षणं राक्षसश्रियः।
मणिव्याजेन पर्य्यस्ताः पृथिव्यामश्रुविन्दवः"॥

अत्र कविप्रौढोक्तिसिद्धेनापह्नुत्यलङ्कारेण भविष्यद्राक्षसश्रीविनाशरूपं वस्तु व्यज्यते॥

"धम्मिल्ले नवमल्लिकासमुदयो हस्ते सिताम्भोरुहं
हारः कण्ठतटे पयोधरयुगे श्रीखण्डलेपो घनः।
एकोऽपि त्रिकलिङ्गभूमितिलक त्वत्कीर्त्तिराशिर्य्यथौ
नानामण्डनतां पुरन्दरपुरीवामभ्रुवां विग्रहे"॥

अत्र कविप्रौढोक्तिसिद्धेन रूपकालङ्कारेण "भूमिष्ठोऽपि स्वर्गस्थानामुपकारं करोषीति" विभावनालङ्कारो व्यज्यते॥

"शिखरिणि क नु नाम कियच्चिरं किमभिधानमसावकरोत्तपः।
सुमुखि येन तवाधरपाटलं दशति विम्बफलं शुकशावकः"॥

अत्रानेन कविनिबद्धस्य कस्यचित् कामिनः प्रौढोक्तिसिद्धेन वस्तुना तवाधरः पुण्यातिशयलभ्य इति वस्तु प्रतीयते।

"सुभगे कोटिसङ्ख्यत्वमुपेत्य मदनाशुगैः।
वसन्ते पञ्चता त्यक्ता पञ्चतासीद्वियोगिनां"॥

अत्र कविनिबद्धवक्तृप्रौढोक्तिसिद्धेन कामशराणां कोटिसङ्ख्यत्वप्राप्त्या निखिलवियोगिमरणेन वस्तुना शराणां पञ्चता

न्तराम् विमुच्य नियोगिनः श्रितेत्युत्प्रेक्षालङ्कारो व्यज्यते ॥

"मल्लिकामुकुले चण्डि भाति गुञ्जन्मधुव्रतः ।
प्रयाणे पञ्चवाणस्य शङ्खमापूरयन्निव" ॥

अत्र कविनिबद्धवक्तृप्रौढोक्तिसिद्धेन उत्प्रेक्षालङ्कारेण कामस्यायमुन्मादकः कालः प्राप्तस्तत्कथं "मानिनि मानं न मुञ्चसीति" वस्तु व्यज्यते ॥

"महिलासहस्सभरिए तुह हिअए सुहअ सा अमाअन्ती ।
अनुदिणमणण्णआमा अङ्गं अनुअं पि तनुएइ" * ॥

"अमामाअन्तीति" कविनिबद्धवक्तृप्रौढोक्तिसिद्धेन काव्यलिङ्गालङ्कारेण तनोस्तनूकरणेऽपि तव हृदये न वर्त्तत इति विशेषोक्त्यलङ्कारो व्यज्यते । न खलु कवेः कविनिबद्धस्येव रागाद्याविष्टता । अतः कविनिबद्धवक्तृप्रौढोक्तिः कविप्रौढोक्तेरधिकं सहृदयचमत्कारिणीति पृथक्प्रतिपादिता । एषु च अलङ्कृतिव्यञ्जनस्थले रूपकोत्प्रेक्षणव्यतिरेकादिमात्रस्य प्राधान्यं सहृदयसंवेद्यं न तु रूप्यादीनामित्यलङ्कृतेरेव मुख्यत्वं ॥

(२५९) एकः शब्दार्थशक्त्युत्थे

उभयशक्त्युद्भवे व्यङ्ग्ये एकोध्वनेर्भेदः । यथा ।

"हिममुक्तचन्द्ररुचिरः सपद्मको
मदयन् द्विजान् जनितमीनकेतनः ।

---

* महिलासहस्स इति । महिलासहस्रभरिते तव हृदये सुभग सा अमान्ती । अनुदिनमनन्यमना अङ्गं तनुकमपि तनूकरोति ॥ इति सं० ॥ टी० ॥

अभवन्प्रसादितसुरो महोत्सवः
प्रमदाजनस्य स चिराय माधवः" ॥

अत्र माधवः कृष्णो माधवो वसन्त इवेत्युपमालङ्कारो व्यङ्ग्यः ॥ एवञ्च व्यङ्ग्यभेदादेव व्यञ्जकानां काव्यानां भेदः।

(२६०) तदष्टादशधा ध्वनिः।

अविवक्षितवाच्योऽर्थान्तरसङ्क्रमितवाच्योऽत्यन्ततिरस्कृतवाच्यश्चेति द्विविधः। विवक्षितान्यपरवाच्यस्तु असंलक्ष्यक्रमव्यङ्ग्यत्वेनैकः। संलक्ष्यक्रमव्यङ्ग्यवाच्यत्वेन च शब्दार्थोभयशक्तिमूलतया पञ्चदशेति अष्टादशभेदो ध्वनिः। एषु च।

(२६१) वाक्ये शब्दार्थशक्त्युत्थस्तदन्ये पदवाक्ययोः ॥

तत्र अर्थान्तरसङ्क्रमितवाच्यो ध्वनिः पदगतो यथा ॥

"धन्यः स एव तरुणो नयने तस्यैव नयने च।
युवजनमोहनविद्या भवितेयं यस्य सम्मुखे सुमुखी" ॥

अत्र द्वितीयनयनशब्दो भाग्यवत्त्वादिगुणविशिष्टनयनपरः। वाक्यगतो यथा ॥

"त्वामस्मि वच्मि विदुषां समुदायोऽत्र तिष्ठति।
आत्मीयां मतिमादाय स्थितिमत्र विधेहि तत्" ॥

अत्र प्रतिपाद्यस्य सम्मुखीनत्वादेव लब्धे प्रतिपाद्यत्वे "त्वामिति" पुनर्वचनमन्यव्यावृत्तिविशिष्टं त्वदर्थं लक्षयति। एवं वच्मीत्यनेनैव कर्त्तरि लब्धे "अस्मीति" पुनर्वचनमन्यव्यावृत्तिविशिष्टं मदर्थं लक्षयति। तथा "विदुषां समुदाय" इत्यादिवचनेनैव

"मलीमसलीषु वनान्तरेषु वल्ल्यन्तरे वल्लभमाक्रयन्ती।
चर्व्वादिपञ्चीकलमादभञ्जी मञ्जीतमञ्जीकुरुते स्म भृङ्गी"॥

आदिग्रहणात्तापसादयः। रौद्राभासो यथा।

"रक्तोत्फुल्लविशाललोलनयनः कम्पोत्तराङ्गो मुहु-
र्मुक्त्वा कर्णमपेतभीर्धृतधनुर्बाणो हरेः पश्यतः।
आध्मातः कटुकोक्तिभिः स्वमसकृद्दोर्व्विक्रमं कीर्त्तय-
न्नंसास्फोटपटुर्युधिष्ठिरमसौ हन्तुं प्रविष्टोऽर्जुनः"॥

भयानकाभासो यथा।

"अशक्नुवन् सोढुमधीरलोचनः सहस्ररश्मेरिव यस्य दर्शनं।
प्रविश्य हेमाद्रिगुहागृहान्तरं निनाय बिभ्यद्दिवसानि कौशिकः"॥

उत्तमविषयमेत्र हि भयं रसप्रकृतिः। एवमन्यत्र।

(२४८) भावाभासो लज्जादिके तु वेश्यादिविषये स्यात्॥

स्पष्टं।

(२४९) भावस्य शान्तावुदये सन्धिमिश्रे तयोः क्रमात्।
भावस्य शान्तिरुदयः सन्धिः शबलता मता॥

क्रमेण यथा।

"सुतनु जहिहि कोपं पश्य पादानतं मां
न खलु तव कदाचित्कोप एवंविधोऽभूत्।
इति निगदति नाथे तिर्य्यगामीलिताक्ष्या
नयनजलमनल्पं मुक्तमुक्तं न किञ्चित्"॥

अत्र अप्रमोचनेनेर्ष्याख्यसञ्चारिभावस्य शमः।

"चरणपतनप्रत्याख्यानात् प्रसादपराङ्मुखे
निभृतकितवाचारेत्युक्त्वा रुषा परुषीकृते।
व्रजति रमणे निःश्वस्योच्चैः स्तनस्थितहस्तया
नयनसलिलच्छन्ना दृष्टिः सखीषु निवेशिता" ॥

अत्र विषादस्योदयः।

"नयनयुगासेचनकं मानसवृत्त्यापि दुष्प्रापं।
रूपमिदं मदिराक्ष्या मदयति हृदयं दुनोति च मे" ॥

अत्र हर्षविषादयोः सन्धिः।

"क्वाकार्य्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा
दोषाणां प्रशमाय मे श्रुतमहो कोपेऽपि कान्तं मुखं।
किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा
चेतः स्वास्थ्यमुपैहि कः खलु युवा धन्योऽधरं धास्यति" ॥

अत्र वितर्कौत्सुक्यमतिस्मरणशङ्कादैन्यधृतिचिन्तानां शबलता ॥ * ॥

इति साहित्यदर्पणे रसभावादिनिरूपणो नाम तृतीयः परिच्छेदः ॥ * ॥

अथ काव्यभेदमाह।

(२५०) काव्यं ध्वनिर्गुणीभूतव्यङ्ग्यञ्चेति द्विधा मतं।

तत्र।

(२५१) वाच्यातिशयिनि व्यङ्ग्ये ध्वनिस्तत्काव्यमुत्तमं ॥

वाच्यादधिकचमत्कारिणि व्यङ्ग्यार्थे ध्वन्यतेऽस्मिन्निति व्युत्पत्त्या ध्वनिर्नामोत्तमं काव्यं।

(२५२) भेदौ ध्वनेरपि द्वावुदीरितौ लक्षणाभिधामूला।
अविवक्षितवाच्योऽन्यो विवक्षितान्यपरवाच्यश्च॥

तत्राविवक्षितवाच्यो नाम लक्षणामूलो ध्वनिः। लक्षणामूलत्वादेवात्र वाच्यमविवक्षितं बाधितस्वरूपं। विवक्षितान्यपरवाच्यस्त्वभिधामूलः। अत एवात्र वाच्यं विवक्षितं। अन्यपरं व्यङ्ग्यनिष्ठं। अत्र हि वाच्योऽर्थः स्वरूपं प्रकाशयन्नेव व्यङ्ग्यार्थस्य प्रकाशकः। यथा प्रदीपो घटस्य। अभिधामूलस्य बहुविषयतया पश्चान्निर्देशः। अविवक्षितवाच्यस्य भेदावाह॥

(२५३) अर्थान्तरं सङ्क्रमिते वाच्येऽत्यन्तं तिरस्कृते।
अविवक्षितवाच्योऽपि ध्वनिर्द्वैविध्यमृच्छति॥

अविवक्षितवाच्यो नाम ध्वनिरर्थान्तरसङ्क्रमितवाच्योऽत्यन्ततिरस्कृतवाच्यश्चेति द्विविधः। यत्र स्वयमनुपयुज्यमानो मुख्योऽर्थः स्वविशेषरूपेऽर्थान्तरे परिणमति तत्र मुख्यार्थस्य स्वविशेषरूपार्थान्तरसङ्क्रमितत्वादर्थान्तरसङ्क्रमितवाच्यत्वं। यथा।

"कदली कदली करभः करभः करिराजकरः करिराजकरः।
भुवनत्रितयेऽपि बिभर्त्ति तुलामिदमूरुयुगं न चमूरुदृशः"॥

अत्र द्वितीयकदल्यादिशब्दाः पौनरुक्त्यभिया सामान्यकदल्यादिरूपे मुख्यार्थे बाधिता जाड्यादिगुणविशिष्टकदल्यादिरूपमर्थं बोधयन्ति जाड्याद्यतिशयश्च व्यङ्ग्यः। यत्र पुनः स्वार्थं सर्वथा परित्यजन्नर्थान्तरे परिणमति तत्र मुख्यार्थस्यात्यन्ततिरस्कृतत्वादत्यन्ततिरस्कृतवाच्यत्वं। यथा।

"निःश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते"॥

अत्रान्धशब्दो मुख्यार्थे बाधितोऽप्रकाशरूपमर्थं बोधयति अप्रकाशातिशयस्य व्यङ्ग्यः। अन्धत्वाप्रकाशत्वयोः सामान्यविशेषभावाभावान्नार्थान्तरसङ्क्रमितवाच्यत्वं॥ यथा।

"भम धम्मिअ वीसत्थो सो सुणहो अज्ज मारिओ देण।
गोलाणईकच्छकुडङ्गवासिणा दरीअसीहेण" *॥

अत्र भ्रम धार्म्मिकेत्यतो भ्रमणस्य विधिः प्रकृतेऽनुपयुज्यमानतया भ्रमणनिषेधे पर्य्यवस्यतीति विपरीतलक्षणाशङ्का न कार्य्या। यत्र खलु विधिनिषेधावुत्पद्यमानावेव निषेधविध्योः पर्य्यवस्यतस्तत्रैव तदवसरः। यत्र पुनः प्रकरणादिपर्य्यालोचनेन विधिनिषेधयोर्निषेधविधी अवगम्येते तत्र ध्वनित्वमेव। तदुक्तं॥

"क्वचिद्बाध्यतया ख्यातिः क्वचित्ख्यातस्य बाधनं।
पूर्व्वत्र लक्षणैव स्यादुत्तरत्राभिधैव तु"॥

अत्राद्ये मुख्यार्थस्यार्थान्तरे सङ्क्रमणं प्रवेशः न तु तिरोभावः अत एवात्राजहत्स्वार्थलक्षणा। द्वितीये तु स्वार्थस्यात्यन्तं तिरस्कृतत्वाज्जहत्स्वार्था॥

(२५४) विवक्षिताभिधेयोऽपि द्विभेदः प्रथमं मतः।
असंलक्ष्यक्रमो यत्र व्यङ्ग्यो लक्ष्यक्रमस्तथा॥

विवक्षितान्यपरवाच्योऽपि ध्वनिरसंलक्ष्यक्रमव्यङ्ग्यः संलक्ष्यक्रमव्यङ्ग्यश्चेति द्विविधः।

---

* भम धम्मिअ इति। भ्रम धार्म्मिक विश्वस्तः स श्वाऽद्य मारितस्तेन। गोदावरीकच्छकुञ्जवासिना दृप्तसिंहेन॥ इति सं॰टी॰॥

(२५५) तत्राद्यो रसभावादिरेक एवात्र गण्यते।
एकोऽपि भेदोऽनन्तत्वात् सङ्ख्येयस्तस्य नैव यत्॥

उक्तस्वरूपो रसभावादिरसंलक्ष्यक्रमव्यङ्ग्यः। अत्र व्यङ्ग्यप्रतीतेर्व्विभावादिप्रतीतिकारणकत्वात् क्रमोऽवश्यमस्ति किन्तु उत्पलपत्रशतव्यतिभेदवल्लाघवान्न संलक्ष्यते। एषु रसादिषु च एकस्यापि भेदस्यानन्तत्वात् सङ्ख्यातुमशक्यत्वादसंलक्ष्यक्रमव्यङ्ग्यध्वनिर्नाम काव्यमेकभेदमेवोक्तं। तथाहि एकस्यैव शृङ्गारस्य एकोऽपि सम्भोगरूपो भेदः परस्परालिङ्गनाधरपानचुम्बनादिभेदात् प्रत्येकञ्च विभावादिवैचित्र्यात् सङ्ख्यातुमशक्यः का गणना च सर्व्वेषां॥

(२५६) शब्दार्थोभयशक्त्युत्थव्यङ्ग्योऽनुस्वानसन्निभे।
ध्वनिर्लक्ष्यक्रमव्यङ्ग्यस्त्रिविधः कथितो बुधैः॥

क्रमलक्ष्यत्वादेवानुरणनरूपो यो व्यङ्ग्यस्तस्य शब्दशक्त्युद्भवत्वेन अर्थशक्त्युद्भवत्वेन शब्दार्थशक्त्युद्भवत्वेन च त्रैविध्यात् संलक्ष्यक्रमव्यङ्ग्यनाम्नो ध्वनेः काव्यस्यापि त्रैविध्यं। तत्र।

(२५७) वस्त्वलङ्काररूपत्वाच्छब्दशक्त्युद्भवो द्विधा।

अलङ्कारशब्दस्य पृथगुपादानादनलङ्कारं वस्तुमात्रं गृह्यते। तत्र वस्तुरूपशब्दशक्त्युद्भवो व्यङ्ग्यो यथा॥

"पन्थिअ ण एत्थ सत्थरमत्थि मणं पत्थरत्थले गामे।
उण्णअपओहरं पेक्खिअ उण जइ वससि ता वससु" *॥

---

* पन्थिअ इति। पथिक नात्रास्तरोऽस्ति मनाक् प्रस्तरस्थले ग्रामे। उन्नतपयोधरं प्रेक्ष्य पुन र्यदि वससि तद्वस॥ इति सं॰॥ टी॰॥

अत्र मत्सरादिशब्दशक्त्या यद्युपभोगक्षमोऽसि तदास्स्वेति वस्तु व्यज्यते।

अलङ्काररूपो यथा ॥ "दुर्गालङ्घितविग्रह इत्यादि" ॥ अत्र प्राकरणिकस्य उमानाममहादेवीवल्लभभानुदेवनृपतेर्वर्णने द्वितीयार्थसूचितमप्राकरणिकस्य पार्व्वतीवल्लभस्य वर्णनमसम्बद्धं मा प्रसाङ्क्षीदितीश्वरभानुदेवयोरुपमानोपमेयभावः कल्प्यते। तदत्र उमावल्लभ उमावल्लभ इवेत्युपमालङ्कारो व्यङ्ग्यः। यथा वा ॥

"अमितः समितः प्राप्तैरुत्कर्षैर्हर्षद: प्रभो।
अहितः सहितः साधुयशोभिरसतामसि" ॥

अत्रामित इत्यादावपिशब्दाभावाद्विरोधाभासो व्यङ्ग्यः। व्यङ्ग्यस्यालङ्कार्य्यत्वेऽपि ब्राह्मणश्रमणन्यायादलङ्कारत्वमुपचर्य्यते ॥

(२५८) वस्तु वालङ्कृतिर्व्वापि द्विधार्थः सम्भवी स्वतः।
कवेः प्रौढोक्तिसिद्धो वा तन्निबद्धस्य चेति षट् ॥
षड्भिस्तैर्व्यज्यमानस्तु वस्त्वलङ्काररूपकः।
अर्थशक्त्युद्भवो व्यङ्ग्यो याति द्वादशभेदताम् ॥

स्वतः सम्भवी औचित्याद्बहिरपि सम्भाव्यमानः। प्रौढोक्त्या सिद्धो न त्वौचित्येन। तत्र क्रमेण यथा ॥

"दृष्टिं हे प्रतिवेशिनि क्षणमिहाप्यस्मद्गृहे दास्यसि
प्रायेणास्य शिशोः पिता न विरसाः कौपीरपः पास्यति।
एकाकिन्यपि यामि सत्वरमितः स्रोतस्तमालाकुलं
नीरन्ध्रास्तनुमालिखन्तु जरठच्छेदा नलग्रन्थयः" ॥

अनेन स्वतः सम्भविना वस्तुमात्रेण एतत्प्रतिपादिकाया भाविपरपुरुषोपभोगजनखक्षतादिगोपनरूपं वस्तुमात्रं व्यज्यते॥

"दिशि मन्दायते तेजो दक्षिणस्यां रवेरपि।
तस्यामेव रघोः पाण्ड्याः प्रतापं न विषेहिरे"॥

अनेन स्वतः सम्भविना वस्तुना रवितेजसो रघुप्रतापोऽधिक इति व्यतिरेकालङ्कारो व्यज्यते॥

"आपतन्तममुं दूरादूरीकृतपराक्रमः।
बलोऽवलोकयामास मातङ्गमिव केसरी"॥

अत्रोपमालङ्काररूपेण स्वतः सम्भविना व्यङ्ग्यार्थेन बलदेवः क्षणेनैव वेणुदारिणः क्षयं करिष्यतीति वस्तु व्यज्यते॥

"गाढकान्तदशनक्षतव्यथासङ्कटादरिवधूजनस्य यः।
ओष्ठविद्रुमदलान्यमोचयन्निर्दशन् युधि रुषा निजाधरं"॥

अत्र स्वतः सम्भविना विरोधालङ्कारेणाधरो निर्दष्टः अचवो व्यापादिताश्चेति समुच्चयालङ्कारो व्यङ्ग्यः॥

"सज्जेइ सुरहिमासो ण आपणेइ जुअइजणलक्खसहे।
अहिणवसहआरमुहे णअपल्लवपत्तले अणङ्गस्स सरे"*॥

अत्र वसन्तः शरकारः कामो धन्वी युवतयो लक्ष्यं पुष्पाणि शरा इति कविप्रौढोक्तिसिद्धं वस्तु प्रकाशीभवन्मदनविजृम्भणरूपं वस्तु व्यनक्ति॥

---

* सज्जेइ इति। सज्जयति सुरभिमासो न चानयति युवतिजनलक्ष्यसहान्। अभिनवसहकारमुखान् नवपल्लवपत्त्रलाननङ्गस्य शरान्॥ इति सं॰॥ टी॰॥

"रजनीषु विमलभानोः करजालेन प्रकाशितं वीर ।
धवलयति भुवनमण्डलमखिलं तव कीर्त्तिसन्ततिः सततं"॥

अत्र कविप्रौढोक्तिसिद्धेन वस्तुना कीर्त्तिसन्ततेश्चन्द्रकरजालादधिककालप्रकाशकत्वेन व्यतिरेकालङ्कारो व्यङ्ग्यः ॥

"दशाननकिरीटेभ्यस्तत्क्षणं राक्षसश्रियः ।
मणिव्याजेन पर्य्यस्ताः पृथिव्यामश्रुविन्दवः" ॥

अत्र कविप्रौढोक्तिसिद्धेनापह्नुत्यलङ्कारेण भविष्यद्राक्षसश्रीविनाशरूपं वस्तु व्यज्यते ॥

"धम्मिल्ले नवमल्लिकासमुदयो हस्ते सिताम्भोरुहं
हारः कण्ठतटे पयोधरयुगे श्रीखण्डलेपो घनः ।
एकोऽपि त्रिकलिङ्गभूमितिलक त्वत्कीर्त्तिराशिर्ययौ
नानामण्डनतां पुरन्दरपुरीवामभ्रुवां विग्रहे" ॥

अत्र कविप्रौढोक्तिसिद्धेन रूपकालङ्कारेण "भूमिष्ठोऽपि स्वर्गस्थानामुपकारं करोषीति" विभावनालङ्कारो व्यज्यते ॥

"शिखरिणि क नु नाम कियच्चिरं किमभिधानमसावकरोत्तपः ।
सुमुखि येन तवाधरपाटलं दशति विम्बफलं शुकशावकः" ॥

अत्रानेन कविनिबद्धस्य कस्यचित् कामिनः प्रौढोक्तिसिद्धेन वस्तुना तवाधरः पुण्यातिशयलभ्य इति वस्तु प्रतीयते ।

"सुभगे कोटिसङ्ख्यत्वमुपेत्य मदनाशुगैः ।
वसन्ते पञ्चता त्यक्ता पञ्चतासीद्वियोगिनां" ॥

अत्र कविनिबद्धवक्तृप्रौढोक्तिसिद्धेन कामशराणां कोटिसङ्ख्यत्वप्राप्त्या निखिलवियोगिमरणेन वस्तुना शराणां पञ्चता

शरान् विमुञ्च वियोगिनः प्रतीत्युत्प्रेक्षालङ्कारो व्यज्यते ॥

"मल्लिकामुकुले चण्डि भाति गुञ्जन्मधुव्रतः ।
प्रयाणे पञ्चबाणस्य शङ्खमापूरयन्निव" ॥

अत्र कविनिबद्धवक्तृप्रौढोक्तिसिद्धेन उत्प्रेक्षालङ्कारेण कामस्यायमुन्मादकः कालः प्राप्तस्तत्कथं "मानिनि मानं न मुञ्चसीति" वस्तु व्यज्यते ॥

"महिलासहस्सभरिए तुह हिअए सुहअ सा अमाअन्ती ।
अनुदिणमणण्णमाअक्ष्रं अनुअं पि तनु एइ" * ॥

"अमामाअन्तीति" कविनिबद्धवक्तृप्रौढोक्तिसिद्धेन काव्यलिङ्गालङ्कारेण तनोस्तनूकरणेऽपि तव हृदये न वर्त्तत इति विशेषोक्त्यलङ्कारो व्यज्यते । न खलु कवेः कविनिबद्धस्येव रागाद्याविष्टता । अतः कविनिबद्धवक्तृप्रौढोक्तिः कविप्रौढोक्तेरधिकं सहृदयचमत्कारिणीति पृथक्प्रतिपादिता । एषु च अलङ्कृतिव्यञ्जनस्थले रूपकोत्प्रेक्षणव्यतिरेकादिमात्रस्य प्राधान्यं सहृदयसंवेद्यं न तु रूपादीनामित्यलङ्कृतेरेव मुख्यत्वं ॥

(२५९) एकः शब्दार्थशक्त्युत्थे

उभयशक्त्युद्भवे व्यङ्ग्ये एको ध्वनेर्भेदः । यथा ।

"हिममुक्तचन्द्ररुचिरः सपद्मको
मदयन् द्विजान् जनितमीनकेतनः ।

---

* महिलासहस्स इति । महिलासहस्रभरिते तव हृदये सुभग सा अमान्ती । अनुदिनमनन्यमना अङ्गं तनुकमपि तनूकरोति ॥ इति सं० ॥ टी० ॥

अभवत्प्रसादितसुरो महोत्सवः
प्रमदाजनस्य स चिराय माधवः" ॥

अत्र माधवः कृष्णो माधवो वसन्त इवेत्युपमालङ्कारो व्यङ्ग्यः ॥
एवञ्च व्यङ्ग्यभेदादेव व्यञ्जकानां काव्यानां भेदः।

(२६०) तदष्टादशधा ध्वनिः।

अविवक्षितवाच्योऽर्थान्तरसङ्क्रमितवाच्योऽत्यन्ततिरस्कृतवाच्यश्चेति द्विविधः। विवक्षितान्यपरवाच्यस्तु असंलक्ष्यक्रमव्यङ्ग्यत्वेनैकः। संलक्ष्यक्रमव्यङ्ग्यवाच्यत्वेन च शब्दार्थोभयशक्तिमूलतया पञ्चदशेति अष्टादशभेदो ध्वनिः। एषु च।

(२६१) वाक्ये शब्दार्थशक्त्युत्थस्तदन्ये पदवाक्ययोः॥

तत्र अर्थान्तरसङ्क्रमितवाच्यो ध्वनिः पदगतो यथा ॥

"धन्यः स एव तरुणो नयने तस्यैव नयने च।
युवजनमोहनविद्या भवितेयं यस्य सम्मुखे सुमुखी" ॥

अत्र द्वितीयनयनशब्दो भाग्यवत्त्वादिगुणविशिष्टनयनपरः।
वाक्यगतो यथा ॥

"त्वामस्मि वच्मि विदुषां समुदायोऽत्र तिष्ठति।
आत्मीयां मतिमादाय स्थितिमत्र विधेहि तत्" ॥

अत्र प्रतिपाद्यस्य सम्मुखीनत्वादेव लब्धे प्रतिपाद्यत्वे "त्वामिति" पुनर्वचनमन्यव्यावृत्तिविशिष्टं त्वदर्थं लक्षयति। एवं वच्मीत्यनेनैव कर्त्तरि लब्धे "अस्मीति" पुनर्वचनमन्यव्यावृत्तिविशिष्टं मदर्थं लक्षयति। तथा "विदुषां समुदाय" इत्यादिवचनेनैव

वक्तुः प्रतिपादने सिद्धे पुनः "वच्मीति" वचनं "उपदिशामि" इति वचनविशेषरूपमर्थं लक्षयति । एतानि च लक्षितानि स्वातिशयं व्यञ्जयन्ति । एतेन मम वचनं तवात्यन्तं हितं तदवश्यमेतत् कर्त्तव्यमित्यभिप्रायः । तदेवमयं वाक्यगतोऽर्थान्तरसंक्रमितवाच्यो ध्वनिः । अत्यन्ततिरस्कृतवाच्यः पदगतो यथा ॥ "निश्वासान्ध इवेत्यादि" । वाक्यगतो यथा ॥ "उपकृतं बहु तत्रेत्यादि" अन्येषां वाक्यगतत्वे उदाहृतं । पदगतत्वे यथा ।

"लावण्यं तदसौ कान्तिस्तद्रूपं स वचःक्रमः ।
तदा सुधास्पदमभूदधुना तु ज्वरो महान् ॥

अत्र लावण्यादीनां तादृगनुभवैकगोचरताव्यञ्जकानां तदादिशब्दानामेव प्राधान्यं । अन्येषान्तु तदुपकारित्वमेवेति तन्मूल एव ध्वनिव्यपदेशः ॥ तदुक्तं ध्वनिकृता ।

"एकावयवसंस्थेन भूषणेनेव कामिनी ।
पदद्योत्येन सुकवेर्ध्वनिना भाति भारती ॥

एवं भावादिष्वप्यूह्यं ।

"भुक्तिमुक्तिकृदेकान्तसमादेशनतत्परः ।
कस्य नानन्दनिस्यन्दं विदधाति सदागमः" ॥

अत्र सदागमशब्दः सन्निहितमुपनायकं प्रति सच्छास्त्रार्थमभिधाय "सतः पुरुषस्यागमः" इति वस्तु व्यनक्ति ॥ ननु "सदागमः सदागम इवेति" न कथमुपमाध्वनिः । सदागमशब्दार्थयोरुपमानोपमेयभावाविवक्षणाद्रहस्यसंगोपनार्थमेव

हि चतुर्थपदप्रतिपाद्यं प्रकरणादिपर्य्यालोचनेन च स्वच्छा-
न्ताभिधानस्यासम्भवत्वात्।

"अनन्यसाधारणधीर्धृताखिलवसुन्धरः।
राजते कोऽपि जगति स राजा पुरुषोत्तमः"॥

अत्र पुरुषश्रेष्ठः पुरुषोत्तम इवेत्युपमाध्वनिः। अनयोः
शब्दशक्तिमूलौ संलक्ष्यक्रमभेदौ॥

"सायं स्नानमुपासितं मलयजेनाङ्गं समालेपितं
यातोऽस्ताचलमौलिमम्बरमणिर्विस्रब्धमत्रागतिः।
आश्चर्य्यं तव सौकुमार्य्यमभितः क्लान्ताऽसि येनाधुना
नेत्रद्वन्द्वममीलनव्यतिकरं शक्नोति नासितुं"॥

अत्र स्वतःसम्भविना वस्तुना कृतपरपुरुषपरिचया क्लान्ता
ऽसीति वस्तु व्यज्यते। तत्राधुना क्लान्ताऽसि न तु पूर्व्वं कदा-
चिदपि तवैवंविधः क्लमो दृष्टः इति बोधयतोऽधुना पदस्यैवेत-
रपदार्थोत्कर्षादधुना पदस्यैव पदान्तरापेक्षया वैचित्र्यं।

"तदप्राप्तिमहादुःखविलीनाशेषपातका।
तच्चिन्ताविपुलाह्लादक्षीणपुण्यचया तथा॥
चिन्तयन्ती जगत्सूतिं परं ब्रह्मस्वरूपिणं।
निरुच्छासतया मुक्तिं गताऽन्या गोपकन्यका"॥

अत्राशेषचयपदप्रभावादनेकजन्मसहस्रभोग्यदुष्कृतसुकृतफ-
लराशितादात्म्याध्यवसिततया भगवद्विरहदुःखचिन्ताह्लादयोः
प्रत्यासन्नमित्यतिशयोक्तिद्वयप्रतीतिरशेषचयपदद्वयद्योत्या। अत्र
च व्यञ्जकस्य प्रौढोक्तिमन्तरेणापि सम्भवात्स्वतः सम्भविता॥

"पश्यन्त्यसङ्ख्यपथगां त्वद्दानजलवाहिनीं।
देव त्रिपथगात्मानं गोपयत्युग्रमूर्द्धनि"॥

इदं मम। अत्र "पश्यन्तीति" कविप्रौढोक्तिसिद्धेन काव्यलिङ्गालङ्कारेण न केऽप्यन्ये दातारस्तव सदृशा इति व्यतिरेकालङ्कारोऽसङ्ख्यपदद्योत्यः। एवमन्येष्वप्यर्थशक्तिमूलसंलक्ष्यक्रमभेदेषूदाहार्य्यं। तदेवं ध्वनेः पूर्व्वोक्तेष्वष्टादशसु भेदेषु मध्ये शब्दार्थशक्त्युत्थो व्यङ्ग्यो वाक्यमात्रे भवन्नेकः। अन्ये पुनः सप्तदश वाक्ये पदे चेति चतुस्त्रिंशदिति पञ्चत्रिंशद्भेदाः॥

(२६२) प्रबन्धेऽपि मतो धीरैरर्थशक्त्युद्भवो ध्वनिः।

प्रबन्धो महावाक्यं। अनन्तरोक्तद्वादशभेदोऽर्थशक्त्युत्थः। यथा महाभारते गृध्रगोमायुसंवादे॥

"अलं स्थित्वा श्मशानेऽस्मिन् गृध्रगोमायुसङ्कुले।
कङ्कालबहुले घोरे सर्व्वप्राणिभयङ्करे॥
न चेह जीवितः कश्चित् कालधर्म्ममुपागतः।
प्रियो वा यदि वा द्वेष्यः प्राणिनां गतिरीदृशी"॥

इति दिवसे प्रभवस्य गृध्रस्य श्मशाने मृतं बालमुपादाय तिष्ठतां दिवसे तं परित्यज्य गमनमिष्टं॥

"आदित्योऽयं स्थितो मूढाः स्नेहं कुरुत साम्प्रतं।
बहुविघ्नो मुहूर्त्तोऽयं जीवेदपि कदाचन॥
अमुं कनकवर्णाभं बालमप्राप्तयौवनं।
गृध्रवाक्यात् कथं बालास्त्यजध्वमविशङ्किताः"॥

इति निशि समर्थस्य गोमायोर्दिवसे परित्यागोऽभिलषित इति वाक्यसमूहेन द्योत्यते । अत्र स्वतः सम्भवी व्यञ्जकः । एवमन्येष्वेकादशभेदेषूदाहार्य्यं ॥ एवं वाच्यार्थव्यञ्जकत्वे उदाहृतं । लक्ष्यार्थस्य यथा । "निःशेषच्युतचन्दनमित्यादि" । व्यङ्ग्यार्थस्य यथा । "उअ णिच्चलेत्यादि" । अनयोः स्वतःसम्भविनौ लक्ष्यव्यङ्ग्यार्थौ व्यञ्जकौ । एवमन्येष्वेकादशभेदेषूदाहार्य्यं ॥

(२६३) पदांशवर्णरचनाप्रबन्धेष्वस्फुटक्रमः ।
असंलक्ष्यक्रमव्यङ्ग्यो ध्वनिस्तत्र पदांशकः ॥

प्रकृतिप्रत्ययोपसर्गनिपातादिभेदादनेकविधः । यथा ।

"चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं
रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः ।
करं व्याधुन्वत्याः पिबसि रतिसर्व्वस्वमधरं
वयं तत्त्वान्वेषान्मधुकर हतास्त्वं खलु कृती" ॥

अत्र "हता" इति न पुनर्दुःखं प्राप्तवन्त इति हन् प्रकृतेः ।

"मुहुरङ्गुलिसंवृताधरोष्ठं प्रतिषेधाक्षरविक्लवाभिरामं ।
मुखमंसविवर्त्ति पक्ष्मलाक्ष्याः कथमप्युन्नमितं न चुम्बितन्तु" ॥

अत्र "तु" इति निपातस्यानुतापव्यञ्जकत्वं । "न्यक्कारो ह्ययमेव मे यदरय इत्यादौ" । "अरय" इति बहुवचनस्य "तापस" इत्येकवचनस्य "अत्रैवेति" सर्व्वनाम्नः "निहन्तीति" "जीवतीति" च तिङः "अहो" इत्यव्ययस्य "ग्रामटिकेति" कप्रत्ययतद्धितस्य "विलुण्ठनेति" व्युपसर्गस्य "भुजैरिति" बहुवचनस्य व्यञ्जकत्वं ।

"आहारे विरतिः समस्तविषयग्रामे निवृत्तिः परा
नासाग्रे नयनं तदेतदपरं यच्चैकतानं मनः।
मौनञ्चेदमिदञ्च शून्यमधुना यद्विश्वमाभाति ते
तद्ब्रूयाः सखि योगिनी किमसि भोः किं वा वियोगिन्यसि"॥

अत्र तु "आहार इति" विषयसप्तम्याः "समस्तेति" "परेति" च विशेषणद्वयस्य "मौनं चेदमिति" प्रत्यक्षपरामर्शिनः सर्व्वनाम्नः "आभातीति" उपसर्गस्य "असीति" प्रश्नयस्मारकस्य" "असि भो" इति सोपहासोत्प्रासस्य "किंवा" इत्युत्तरपक्षदार्ढ्यसूचकस्य वाशब्दस्य "असीति वर्त्तमानोपदेशस्य तत्तद्विशेषव्यञ्जकत्वं सहृदयसंवेद्यं। वर्णरचनयोरुदाहरिष्यते। प्रबन्धे महाभारते शान्तः। रामायणे करुणः मालतीमाधवरत्नावल्यादौ शृङ्गारः। एवमन्यत्र॥

(२६४) तदेवमेकपञ्चाशद्भेदास्तस्य ध्वनेर्म्मताः।
सङ्करेण त्रिरूपेण संसृष्ट्या चैकरूपया॥
वेदखाग्निशराः शुद्धैरिषुवाणाग्निसायकाः।

शुद्धैः शुद्धभेदैरेकपञ्चाशता योजनेत्यर्थः। दिङ्मात्रं तूदाह्रियते।

"अत्युन्नतस्तनयुगा तरलायताक्षी
द्वारि स्थिता तदुपयानमहोत्सवाय।
सा पूर्णकुम्भनवनीरजतोरणस्रक्
सम्भारमङ्गलमयत्नकृतं विधत्ते"॥

अत्र "सगावेव पूर्णकुम्भौ वृत्तश्च एव नवनीरजस्रज इति" रूपकध्वनिरप्यध्वन्तोरेकाश्रयानुप्रवेशः सङ्करः।

"धुन्वन्त्यमूनि मदमूर्च्छदलिध्वनीनि
धूताध्वनीनहृदयानि मधोर्दिनानि।
निस्तन्द्रचन्द्रवदनावदनारविन्द-
सौरभ्यसौहृदसगर्व्वसमीरणानि" ॥

अत्र निस्तन्द्रेत्यादिलक्षणामूलध्वनीनां संसृष्टिः॥ अथ गुणीभूतव्यङ्ग्यं।

(२६५) अपरन्तु गुणीभूतव्यङ्ग्यं वाच्यादनुत्तमे व्यङ्ग्ये॥

अपरं काव्यं। अनुत्तमत्वं न्यूनतया साम्येन च सम्भवति।

(२६६) तत्र स्यादितराङ्गं काक्वा क्षिप्तञ्च वाच्यसिद्ध्यङ्गं।
सन्दिग्धप्राधान्यं तुल्यप्राधान्यमस्फुटमगूढं॥
व्यङ्ग्यमसुन्दरमेवं भेदास्तस्योदिता अष्टौ।

इतरस्य रसादेरङ्गं रसादिव्यङ्ग्यं यथा।

"अयं स रसनोत्कर्षी पीनस्तनविमर्द्दनः।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः" ॥

अत्र शृङ्गारः करुणस्याङ्गं।

"मानोन्नतां प्रणयिनीमनुनेतुकाम-
स्त्वत्सैन्यसागररवोद्गतकर्णतापः।
हा हा कथं नु भवतो रिपुराजधानी-
प्रासादसन्ततिषु तिष्ठति कामिलोकः" ॥

अत्रोत्सुक्यत्रासमन्धिसंस्थितस्य करुणस्य रामविषयरत्यावग्य-भावः।

"अनन्यावाने भ्रान्तं कनकमृगतृष्णान्वितधिया
वचो वैदेहीति प्रतिपदमुदस्रु प्रलपितं।
कृता लङ्काभर्त्तुर्व्वदनपरिपाटीषु घटना
मयाप्तं रामत्वं कुशलवसुता न त्वधिगता"॥

अत्र रामत्वं प्राप्तमित्यवचनेऽपि शब्दशक्तेरेव रामत्वमवगम्यते। वचनेन तु सादृश्यहेतुकतादात्म्यारोपणमाविष्कुर्व्वता तद्गोपनमपाकृतं। तेन वाच्यं सादृश्यं वाक्यार्थान्वयोपपादकतया ऽङ्गतां नीतं। काक्वा क्षिप्तं यथा।

"मथ्नामि कौरवशतं समरे न कोपाद्
दुःशासनस्य रुधिरं न पिबाम्युरस्तः।
संचूर्णयामि गदया न सुयोधनोरू
सन्धिं करोतु भवतां नृपतिः पणेन"॥

अत्र "मथ्नाम्येवेत्यादि" व्यङ्ग्यं वाच्यस्य निषेधस्य सहभावेनैव स्थितं।

"दीपयन् रोदसीरन्ध्रमेष ज्वलति सर्व्वतः।
प्रतापस्तव राजेन्द्र वैरिवंशदवानलः"॥

अत्रान्वयस्य वेणुत्वारोपणरूपो व्यङ्ग्यः। प्रतापस्य दवानलत्वारोपसिद्ध्यङ्गं। "हरस्तु किञ्चित् परिवृत्तेत्यादौ" विलोचनव्यापारचुम्बनाभिलाषयोः प्राधान्ये सन्देहः॥

"ब्राह्मणातिक्रमत्यागो भवतामेव भूतये।
जामदग्न्यस्य वो मित्रमन्यथा दुर्म्मनायते"॥

अत्र परशुरामो रक्षःकुलक्षयं करिष्यतीति व्यङ्ग्यस्य वाच्यस्य च समं प्राधान्यं।

"सन्धौ सर्व्वस्वहरणं विग्रहे प्राणनिग्रहः।
अल्पापदीननृपतौ न सन्धिर्न च विग्रहः" ॥

अत्राल्पापदीनाख्ये नृपतौ दामसामादिमन्तरेण नान्यः प्रश्नमोपायः व्यङ्ग्यं व्युत्पन्नानामपि झटित्यस्फुटं।

"अनेन लोकगुरुणा सतां धर्म्मोपदर्शिना।
अहं व्रतवती स्वैरमुक्तेन किमतः परं" ॥

अत्र प्रतीयमानोऽपि शाक्यमुनेस्तिर्य्यक्योषिति बलात्कारोपभोगः स्फुटतया वाच्यायमान इत्यगूढं।

"वाणीरकुडुङ्गुड्डीणसउणिकोलाहलं सुणन्तीए।
घरकम्मवावडाए बहूए सीअन्ति अङ्गाइं" * ॥

अत्र दत्तसङ्केतः कश्चिल्लतागृहं प्रविष्ट इति व्यङ्ग्यात् "सीदन्त्यङ्गानि" इति वाच्यस्य चमत्कारः सहृदयसंवेद्य इत्यसुन्दरं। किञ्च यो दीपकतुल्ययोगितादिषु उपमाद्यलङ्कारो व्यङ्ग्यः स गुणीभूतव्यङ्ग्य एव। काव्यस्य दीपकादिमुखेनैव चमत्कारविधायित्वात्। तदुक्तं ध्वनिकृता।

"अलङ्कारान्तरस्यापि प्रतीतौ यत्र भासते।
तत्परत्वं न काव्यस्य नासौ मार्गो ध्वनेर्मतः" ॥

---

* वाणीर इति। वाणीरकुञ्जोड्डीनशकुनिकोलाहलं शृण्वन्त्याः। गृहकर्म्मव्यापृताया वध्वाः सीदन्ति अङ्गानि ॥ सं० ॥ कुडुङ्गो लतागृहमिति चण्डीदासः ॥ टी० ॥

अत्र च प्रच्छान्तरादिना गोपनकृतचारुत्वस्य विपर्य्यासः । यथा ।

"दृष्ट्या केशवगोपरागहृतया किञ्चिन्न दृष्टं मया
तेनात्र स्खलितास्मि नाथ पतितां किं नाम नालम्बसे ।
एकस्त्वं विषमेषु खिन्नमनसां सर्व्वाबलानां गति-
र्गोप्येवं गदितः सलेशमवताद्गोष्ठे हरिर्वश्चिरं" ॥

अत्र गोपरागादिशब्दानां गोपे राग इत्यादिव्यङ्ग्यार्थानां "सलेशमिति" पदेन स्फुटतयावभासः । सलेशमितिपदस्य परित्यागे ध्वनिरेव । किञ्च यत्र वस्त्वलङ्काररसादिरूपव्यङ्ग्यानां रसाभ्यन्तरे गुणीभावः तत्र प्रधानकृत एव काव्यव्यवहारः । तदुक्तं तेनैव ।

"प्रकारोऽयं गुणीभूतव्यङ्ग्योऽपि ध्वनिरूपतां ।
धत्ते रसादितात्पर्य्यपर्य्यालोचनया पुनरिति" ॥

यत्र च ।

"यत्रोन्मदानां प्रमदाजनानामभ्रंलिहः शोणमणीमयूखैः ।
सन्ध्याभ्रमं प्राप्नुवतामकाण्डेऽप्यनङ्गनेपथ्यविधिं व्यधत्त" ॥

इत्यादौ रसादीनां नगरीवृत्तादिवस्तुमात्रेऽङ्गत्वं तत्र तेषामतात्पर्य्यविषयत्वेऽपि तैरेव गुणीभूतैः काव्यव्यवहारः । तदुक्तमस्मत्सगोत्रकविपण्डितमुख्यश्रीचण्डिदासपादैः । "काव्यार्थस्याखण्डबुद्धिवेद्यस्य तन्मयीभावेनास्वाददशायां गुणप्रधानभावावभासस्तावन्नानुभूयते कालान्तरे तु प्रकरणादिपर्य्यालोचनया भवन्नप्यसौ न काव्यव्यपदेशं व्याहन्तुमीशस्तस्यास्वादमात्रायत्तत्वादिति"। केचित् चित्राख्यं तृतीयं काव्यभेदमिच्छन्ति तदाहुः।

"शब्दचित्रं वाच्यचित्रमव्यङ्ग्यं त्ववरं स्मृतं"।

इति तन्न। यदि हि अव्यङ्ग्यत्वेन व्यङ्ग्याभावस्तदा तस्य काव्यत्वमपि नास्तीति प्रागेवोक्तं। ईषद्व्यङ्ग्यत्वमिति चेत्। किं नाम ईषद्व्यङ्ग्यत्वं। आस्वाद्यव्यङ्ग्यत्वं अनास्वाद्यव्यङ्ग्यत्वं वा। आद्ये प्राचीनभेदयोरन्तःपातः। द्वितीये त्वकाव्यत्वं। यदि चास्वाद्यत्वं तदा क्षुद्रत्वमेव। क्षुद्रतायामनास्वाद्यत्वात्। तदुक्तं ध्वनिकृता।

"प्रधानगुणभावाभ्यां व्यङ्ग्यस्यैवं व्यवस्थिते।
उभे काव्ये ततोऽन्यद्यत्तच्चित्रमभिधीयत इति"॥

इति साहित्यदर्पणे ध्वनिगुणीभूतव्यङ्ग्याख्यकाव्यभेदनिरूपणो नाम चतुर्थः परिच्छेदः॥ * ॥



अथ केयमभिनवा व्यञ्जना नाम वृत्तिरित्युच्यते।

(२६७) वृत्तीनां विश्रान्तेरभिधातात्पर्य्यलक्षणाख्यानां।
अङ्गीकार्य्या तुर्य्या वृत्तिर्बोधे रसादीनां॥

अभिधायाः सङ्केतितार्थमात्रबोधनविरताया न वस्त्वलङ्कार-रसादिव्यङ्ग्यबोधने क्षमत्वं न च सङ्केतितो रसादिः। न हि विभावाद्यभिधानमेव तदभिधानं। तस्य तदैकरूप्यानङ्गीकारात्॥ यत्र च स्वशब्देनाभिधानं तत्र प्रत्युत दोष एवेति वक्ष्यामः। क्वचिच्च "शृङ्गाररसोऽयं" इत्यादौ स्वशब्दाभिधानेऽपि न तत्प्रतीतिः। तस्य स्वप्रकाशानन्दरूपत्वात्। अभिहितान्वयवादिभिरङ्गीकृता तात्पर्य्याख्या वृत्तिरपि संसर्गमात्रे पर-

क्षीणा न व्यञ्जनबोधिनी ॥ यच्च केचिदाहुः । "सोऽयमिषोरिव दीर्घदीर्घतरोऽभिधाव्यापारः" इति ॥ यच्च ध्वनिकेनोक्तं ।

"तात्पर्य्याव्यतिरेकाच्च व्यञ्जकत्वस्य न ध्वनिः ।
यावत्कार्य्यप्रसारित्वात् तात्पर्य्यं न तुलाधृतमिति" ।

तयोरुपरि शब्दबुद्धिकर्म्मणां विरम्य व्यपाराभाववादिभिरेव पातनीयो दण्डः । एवञ्च किमिति लक्षणाप्युपास्या । दीर्घदीर्घतराभिधाव्यापारेणापि तदर्थबोधसिद्धेः ॥ किमिति च "ब्राह्मण पुत्रस्ते जातः कन्या ते गर्भिणीत्यादौ" अपि हर्षशोकादीनामपि न वाच्यत्वं । यत्पुनरुक्तं "पौरुषेयमपौरुषेयञ्च वाक्यं सर्व्वमेव कार्य्यपरं अतत्परत्वेऽनुपादेयत्वादुन्मत्तवाक्यवत् ततश्च काव्यशब्दानां निरतिशयसुखास्वादव्यतिरेकेण प्रतिपाद्यप्रतिपादकयोः प्रवृत्त्यौपयिकप्रयोजनान्तरानुपलब्धेर्निरतिशयसुखास्वाद एव कार्य्यत्वेनावधार्य्यते यत्परः शब्दः स शब्दार्थ इति न्यायादिति" । तत्र प्रष्टव्यं । किमिदं तत्परत्वं नाम। तदर्थत्वं वा तात्पर्य्यवृत्त्या तद्बोधकत्वं वा। आद्ये न विवादः। व्यङ्ग्यत्वेऽपि तदर्थतानपायात् । द्वितीये तु केयं तात्पर्य्याख्या वृत्तिः। अभिहितान्वयवादिभिरङ्गीकृता वा तदन्या वा। आद्ये दत्तमेवोत्तरं । द्वितीये तु नाममात्रे विवादः । तन्मतेऽपि तुरीयवृत्तिसिद्धेः ॥ नन्वस्तु युगपदेव तात्पर्य्यशक्त्या विभावादिसंसर्गस्य रसादेश्च प्रकाशनमिति चेन्न । तयोर्हेतुफलभावाङ्गीकारात् ॥ यदाह मुनिः । "विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिरिति" । सहभावे च कुतः सव्येतरविषाणयो-

रिव कार्य्यकारणभावः। पौर्व्वापर्य्यविपर्य्ययात् ॥ "गङ्गायां घोष इत्यादौ" तटाद्यर्थमात्रबोधनविरताया लक्षणायाश्च कुतः शीतलपावनत्वादिव्यङ्ग्यबोधकता। तेन तुरीया वृत्ति-रुपास्यैवेति निर्विवादमेतत् ॥ किञ्च।

(२६८) बोद्धृस्वरूपसंख्यानिमित्तकार्य्यप्रतीतिकालानां।
आश्रयविषयादीनां भेदाद्भिन्नोऽभिधीयते व्यङ्ग्यः ॥

वाच्यार्थव्यङ्ग्यार्थयोर्हि पदतदर्थमात्रज्ञाननिपुणैर्वैयाकरणै-रपि सहृदयैरेव च संवेद्यतया बोद्धृभेदः ॥ "भम धम्मिअ इत्यादौ" क्वचिद्वाच्ये विधिरूपे निषेधरूपतया। क्वचित् "निः-शेषच्युतचन्दनमित्यादौ" निषेधरूपे विधिरूपतया च स्वरूप-भेदः। "गतोऽस्तमर्क इत्यादौ" च वाच्योऽर्थ एक एव प्रतीयते। व्यङ्ग्यस्तु तद्बोद्धादिभेदात्। क्वचित् "कान्तमभिसरेति"। "गावो निरुध्यन्तामिति" नायकस्यायमागमनावसर इति सन्तापोऽधुना नास्तीत्यादिरूपेणानेक इति संख्याभेदः ॥ वा-च्यार्थः शब्दोच्चारणमात्रेण वेद्यः। एष तु तथाविधप्रतिभानै-र्मल्यादिनेति निमित्तभेदः। प्रतीतिमात्रचमत्कारकरणाच्च कार्य्यभेदः। केवलरूपतया चमत्कारितया च प्रतीतिभेदः। पूर्व्वपश्चाद्भावेन च कालभेदः। शब्दाश्रयत्वेन शब्दतदेकदेश-तदर्थवर्णसङ्घटनाश्रयत्वेन चाश्रयभेदः ॥

"कस्स वा ण होइ रोसो दट्ठूण पिआइ सव्वणं अहरं।

सभ्रमरपद्माघ्राययि वारितवामे सहस्वेदानीं" * ॥

इति सखीतत्कान्तविषयत्वेन विषयभेदः तस्मात्माभिधेय एव व्यङ्ग्यः ॥ तथा।

(२६९) प्रागसत्त्वाद्रसादेर्नो बोधिके लक्षणाभिधे।
किञ्च मुख्यार्थबाधस्य विरहादपि लक्षणा॥

न बोधिकेति शेषः। न हि कोऽपि रसनात्मकव्यापाराद्भिन्नो रसादिपदप्रतिपाद्यः पदार्थः प्रमाणसिद्धोऽस्ति यमिमे लक्षणाभिधे बोधयेतां। किञ्च यत्र "गङ्गायां घोष" इत्यादावुपात्तशब्दार्थानां बुभुत्सितेवान्वयोऽनुपपत्त्या बाध्यते तत्रैव हि लक्षणायाः प्रवेशः। यदुक्तं न्यायकुसुमाञ्जलावुदयनाचार्य्यैः॥

"श्रुतान्वयादनाकाङ्क्षं न वाक्यं ह्यन्यदिच्छति।
पदार्थान्वयवैधुर्य्यात्तदाक्षिप्तेन सङ्गतिः"॥

न पुनः "शून्यं वासगृहमित्यादौ" मुख्यार्थबाधः॥ यदि च "गङ्गायां घोष इत्यादौ" प्रयोजनं लक्ष्यं स्यात् तीरस्य मुख्यार्थत्वं बाधितत्वं च स्यात् तस्यापि च लक्ष्यतया प्रयोजनान्तरं तस्यापि प्रयोजनान्तरमित्यनवस्थापातः। न चापि प्रयोजनविशिष्ट एव तीरे लक्षणा। विषयप्रयोजनयोर्युगपत्प्रतीत्यनभ्युपगमात्। नीलादिसंवेदनानन्तरमेव हि ज्ञाततायाः अनुव्यवसायस्य वा सम्भवः।

* कस्य वेति। कस्य न वा भवति रोषः प्रस्ततः प्रियायाः सव्रणमधरं। सभ्रमरपद्माघ्रायिणि वारितवामे सहस्वेदानीं॥ इति सं०॥ उपनायकदष्टाधरां पत्नीं तर्जयन्तं कान्तं प्रतारयन्त्याः सख्या उक्तिरियं॥ इति टी०॥

(२७०) नानुमानं *रसादीनां व्यङ्ग्यानां बोधनक्षमं।
आभासत्वेन हेतूनां स्मृतिर्न च रसादिधीः॥

व्यक्तिविवेककारेण † हि "यापि विभावादिभ्यो रसादीनां प्रतीतिः सानुमान एवान्तर्भवितुमर्हति। विभावानुभावव्यभिचारिप्रतीतिर्हि रसादिप्रतीतेः साधनमिष्यते। ते हि रत्यादीनां भावानां कारणकार्य्यसहकारिभूतास्ताननुमापयन्त एव रसादीन्निष्पादयन्ति। तत्र वहिः प्रतीयमाना आस्वादपदवीङ्गताः सन्तो रसा उच्यन्ते इत्यवश्यंभावी तत्प्रतीतिक्रमः केवलमाशुभावितयासौ न लक्ष्यते यतोऽयमसावप्यभिव्यक्तिक्रम इति" यदुक्तं तत्र प्रष्टव्यं। किं शब्दाभिनयसमर्पितविभावादिप्रत्ययानुमितरामादिगतरागादिज्ञानमेव रसत्वेनाभिमतं भवतः तद्भावनया भावकैर्भाव्यमानः स्वप्रकाशानन्दो वा? आद्ये न विवादः किन्तु रामादिगतरागादिज्ञानं रससञ्ज्ञया नोच्यते ऽस्माभिरित्येव विशेषः। द्वितीयस्तु व्याप्तिग्रहणाभावाद्धेतोराभासतया ऽसिद्ध एव। यथोक्तं तेनैव। "यत्र यत्रैवंविधानां विभावानुभावसात्त्विकसञ्चारिणामभिधानमभिनयो वा तत्र तत्र शृङ्गारादिरसाविर्भाव इति" सुग्रहैव व्याप्तिः पक्षधर्मता च। तथा।

---

* नाट्ये रसत्वेनाहार्य्यज्ञानविषये नटे काव्ये तु रामे एव प्रथमं विभावादिभीरत्याद्यनुमानं ततस्तदनुमानान्मोधिगतया सामाजिकानां वासनात्स्वपप्रत्यासत्त्या साक्षात्कृतो रामादिरत्या ऽङ्गी रस इत्याद्युक्तमतानुयायिनां व्यक्तिविवेककारादीनां मतं दूषयति। नानुमानमिति॥ टी०॥

† तन्मतं दूषयितुं परिष्करोति। व्यक्तिविवेककारेण हीति। टी०॥

"यत्रार्थान्तराभिव्यक्तौ वः सामग्रीष्टा निबन्धनं ।
सैवानुमितिपक्षे नो गमकत्वेन सम्मतेति" ॥

इदमपि नो न विरुद्धं । न ह्येवंविधा प्रतीतिरास्वाद्यत्वेनास्माकमभिमता किन्तु स्वप्रकाशमात्रविश्रान्तः सान्द्रानन्दनिर्भरः । तेनात्र सिषाधयिषितादर्थादर्थान्तरस्य साधनाद्धेतोराभासता । यच्च "भमधम्मिअ" इत्यादौ प्रतीयमानं वस्तु ।

"जलकेलितरलकरतलमुक्तः पुनः पिहितराधिकावदनः ।
जगदवतु कोकयूनोर्विघटनसङ्घटनकौतुकी कृष्णः" ॥

इत्यादौ च रूपकालङ्कारादयोऽनुमेया एव । तथा हि अनुमानं नाम पक्षसत्त्वसपक्षसत्त्वविपक्षव्यावृत्तत्वविशिष्टाल्लिङ्गाल्लिङ्गिनो ज्ञानं । ततश्च वाच्यादसम्बन्धोऽर्थस्तावन्न प्रतीयते अन्यथातिप्रसङ्गः स्यादिति बोध्यबोधकयोरर्थयोः कश्चित्सम्बन्धोऽस्त्येव । ततश्च बोधकोऽर्थो लिङ्गं बोध्यश्च लिङ्गी बोधकस्य चार्थस्य पक्षसत्त्वं निबद्धमेव। सपक्षसत्त्वविपक्षव्यावृत्तत्वे अनिबद्धेऽपि सामर्थ्यादनुमेये। तस्मादत्र यद्वाच्यार्थाल्लिङ्गरूपाल्लिङ्गिनो व्यङ्ग्यार्थस्यावगमस्तदनुमान एव पर्य्यवस्यतीति" । तन्न। तथा ह्यत्र "भम धम्मिअ इत्यादौ" गृहे श्वनिवृत्त्या विहितं भ्रमणं गोदावरीतीरे सिंहोपलब्धेरभ्रमणमनुमापयतीति यद्वक्तव्यं तत्र नैकान्तिको हेतुः। भीरोरपि गुरोः प्रभोर्वा निदेशेन प्रियानुरागेण च गमनस्य सम्भवात्। पुंश्चल्या वचनं प्रामाणिकं न वेति सन्दिग्धासिद्धश्च ।"जलकेलीत्यत्र" च आत्मदर्शनादर्शनाभ्यां चक्रवाकविघटनसङ्घटनकारी स चन्द्र एवेति अनुमितिरेवेयमिति न

वाच्यं। तस्यासत्काद्यावनैकान्तिकत्वात्। एवंविधोऽर्थ एवंविधार्थबोधक एवंविधार्थत्वात् यन्नैवं तन्नैवमित्यनुमानेऽपि आभासमानयोगक्षेमो हेतुः। एवंविधार्थत्वादिति हेतुना एवंविधानिष्टार्थसाधनस्याप्युपपत्तेः। तथा यत् "दृष्टिं हे प्रतिवेशिनि क्षणमिहाप्यस्मद्गृह इत्यादौ" नलग्रन्थीनां तनूलिखनं एकाकितया च स्रोतोगमनं तस्याः परकामुकोपभोगस्य लिङ्गमित्युच्यते तच्च तत्रैवाभिहितेन स्वकान्तस्नेहेनापि सम्भवतीति अनैकान्तिको हेतुः। यच्च "निःशेषच्युतचन्दनमित्यादौ" दूत्यास्तत्कामुकोपभोगोऽनुमीयते तत्किं प्रतिपाद्यया दूत्या तत्कालसन्निहितैर्वान्यैः तत्काव्यार्थभावनया वा सहृदयैः। आद्ययोर्न विवादः। तृतीये तु तथाविधाभिप्रायविरहस्थले व्यभिचारः॥ ननु वक्त्राद्यवस्थासहकृतत्वेन विशेष्यो हेतुरिति न वाच्यं। एवंविधव्याप्त्यनुसन्धानस्याभावात्। किञ्चैवंविधानां काव्यानां कविप्रतिभामात्रजन्मनां प्रामाण्यानावश्यकत्वेन सन्दिग्धासिद्धत्वं हेतोः। व्यक्तिवादिना चाधमपदसहायानामेवैषां पदार्थानां व्यञ्जकत्वमुक्तं तेन च तत्कान्तसाधनत्वं प्रामाणिकं न वेत्यपि कथमनुमानं। एतेनार्थापत्तिवेद्यत्वमपि व्यङ्ग्यानामपास्तं। अर्थापत्तेरपि पूर्व्वसिद्धव्याप्तीच्छायामुपजीव्यैव प्रवृत्तेः। यथा।

"यो जीवति स कुत्राप्यवतिष्ठते जीवति चात्र गोष्ठ्यामविद्यमानश्चैत्र इत्यादि"॥

किञ्च वस्त्रक्रयादौ तर्ज्जनीतोलनेन दशसङ्ख्यादिवत्सूचन-

बुद्धिवेद्योऽप्ययं न भवति। सुचनबुद्धेरपि सङ्केतादिलौकिकप्रमाणसापेक्षत्वेनानुमानप्रकारताङ्गीकारात्। यच्च "संस्कारजन्यत्वाद्रसादिबुद्धिः स्मृतिरिति" केचित् तत्रापि प्रत्यभिज्ञायामनैकान्तिकतया हेतोराभासता। "दुर्गालङ्घितेत्यादौ" च "द्वितीयार्द्धो नाख्येयेति" यदुक्तं महिमभट्टेन तदनुभवसिद्धमपलपतो गजनिमीलिकैव। तदेवमनुभवसिद्धस्य तत्तद्रसादिलक्षणार्थस्याशक्यापलापतया तत्तच्छब्दाद्यन्वयव्यतिरेकानुविधायितया च अनुमानादिप्रमाणावेद्यतया चाभिधादिवृत्तित्रयाबोध्यतया च तुरीया वृत्तिरुपास्यैवेति सिद्धं। इयञ्च व्याप्त्याद्यनुसन्धानं विनापि भवतीत्यखिलं निर्म्मलं। तत्किंनामिकेयं वृत्तिरित्युच्यते।

(२७१) सा चेयं व्यञ्जना नाम वृत्तिरित्युच्यते बुधैः।
रसव्यक्तौ पुनर्वृत्तिं रसनाख्यां परे विदुः॥

एतच्च विविच्योक्तं रसनिरूपणप्रस्ताव इति सर्व्वमवदातं॥*॥

इति साहित्यदर्पणे व्यञ्जनव्यापारस्थापनो नाम पञ्चमः परिच्छेदः॥ * ॥

एवं ध्वनिगुणीभूतव्यङ्ग्यत्वेन काव्यस्य भेदद्वयमुक्त्वा पुनर्दृश्यश्रव्यत्वेन भेदद्वयमाह।

(२७२) दृश्यश्रव्यत्वभेदेन पुनः काव्यं द्विधा मतं।
दृश्यं तत्राभिनेयं तत्

तस्य रूपकसञ्ज्ञाहेतुमाह।

(२७३) रूपारोपात्तु रूपकं ॥

तद्दृश्यं काव्यं नटैर्रामादिस्वरूपारोपाद्रूपकमित्युच्यते। कोऽसावभिनय इत्याह।

(२७४) भवेदभिनयोऽवस्थानुकारः स चतुर्व्विधः।
आङ्गिको वाचिकश्चैवमाहार्य्यः सात्त्विकस्तथा ॥

नटैरङ्गादिभीरामयुधिष्ठिरादीनामवस्थानुकरणमभिनयः॥ रूपकस्य भेदानाह।

(२७५) नाटकमथ प्रकरणं भाणव्यायोगसमवकारडिमाः।
ईहामृगाङ्कवीथ्यः प्रहसनमिति रूपकाणि दश ॥

किञ्च।

(२७६) नाटिका त्रोटकं गोष्ठी सट्टकं नाट्यरासकं।
प्रस्थानोल्लाप्यकाव्यानि प्रेङ्खणं रासकं तथा ॥
संलापकं श्रीगदितं शिल्पकञ्च विलासिका।
दुर्म्मल्लिका प्रकरणी हल्लीशो भाणिकेति च ॥
अष्टादश प्राहुरुपरूपकाणि मनीषिणः।
विना विशेषं सर्व्वेषां लक्ष्म नाटकवन्मतं ॥

सर्व्वेषां प्रकरणादिरूपकाणां नाटिकाद्युपरूपकाणाञ्च। तत्र।

(२७७) नाटकं ख्यातवृत्तं स्यात् पञ्चसन्धिसमन्वितं।
विलासर्द्ध्यादिगुणवद् युक्तं नानाविभूतिभिः ॥
सुखदुःखसमुद्भूतिनानारसनिरन्तरं।

पञ्चादिका दशपरास्तत्राङ्काः परिकीर्त्तिताः ॥
प्रख्यातवंशो राजर्षिर्धीरोदात्तः प्रतापवान्।
दिव्योऽथ दिव्यादिव्यो वा गुणवान्नायको मतः ॥
एक एव भवेदङ्गी शृङ्गारो वीर एव वा।
अङ्गमन्ये रसाः सर्व्वे कार्य्यनिर्व्वहणेऽद्भुतं ॥
चत्वारः पञ्च वा मुख्याः कार्य्यव्यापृतपूरुषाः।
गोपुच्छाग्रसमाग्रन्तु बन्धनं तस्य कीर्त्तितं ॥

ख्यातं रामायणादि प्रसिद्धं वृत्तं। यथा रामचरितादि॥ सन्धयो वक्ष्यन्ते। नानाविभूतिभिर्युक्तमिति महासहायं। सुख-दुःखसमुद्भवत्वं रामयुधिष्ठिरादिवृत्तान्तेष्वभिव्यक्तं। राजर्षयो दुष्यन्तादयः। दिव्याः श्रीकृष्णादयः। दिव्यादिव्यो यो दिव्योऽप्यात्मनि नराभिमानी। यथा श्रीरामचन्द्रः। "गोपुच्छाग्रसमाग्रमिति क्रमेणाङ्काः सूक्ष्माः कर्त्तव्या इति" केचित्। अन्ये त्वाहुः। यथा गोपुच्छे केचिद्वाला ह्रस्वाः केचिद्दीर्घाः तथेह कानिचित् कार्य्याणि मुखसन्धौ समाप्तानि कानिचित् प्रतिमुखे। एवमन्येष्वपि कानिचित् कानिचिदिति" ॥

(२७८) प्रत्यक्षनेतृचरितो रसभावसमुज्ज्वलः।
भवेदगूढशब्दार्थः क्षुद्रचूर्णकसंयुतः ॥
विच्छिन्नावान्तरैकार्थः किञ्चित्संलग्नबिन्दुकः।
युक्तो न बहुभिः कार्य्यैर्बीजसंहृतिमान् न च॥
नानाविधानसंयुक्तो नातिप्रचुरपद्यवान्।

आवश्यकानां कार्य्याणामविरोधाद्विनिर्म्मितः ॥
नानेकदिननिर्व्वर्त्यकथया सम्प्रयोजितः।
आसन्ननायकः पात्रैर्युतस्त्रिचतुरैस्तथा ॥
दूराह्वानं वधो युद्धं राज्यदेशादिविप्लवः।
विवाहो भोजनं शापोत्सर्गौ मृत्यूरतन्तथा ॥
दन्तच्छेद्यं नखच्छेद्यमन्यद् व्रीडाकरञ्च यत्।
शयनाधरपानादि नगराद्युपरोधनं ॥
स्नानानुलेपने चैभिर्व्वर्ज्जितो नातिविस्तरः।
देवीपरिजनादीनाममात्यवणिजामपि ॥
प्रत्यक्षचित्रचरितैर्युक्तो भावरसोद्भवैः।
अन्तनिष्क्रान्तनिखिलपात्रोऽङ्क इति कीर्त्तितः ॥

विन्द्वादयो वक्ष्यन्ते। आवश्यकं सन्ध्यावन्दनादि ॥ अङ्कप्रस्तावाद् गर्भाङ्कमाह।

(२७९) अङ्कोदरप्रविष्टो यो रङ्गद्वारामुखादिमान्।
अङ्कोऽपरः स गर्भाङ्कः सवीजः फलवानपि ॥

यथा बालरामायणे रावणं प्रति। कञ्चुकी।

"श्रवणैः पेयमनेकैर्दृश्यं दीर्घैश्च लोचनैर्बहुभिः"।
भवदर्थमिव निबद्धं नाट्यं सीतास्वयम्बरणं" ॥

इत्यादिना विरचितः सीतास्वयम्बरो नाम गर्भाङ्कः ॥

(२८०) तत्र पूर्व्वं पूर्व्वरङ्गः सभापूजा ततः परं।
कथनं कविसञ्ज्ञादेर्नाटकस्याप्यथामुखं ॥

तत्रेति नाटके ।

(२८१) यन्नाट्यवस्तुनः पूर्व्वं रङ्गविघ्नोपशान्तये ।
कुशीलवाः प्रकुर्व्वन्ति पूर्व्वरङ्गः स उच्यते ॥
प्रत्याहारादिकान्यङ्गान्यस्य भूयांसि यद्यपि ।
तथाप्यवश्यं कर्त्तव्या नान्दी विघ्नोपशान्तये ॥

अस्याः स्वरूपमाह ।

(२८२) आशीर्व्वचनसंयुक्ता नित्यं यस्मात् प्रयुज्यते ।
देवद्विजनृपादीनां तस्मान्नान्दीति सञ्ज्ञिता ॥
मङ्गल्यशङ्खचन्द्राब्जकोककैरवशंसिनी ।
पदैर्युक्ता द्वादशभिरष्टभिर्व्वा पदैरुत ॥

अष्टपदा यथा । अनर्घराघवे "निष्प्रत्यूहमित्यादि" ॥
द्वादशपदा यथा मम तातपादानां पुष्पमालायां ।
"शिरसि धृतसुरापगे स्मरारावरुणमुखेन्दुरुचिर्गिरीन्द्रपुत्री ।
अथ चरणयुगानते स्वकान्ते स्मितसरसा भवतोऽस्तु भूतिहेतुः"॥

एवमन्यच । "एतन्नान्दीति" कस्यचिन्मतानुसारेणोक्तं । वस्तुतस्तु "पूर्व्वरङ्गस्य रङ्गद्वाराभिधानमङ्गमिति" उच्यते । यदुक्तं । "यस्मादभिनयो ह्यत्र प्राथम्यादवतार्य्यते ।
"रङ्गद्वारमतो ज्ञेयं वागङ्गाभिनयात्मकमिति" ।

उक्तप्रकारायाश्च नान्द्या रङ्गद्वारात् प्रथमं नटैरेव कर्त्तव्यतया न महर्षिणा निर्द्देशः कृतः । कालिदासादिमहाकविप्रबन्धेषु च ।

"वेदान्तेषु यमाहुरेकपुरुषं व्याप्य स्थितं रोदसी
यस्मिन्नीश्वर इत्यनन्यविषयः शब्दो यथार्थाक्षरः।
अन्तर्यश्च मुमुक्षुभिर्नियमितप्राणादिभिर्मृग्यते
स स्थाणुः स्थिरभक्तियोगसुलभो निःश्रेयसायास्तु वः"॥

एवमादिषु नान्दीलक्षणायोगात्। उक्तञ्च "रङ्गद्वारमारभ्य कविः कुर्य्यादिति"। अत एव प्राक्तनपुस्तकेषु "नान्द्यन्ते सूत्रधार" इत्यनन्तरमेव "वेदान्तेष्वित्यादि" श्लोकलिखनं दृश्यते। यच्च पश्चात् "नान्द्यन्ते सूत्रधार" इति लिखनं तस्यायमभिप्रायः "नान्द्यन्ते सूत्रधार इदं प्रयोजितवान् इतः प्रभृति मया नाटकमुपादीयत इति कवेरभिप्रायः सूचित इति"॥

(२८३) पूर्व्वरङ्गं विधायैव सूत्रधारो निवर्त्तते।
प्रविश्य स्थापकस्तद्वत् काव्यमास्थापयेत्ततः॥
दिव्यमर्त्येषु तद्रूपो मिश्रमन्यतरस्तयोः।
सूचयेद्वस्तु वीजं वा मुखं पात्रमथापि वा॥

काव्यस्यार्थस्य स्थापनात् स्थापकः। तद्वदिति सूत्रधारसदृशगुणाकारः। इदानीं पूर्व्वरङ्गस्य सम्यक्प्रयोगाभावादेक एव सूत्रधारः सर्व्वं प्रयोजयतीति व्यवहारः। स स्थापको दिव्यं वस्तु दिव्यो भूत्वा मर्त्त्यं मर्त्त्यो भूत्वा मिश्रञ्च दिव्यमर्त्त्ययोरन्यतरो भूत्वा सूचयेत्। वस्तु यथोदात्तराघवे॥

"रामो मूर्द्ध्नि निधाय काननमगान्मालामिवाज्ञां गुरोस्तद्भक्त्या भरतेन राज्यमखिलं मात्रा सहैवोज्झितं।

तौ सुग्रीवविभीषणावनुगतौ नीतौ परां सम्पदं
प्रोद्भिन्ना दशकन्धरप्रभृतयो ध्वस्ताः समस्ता द्विषः ॥"

बीजं यथा रत्नावल्यां।

"द्वीपादन्यस्मादपि मध्यादपि जलनिधेर्दिशोऽप्यन्तात्।
आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः ॥"

अत्र हि समुद्रे वहित्रभङ्गमग्नोत्थिताया रत्नावल्या अनुकूलदैवलालितो वत्सराजगृहप्रवेशे यौगन्धरायणव्यापारमारभ्य रत्नावलीप्राप्तौ बीजं। मुखं श्लेषादिना प्रस्तुतवृत्तान्तप्रतिपादको वाग्विशेषः।

यथा।

"आसादितप्रकटनिर्मलचन्द्रहासः
प्राप्तः शरत्समय एष विशुद्धकान्तः।
उत्खाय गाढतमसं घनकालमुग्रं
रामो दशास्यमिव सम्भृतबन्धुजीवः ॥"

पात्रं यथा शाकुन्तले।

"तवास्मि गीतिरागेण हारिणा प्रसभं हृतः।
एष राजेव दुष्यन्तः सारङ्गेणातिरंहसा ॥"

(२८४) रङ्गं प्रसाद्य मधुरैः श्लोकैः काव्यार्थसूचकैः।
रूपकस्य कवेराख्यां गोत्राद्यपि स कीर्त्तयेत्॥
ऋतुञ्च कञ्चित् प्रायेण भारतीं वृत्तिमाश्रितः।

स स्थापकः। प्रायेणेति क्वचिदृतोरकीर्त्तनमपि। यथा रत्नावल्यां। भारतीवृत्तिस्तु।

(२८५) भारती संस्कृतप्रायो वाग्व्यापारो नराश्रयः ॥
संस्कृतबहुलो वाक्प्रधानो व्यापारो भारती ।
(२८६) तस्याः प्ररोचना वीथी तथा प्रहसना मुखे ।
अङ्गान्यत्रोन्मुखीकारः प्रशंसातः प्ररोचना ॥
प्रस्तुताभिनयेषु प्रशंसातः श्रोतॄणां प्रवृत्त्युन्मुखीकरणं प्ररोचना । यथा रत्नावल्यां ।
"श्रीहर्षो निपुणः कविः परिषदप्येषा गुणग्राहिणी
लोके हारि च वत्सराजचरितं नाट्ये च दक्षा वयं ।
वस्त्वेकैकमपीह वाञ्छितफलप्राप्तेः पदं किं पुनर्-
मद्भाग्योपचयादयं समुदितः सर्व्वो गुणानां गणः ॥"
वीथीप्रहसने वक्ष्येते ।*
(२८७) नटी विदूषको वापि पारिपार्श्विक एव वा ।
सूत्रधारेण सहिताः संलापं यत्र कुर्व्वते ॥
चित्रैर्व्वाक्यैः स्वकार्य्योत्थैः प्रस्तुताक्षेपिभिर्मिथः ।
आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनापि सा ॥
सूत्रधारसदृशत्वात् †स्थापकोऽपि सूत्रधार उच्यते । तस्यानुचरः पारिपार्श्विकः । तस्मात् किञ्चिदूनो नटः ।
(२८८) उद्घात्यकः कथोद्घातः प्रयोगातिशयस्तथा ।
प्रवर्त्तकावलगिते पञ्च प्रस्तावनाभिदाः ॥
तत्र ।

---

* आमुखमाह । † आमुखभेदानाह ।

(२८९) पदानि त्वगतार्थानि तदर्थगतये नराः।
योजयन्ति पदैरन्यैः स उद्घात्यक उच्यते॥

यथा मुद्राराक्षसे सूत्रः।

"क्रूरग्रहः स केतुश्चन्द्रं सम्पूर्णमण्डलमिदानीं।
अभिभवितुमिच्छति बलात् इति"। अनन्तरं नेपथ्ये "आः क एष मयि जीवति सति चन्द्रगुप्तमभिभवितुमिच्छतीति॥"

अत्रान्यार्थवन्त्यपि पदानि हृदिस्थार्थागत्या अर्थान्तरे सङ्क्रमय्य पात्रप्रवेशः।

(२९०) सूत्रधारस्य वाक्यं वा समादायार्थमस्य वा।
भवेत् पात्रप्रवेशश्चेत् कथोद्घातः स उच्यते॥

वाक्यं यथा रत्नावल्यां। "द्वीपादन्यस्मादपीत्यादि" सूत्रधारेण पठिते। नेपथ्ये एवमेतत् कः सन्देहः।"द्वीपादन्यस्मादपीत्यादि" पठित्वा यौगन्धरायणस्य प्रवेशः। वाक्यार्थं यथा वेण्यां।

"निर्व्वाणवैरदहनाः प्रशमादरीणां
नन्दन्तु पाण्डुतनयाः सह माधवेन।
रक्तप्रसाधितभुवः क्षतविग्रहाश्च
स्वस्था भवन्तु कुरुराजसुताः सभृत्याः॥"

इति सूत्रधारेण पठितस्य वाक्यस्यार्थं गृहीत्वा नेपथ्ये आः दुरात्मन् वृथा मङ्गलपाठक कथं स्वस्था भवन्तु मयि जीवति धार्त्तराष्ट्राः। ततः सूत्रधारो निष्क्रान्तः। भीमसेनस्य प्रवेशः।

(२९१) यदि प्रयोग एकस्मिन् प्रयोगोऽन्यः प्रयुज्यते।
तेन पात्रप्रवेशश्चेत् प्रयोगातिशयस्तदा॥

यथा कुन्दमालायां। "नेपथ्ये इत इतोऽवतरत्वार्य्या। सूत्रः। कोऽयं खलु आर्य्याह्वानेन सहायकं मे सम्पादयति। विलोक्य। कष्टमतिकरुणं वर्त्तते।"

"लङ्केश्वरस्य भवने सुचिरं स्थितेति
रामेण लोकपरिवादभयाकुलेन।
निर्वासितां जनपदादपि गर्भगुर्व्वीं
सीतां वनाय परिकर्षति लक्ष्मणोऽयं॥"

अत्र नृत्यप्रयोगार्थं स्वभार्य्याह्वानमिच्छता सूत्रधारेण "सीतां वनाय परिकर्षति लक्ष्मणोऽयमिति" सीतालक्ष्मणयोः प्रवेशं सूचयित्वा निष्क्रान्तेन स्वप्रयोगमतिशयान एव प्रयोगः प्रयोजितः।

(२९२) कालं प्रवृत्तमाश्रित्य सूत्रधृग् यत्र वर्णयेत्।
तदाश्रयस्य पात्रस्य प्रवेशस्तत्प्रवर्त्तकं॥

यथा "आसादितेत्यादि" तत्र प्रविशति यथा निर्द्दिष्टो रामः॥

(२९३) यत्रैकत्र समावेशात् कार्य्यमन्यत्प्रसाध्यते।
प्रयोगे खलु तज्ज्ञेयं नाम्नाऽवलगितं बुधैः॥

यथा शाकुन्तले सूत्रो नटीं प्रति "तवास्मि गीतिरागेणेत्यादि॥" ततो राज्ञः प्रवेशः।

(२९४) योज्यान्यत्र यथालाभं वीथ्यङ्गानीतराण्यपि।

अत्र आमुखे। उद्घात्यकावलगितयोरितराणि वीथ्यङ्गानि वक्ष्यमाणानि॥ नक्षत्कुं स्तु।

(२९५) नेपथ्योक्तं श्रुतं यत्र त्वाकाशवचनं तथा।
समाश्रित्यापि कर्त्तव्यमामुखं नाटकादिषु॥
एषामामुखभेदानामेकं कञ्चित् प्रयोजयेत्।
तेनार्थमथ पात्रं वा समाक्षिप्यैव सूत्रधृक्॥
प्रस्तावनान्ते निर्गच्छेत्ततो वस्तु प्रयोजयेत्।

वस्त्वितिवृत्तं।

(२९६) इदं पुनर्व्वस्तु बुधैर्द्दिविधं परिकल्प्यते।
आधिकारिकमेकं स्यात् प्रासङ्गिकमथापरं॥
अधिकारः फले स्वाम्यमधिकारी च तत्प्रभुः।
तस्येतिवृत्तं कविभिराधिकारिकमुच्यते॥

फले प्रधानफले। यथा बालरामायणे रामचरितं।

(२९७) अस्योपकरणार्थन्तु प्रासङ्गिकमितीष्यते।

अस्याधिकारिकमितिवृत्तस्य उपकरणनिमित्तं यच्चरितं तत्प्रासङ्गिकं। यथा सुग्रीवादिचरितं॥

(२९८) पताकास्थानकं योज्यं सुविचार्य्येह वस्तुनि।

इह नाट्ये।

(२९९) यत्रार्थे चिन्तितेऽन्यस्मिन् तल्लिङ्गोऽन्यः प्रयुज्यते।
आगन्तुकेन भावेन पताकास्थानकन्तु तत्॥

तद्भेदानाह।

(३००) सहसैवार्थसम्पत्तिर्गुणवत्युपचारतः।
पताकास्थानकमिदं प्रथमं परिकीर्त्तितं॥

यथा रत्नावल्यां "वासवदत्तेयमिति" राजा यदा तत्क-
ण्ठपाशं मोचयति तदा तदुक्त्या "सागरिकेयमिति" प्रत्यभि-
ज्ञाय "कथं प्रिया मे सागरिका अलमलमतिमात्रमित्यादि"
फलरूपार्थसम्पत्तिः पूर्व्वापेक्षया उपचारातिशयाद् गुणवती
उत्कृष्टा" ॥

(३०१) वचः सातिशयश्लिष्टं नानाबन्धसमाश्रयं।
पताकास्थानकमिदं द्वितीयं परिकीर्त्तितं॥

यथा वेण्यां भीमः।

"रक्तप्रसाधितभुवः क्षतविग्रहाश्च
सुस्था भवन्तु कुरुराजसुताः सभृत्याः"।

अत्र रक्तादीनां रुधिरशरीरार्थहेतुकश्लेषवशेन वीजार्थ-
प्रतिपादनात् मेदमङ्गलप्रतिपत्तौ सत्यां द्वितीयं पताकास्थानं।

(३०२) अर्थोपक्षेपकं यत्तु लीनं सविनयं भवेत्।
श्लिष्टप्रत्युत्तरोपेतं तृतीयमिदमुच्यते।

लीनमव्यक्तार्थं श्लिष्टेन सम्बन्धयोग्येनाभिप्रायान्तरप्रयुक्तेन
प्रत्युत्तरेणोपेतं सविनयं विशेषनिश्चयप्राप्त्या सहितं सम्पद्यते
यत्तत्तृतीयं पताकास्थानं। यथा वेण्यां द्वितीयेऽङ्के।

कञ्चुकी। देव भग्नं भग्नं। राजा। केन। कञ्चु। भीमेन। राजा।
कस्य। कञ्चु। भवतः। राजा। आः किं प्रलपसि। कञ्चु। सभयं देव
ननु ब्रवीमि भग्नं भीमेन भवतः। राजा। धिक् वृद्धापसद
कोऽयमद्य ते व्यामोहः। कञ्चु। देव न व्यामोहः सत्यमेव।

"भग्नं भीमेन भवतो मरुता रथकेतनं।
पातितं किङ्किणीजालबद्धाक्रन्दमिवचितौ" ॥

अत्र दुर्योधनोरुभङ्गरूपप्रस्तुतसङ्क्रान्तमर्थोपक्षेपणं।

(३०३) द्व्यर्थो वचनविन्यासः सुश्लिष्टः काव्ययोजितः।
प्रधानार्थान्तरापेक्षी पताकास्थानकं परं॥

यथा रत्नावल्यां।

"उद्दामोत्कलिकां विपाण्डुररुचिं प्रारब्धजृम्भां क्षणा-
दायासं श्वसनोद्गमैरविरलैरातन्वतीमात्मनः।
अद्योद्यानलतामिमां समदनां नारीमिवान्यां ध्रुवं
पश्यन् कोपविपाटलद्युतिमुखं देव्याः करिष्याम्यहं" ॥

अत्र भाव्यर्थः सूचितः। एतानि चत्वारि पताकास्थानकानि क्वचिन्मङ्गलार्थे क्वचिदमङ्गलार्थमपि सर्व्वसन्धिषु भवन्ति। काव्यकर्त्तुरिच्छावशाद् भूयोऽपि भवन्ति। यत्पुनः केनचिदुक्तं "मुखसन्धिमारभ्य सन्धिचतुष्टये क्रमेण भवन्तीति"। तदन्ये न मन्यन्ते। एषामत्यन्तमुपादेयानामनियमेन सर्व्वत्रापि सर्व्वेषामपि भवितुं युक्तत्वात्।

(३०४) यत् स्यादनुचितं वस्तु नायकस्य रसस्य वा।
विरुद्धं तत् परित्याज्यमन्यथा वा प्रकल्पयेत्॥

अनुचितमितिवृत्तं यथा रामस्य छद्मना वालिवधः। तच्च उदात्तराघवे नोक्तमेव। सुग्रीववीरचरिते तु वाली रामवधार्थमागतो रामेण हत इत्यन्यथा कृतः।

(३०५) अङ्केष्वदर्शनीया या वक्तव्यैव च सम्मता।
या च स्याद्वर्षपर्य्यन्तं कथा दिनद्वयादिजा॥
अन्या च विस्तरा सूच्या सार्थोपक्षेपकैर्बुधैः।

अङ्केषु अदर्शनीया कथा युद्धादिकथा।

(३०६) वर्षादूर्द्ध्वन्तु यद्वस्तु तत् स्याद्वर्षादधोभवं॥

उक्तं हि मुनिना।

"अङ्कच्छेदे कार्य्यं मासकृतं वर्षसञ्चितं वापि।
तत्सर्व्वं कर्त्तव्यं वर्षादूर्द्ध्वं न तु कदाचित्"॥

एवञ्च चतुर्द्दशवर्षव्यापिन्यपि रामवनवासे ये ये विराधवधादयः कथांशास्ते ते वर्षवर्षावयवदिनयुग्मादीनामेकतमेन सूचनीया न विरुद्धाः।

(३०७) दिनावसाने कार्य्यं यद्दिनेनैवोपपद्यते।
अर्थोपक्षेपकैर्वाच्यमङ्कच्छेदं विधाय तत्॥

के ते अर्थोपक्षेपका इत्याकाङ्क्षायामाह।

(३०८) अर्थोपक्षेपकाः पञ्च विष्कम्भकप्रवेशकौ।
चूलिकाङ्कावतारोऽथ स्यादङ्कमुखमित्यपि॥
वृत्तवर्त्तिष्यमाणानां कथांशानां निदर्शकः।
सङ्क्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः॥
मध्येन मध्यमाभ्यां वा पात्राभ्यां सम्प्रयोजितः।
शुद्धः स्यात् स तु सङ्कीर्णो नीचमध्यमकल्पितः॥

तत्र शुद्धो यथा। मालतीमाधवे श्मशाने कपालकुण्डला।

यतीर्णी यथा रामाभिनन्दे क्षपणककापालिकौ ।

अथ प्रवेशकः ।

(३०९) प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजितः ।

अङ्कद्वयान्तर्विज्ञेयः शेषं विष्कम्भके यथा ॥

अङ्कद्वयस्यान्तरिति प्रथमाङ्केऽस्य प्रतिषेधः । यथा वेण्यां अश्वत्थामाङ्के राक्षसमिथुनं । अथ चूलिका ।

(३१०) अन्तर्जवनिकासंस्थैः सूचनार्थस्य चूलिका ।

यथा वीरचरिते चतुर्थाङ्कस्यादौ । "नेपथ्ये भो भो वैमानिकाः प्रवर्त्तन्तां रङ्गमङ्गलानीत्यादि" "रामेण परशुरामो जित इति" नेपथ्ये पात्रैः सूचितं । अथाङ्कावतारः ।

(३११) अङ्कान्ते सूचितः पात्रैस्तदङ्कस्याविभागतः ।

यत्राङ्कोऽवतरत्येषोऽङ्कावतार इति स्मृतः ॥

यथाभिज्ञाने पञ्चमाङ्के पात्रैः सूचितः षष्ठाङ्कस्तदङ्कस्याङ्गविशेष इवावतीर्णः । अथाङ्कमुखं ।

(३१२) यत्र स्यादङ्क एकस्मिन्नङ्कानां सूचनाऽखिला ।

तदङ्कमुखमित्याहुर्बीजार्थख्यापकञ्च तत् ॥

यथा मालतीमाधवे । प्रथमाङ्कादौ कामन्दक्यवलोकिते भूरिवसुप्रभृतीनां भाविभूमिकानां परिक्षिप्तकथाप्रबन्धस्य च प्रसङ्गात् सन्निवेशं सूचितवत्यौ ।

(३१३) अङ्कान्तपात्रैर्वाङ्कास्यं छिन्नाङ्कस्यार्थसूचनात् ।

अङ्कान्तपात्रैरङ्कान्ते प्रविष्टैः पात्रैः। यथा वीरचरिते द्वितीयाङ्कान्ते। "प्रविश्य सुमन्त्रः। भगवन्तौ वशिष्ठविश्वामित्रौ भवतः सभार्गवानाह्वयतः। इतरे। क्व भगवन्तौ। सुमन्त्रः। महाराजदशरथस्यान्तिके। इतरे। तत्तत्रैव गच्छामः"॥ इत्यङ्कपरिसमाप्तौ "ततः प्रविशन्त्युपविष्टा वशिष्ठविश्वामित्रपरशुरामा इत्यत्र" पूर्व्वाङ्कान्त एव प्रविष्टेन सुमन्त्रपात्रेण शतानन्दजनककथाविच्छेदे उत्तराङ्कमुखसूचनादङ्कास्यमिति। एतच्च ध्वनिकमतानुसारेणोक्तं। अन्ये तु "अङ्कावतारेणैव इदं गतार्थं" इत्याहुः।

(३१४) अपेक्षितं परित्यज्य नीरसं वस्तु विस्तरं।
यदा सन्दर्शयेच्छेषमामुखानन्तरं तदा॥
कार्य्यो विष्कम्भको नाट्य आमुखाक्षिप्तपात्रकः।

यथा रत्नावल्यां। यौगन्धरायणप्रयोजितः।

(३१५) यदा तु सरसं वस्तु मूलादेव प्रवर्त्तते।
आदावेव तदाङ्कः स्यादामुखाक्षेपसंश्रयः॥

यथा शाकुन्तले।

(३१६) विष्कम्भकाद्यैरपि नो वधो वाच्योऽधिकारिणः।
अन्योन्येन तिरोधानं न कुर्य्याद्रसवस्तुनोः॥

रसः शृङ्गारादिः। यदुक्तं ध्वनिकेन।

"न चातिरसतो वस्तु दूरं विच्छिन्नतां नयेत्।
रसं वा न तिरोदध्याद् वस्त्वलङ्कारलक्षणैरिति"॥

(३१७) वीजं विन्दुः पताका च प्रकरी कार्य्यमेव च ।
अर्थप्रकृतयः पञ्च ज्ञात्वा योज्या यथाविधि ॥

अर्थप्रकृतयः प्रयोजनसिद्धिहेतवः । तत्र वीजं ।

(३१८) अल्पमात्रं समुद्दिष्टं बहुधा यद्विसर्पति ।
फलस्य प्रथमो हेतुर्वीजं तदभिधीयते ॥

यथा रत्नावल्यां वत्सराजस्य रत्नावलीप्राप्तिहेतुर्दैवानुकूल्यलालितो यौगन्धरायणव्यापारः ॥ यथा वा वेण्यां द्रौपदीकेशसंयमनहेतुर्भीमसेनक्रोधोपचितो युधिष्ठिरोत्साहः ।

(३१९) अवान्तरार्थविच्छेदे विन्दुरच्छेदकारणं ।

यथा रत्नावल्यामनङ्गपूजापरिसमाप्तौ कथार्थविच्छेदे सति उदयनस्येन्दोरिवोद्वीक्ष्यते इति सागरिका श्रुत्वा सहर्षं । कधं एसोसो उदअणं णिरिन्दोः * इत्यादिरवान्तरार्थहेतुः ।

(३२०) व्यापि प्रासङ्गिकं वृत्तं पताकेत्यभिधीयते ॥

यथा रामचरिते सुग्रीवादेर्वेण्यां भीमादेः शाकुन्तले विदूषकस्य चरितं ।

(३२१) पताका नायकस्य स्यान्न स्वकीयफलान्तरं ।
गर्भे सन्धौ विमर्षे वा निर्व्वाहस्तस्य जायते ॥

यथा सुग्रीवादेराज्यप्राप्त्यादिः । यत्तु मुनिनोक्तं ।
"आगर्भाद्वाविमर्षाद्वा पताका विनिवर्त्तते" इति ।

* कथं एष स उदयनं निरिन्द्रो रिति । सं । टी० ॥

तत्र "पताकेति पताका नायकफलं निर्व्वहणपर्य्यन्तमपि पताकायाः प्रवृत्तिदर्शनादिति" व्याख्यातमभिनवगुप्तपादैः ।

(३२२) प्रासङ्गिकं प्रदेशस्थं चरितं प्रकरी मता ।

यथा कुलपत्यङ्के रावणस्य जटायुसंवादः ।

(३२३) प्रकरी नायकस्य स्यान्न स्वकीयं फलान्तरं ।
अपेक्षितन्तु यत्साध्यमारम्भो यन्निबन्धनः ॥
समापन्नन्तु तत्सिद्धौ तत्कार्य्यमिति सम्मतं ।

यथा रामचरिते रावणवधः ।

(३२४) अवस्थाः पञ्च कार्य्यस्य प्रारब्धस्य फलार्थिभिः ।
आरम्भयत्नप्राप्त्याशानियताप्तिफलागमाः ॥

तत्र ।

(३२५) भवेदारम्भ औत्सुक्यं यन्मुख्यफलसिद्धये ।

यथा रत्नावल्यां । रत्नावल्यन्तःपुरनिवेशार्थं योगन्धरायणस्यौत्सुक्यं । एवं नायकनायिकादीनामप्यौत्सुक्यमाकरेषु बोद्धव्यं ।

(३२६) प्रयत्नस्तु फलावाप्तौ व्यापारोऽतित्वरान्वितः ॥

यथा रत्नावल्यां । "तहवि ण अत्थि अण्णो दंसणोवाओ त्ति जधा कधा आलिहिअ जधा समीहिदं करइस्सं" * ॥

* तथवीति । तथापि नास्त्यन्यो दर्शनोपाय इति यथा तथा आलेख्य यथा समीहितं करिष्यामीति ॥ सं० । टी० ॥

इत्यादिना प्रतिपादितो रत्नावल्याश्चित्रलेखनादिर्वत्सराजस-ङ्गमोपायः। तथा च रामचरिते समुद्रबन्धनादिः।

(३२७) उपायापायशङ्काभ्यां प्राप्त्याशा प्राप्तिसम्भवः।

यथा रत्नावल्यां तृतीयेऽङ्के। वेशपरिवर्त्तनाभिसरणादेः सङ्गमोपायाद्वासवदत्तालक्षणापायशङ्कया च अनिर्द्धारितैका-न्तसङ्गमरूपफलप्राप्तिः प्रत्याशा। एवमन्यत्र।

(३२८) अपायाभावतः प्राप्तिर्नियताप्तिस्तु निश्चिता।

अपायाभावान्निर्धारितैकान्तफलप्राप्तिर्नियताप्तिः। यथा रत्नावल्यां। "राजा। देवीप्रसादनं त्यक्त्वा नान्यमत्रोपायं पश्यामीति"॥ देवीलक्षणापायस्य प्रसादनेन निवारणान्नियत-फलप्राप्तिः सूचिता।

(३२९) सावस्था फलयोगः स्याद्यः समग्रफलोदयः॥

यथा रत्नावल्यां रत्नावलीलाभसक्रवर्त्तित्वलक्षणफलान्त-रलाभसहितः। एवमन्यत्र।

(३३०) यथा सङ्ख्यमवस्थाभिराभिर्योगात्तु पञ्चभिः।
पञ्चधैवेतिवृत्तस्य भागाः स्युः पञ्च सन्धयः॥

तल्लक्षणमाह।

(३३१) अन्तरैकार्थसम्बन्धः सन्धिरेकान्वये सति।

एकेन प्रयोजनेनान्वितानां कथांशानामवान्तरैकप्रयोजन-सम्बन्धः सन्धिः। तद्भेदानाह।

(३३२) मुखं प्रतिमुखं गर्भो विमर्ष उपसंहृतिः।
इति पञ्चास्य भेदाः स्युः क्रमाल्लक्षणमुच्यते॥

यथोद्देशं लक्षणमाह।

(३३३) यत्र बीजसमुत्पत्तिर्नानार्थरससम्भवा।
प्रारम्भेण समायुक्ता तन्मुखं परिकीर्त्तितं॥

यथा रत्नावल्यां प्रथमेऽङ्के।

(३३४) फलप्रधानोपायस्य मुखसन्धिनिवेशिनः।
लक्ष्यालक्ष्य इवोद्भेदो यत्र प्रतिमुखञ्च तत्॥

यथा रत्नावल्यां द्वितीयेऽङ्के वत्सराजसागरिकासमागमहेतोरनुरागबीजस्य प्रथमाङ्कोपक्षिप्तस्य सुसङ्गताविदूषकाभ्यां ज्ञायमानतया किञ्चिल्लक्ष्यस्य वासवदत्तया चित्रफलकवृत्तान्तेन किञ्चिदुन्नीयमानेऽस्योद्दिष्टरूप उद्भेदः॥

(३३५) फलप्रधानोपायस्य प्रागुद्भिन्नस्य किञ्चन।
गर्भो यत्र समुद्भेदो ह्रासान्वेषणवान्मुहुः॥

फलस्य गर्भीकरणाद्गर्भः। यथा रत्नावल्यां द्वितीयेऽङ्के सुसङ्गता। "सहि अदक्खिणा दाणिंसि तुमं जा एवं भट्टिणा हत्थेण गहिदावि कोवं ण मुञ्चसीत्यादौ"* समुद्भेदः। पुनर्वासवदत्ताप्रवेशे ह्रासः। तृतीयेऽङ्के "तद्वार्त्तान्वेषणाय गतः कथञ्चिर-

* सखि अदक्षिणा इदानीमसि त्वं यदेवं भर्त्रा हस्तेन गृहीतापि कोपं न मुञ्चसीति॥ सं०॥ टी०॥

यति वसन्तक” इत्यन्वेषणं। “विदू। ही ही भो कोषम्बीर-ज्जलम्भेणावि ण तादिशो पिश्रवश्रस्सस्स परितोसो आदिश्रो मम सश्रासादो पिश्रवश्रणं सुणिश्र भविस्सदि इत्यादौ” * उद्भेदः। पुनरपि वासवदत्तामत्यभिज्ञानात् त्रासः। पुनः सागरिकायाः सङ्केतस्थानगमने अन्वेषणं। पुनर्संतापाश्रकरणे उद्भेदः। अथ विमर्षः।

(३३६) यत्र मुख्यफलोपाय उद्भिन्नो गर्भतोऽधिकः।
शापाद्यैः सान्तरायश्च स विमर्ष इति स्मृतः॥

यथा शाकुन्तले चतुर्थाङ्कादौ। “अनुसूया। पिअंवदे जइवि गान्धब्बेन विवाहेन निब्बुत्तकल्लाणा पियसही सउन्तला तथावि अणुरूअभत्तिभाइणी संवुत्तत्ति णिव्वुदं मे हिअअं” †। इत्यत आरभ्य सप्तमाङ्कोपचितात् प्रागर्थसञ्चयः शकुन्तला-विस्मरणरूपविघ्नालिङ्गितः। अथ निर्व्वहणं।

(३३७) वीजवन्तो मुखाद्यर्था विप्रकीर्णा यथायथं।
एकार्थमुपनीयन्ते यत्र निर्व्वहणं हि तत्॥

यथा वेण्यां। “कञ्चुकी। उपसृत्य सहर्षं महाराज वर्द्धसे।

---

* हीहीति। कौशाम्बीराज्यलाभेनापि न तादृशः प्रियवयस्यस्य परितोषो यादृशो मम सकाशात् प्रियवचनं श्रुत्वा भविष्य-तीति॥ सं०॥ टी०॥

† जइवीति। यद्यपि गान्धर्व्वेण विवाहेन निर्वृत्तकल्याणा प्रिय-सखी शकुन्तला तथापि अनुरूपभर्त्तृभागिनी संवृत्तेति निर्वृतं मे हृदयं इति॥ सं०॥ टी०॥

अयं खलु भीमसेनो दुर्योधनक्षतजारुणीकृतसर्व्वशरीरो दुर्ल्लक्ष्यव्यक्तिः” । इत्यादिना द्रौपदीकेशसंयमनादिमुखसन्ध्यादिबीजानां निजनिजस्थानोपक्षिप्तानामेकार्थयोजनं । यथा वा शाकुन्तले सप्तमाङ्के । शकुन्तलाभिज्ञानादुत्तरोऽर्थराशिः ॥

एषामङ्गान्याह ।

(३३८) उपक्षेपः परिकरः परिन्यासो विलोभनं ।
युक्तिः प्राप्तिः समाधानं विधानं परिभावना ॥
उद्भेदः करणं भेद एतान्यङ्गानि वै मुखे ।

यथोद्देशं लक्षणमाह ।

(३३९) काव्यार्थस्य समुत्पत्तिरुपक्षेप इति स्मृतः ॥

काव्यार्थ इतिवृत्तलक्षणप्रस्तुताभिधेयः । यथा वेण्यां भीमः ।

“लाक्षागृहानलविषान्नसभाप्रवेशैः
प्राणेषु वित्तनिचयेषु च नः प्रहृत्य ।
आकृष्य पाण्डववधूपरिधानकेशान्
स्वस्था भवन्ति मयि जीवति धार्त्तराष्ट्राः” ॥

(३४०) समुत्पन्नार्थबाहुल्यं ज्ञेयः परिकरः पुनः ।

यथा तत्रैव ।

“प्रवृद्धं यद्वैरं मम खलु शिशोरेव कुरुभि-
र्न तत्रार्य्यो हेतुर्न भवति किरीटी न च युवां ।
जरासन्धस्योरःस्थलमिव विरूढं पुनरपि
क्रुधा भीमः सन्धिं विघटयति यूयं घटयत” ॥

(३४१) तन्निष्पत्तिः परिन्यासः

यथा तत्रैव।

"चञ्चद्भुजभ्रमितचण्डगदाभिघात-
संचूर्णितोरुयुगलस्य सुयोधनस्य।
स्त्यानावनद्धघनशोणितशोणपाणि-
रुत्तंसयिष्यति कचांस्तव देवि भीमः" ॥

अत्र उपक्षेपो नाम इतिवृत्तलक्षणस्य काव्याभिधेयस्य सङ्क्षेपेणोपक्षेपणमात्रं। परिकरस्तस्यैव बहुलीकरणं। परिन्यासस्ततोऽपि निश्चयापत्तिरूपतया परितो हृदये न्यसनमित्येषां भेदः। एतानि चाङ्गानि उक्तेनैव पौर्व्वापर्य्येण भवन्ति। अङ्गान्तराणि त्वन्यथापि ॥

(३४२) गुणाख्यानं विलोभनं।

यथा। "तत्रैव द्रौपदी। णाध किं दुक्करं तए परिकुविदेन" * ॥ यथा वा मम चन्द्रकलायां चन्द्रकलावर्णने। "सेयं तारुण्यस्य विलास इत्यादि"। यत्तु शाकुन्तलादिषु "ग्रीवाभङ्गाभिराममित्यादि" मृगादिगुणवर्णनं तद्बीजार्थसम्बन्धाभावान्न सन्ध्यङ्गं। एवमङ्गान्तराणामप्यूह्यं ॥

(३४३) सम्प्रधारणमर्थानां युक्तिः

यथा वेण्यां सहदेवो भीमं प्रति। "आर्य्य किं महाराज-

* नाधेति। नाथ किं दुष्करं त्वया परिकुपितेन ॥ सं० ॥ टी० ॥

सन्देशो मम व्युत्पन्न एवार्य्येण गृहीत इति" अतः प्रभृति यावज्जीमवचनं।

"युष्मान् ह्रेपयति क्रोधाल्लोके शत्रुकुलक्षयः।
न लज्जयति दाराणां सभायां केशकर्षणमिति"॥

(३४४) प्राप्तिः सुखागमः।

यथा तत्रैव।

"मथ्नामि कौरवशतं समरे न कोपाद्"

इत्यादि द्रौपदी श्रुत्वा सहर्षं। णाध असुदपुव्वं क्खु एदं वअणं ता पुणो पुणो भण *॥

(३४५) वीजस्यागमनं यत्तु तत् समाधानमुच्यते।

यथा तत्रैव। "नेपथ्ये भो भो विराटद्रुपदप्रभृतयः श्रूयतां"।

"यत्सत्यव्रतभङ्गभीरुमनसा यत्नेन मन्दीकृतं
यद्विस्मर्त्तुमपीहितं शमवता शान्तिं कुलस्येच्छता।
तद्यूतारणिसम्भृतं नृपसुताकेशाम्बराकर्षणैः
क्रोधज्योतिरिदं महत्कुरुवने यौधिष्ठिरं जृम्भते"॥

अत्र "सुस्था भवन्ति मयि जीवतीति" आदिवीजस्य प्रधाननायकाभिमतत्वेन सम्यगाहितत्वात् समाधानं।

(३४६) सुखदुःखकृतो योऽर्थस्तद्विधानमिति स्मृतं।

यथा बालचरिते।

---

* नाधेति। नाथ अश्रुतपूर्व्वं खल्विदं वचनं तत् पुनः पुनर्भण॥ सं०॥ टी०॥

"उत्साहातिशयं वत्स तव बाल्यञ्च पश्यतः ।
मम हर्षविषादाभ्यामाक्रान्तं युगपन्मनः" ॥

यथा वा मम प्रभावत्यां "नयनयुगासेचनकमित्यादि" ॥

(३४७) कुतूहलोत्तरा वाचः प्रोक्ता तु परिभावना ॥

यथा वेण्यां द्रौपदी "युद्धं स्यान्न वेति" संशयाना तूर्य्यशब्दानन्तरं ।

"णाध किं दाणिं एसो पलअजलहरत्थणिदमन्थरो खणे खणे समरदुन्दुभी ताडीअदि" * ॥

(३४८) वीजार्थस्य प्ररोहः स्यादुद्भेदः

यथा तत्रैव ।

"द्रौपदी। णाध पुणोवि तए समास्सासइदव्वा † । भीमः ।
भूयः परिभवक्लान्तिलज्जाविधुरिताननं ।
अनिःशेषितकौरव्यं न पश्यसि वृकोदरं" ॥

(३४९) करणं पुनः ।
प्रकृतार्थसमारम्भः

यथा तत्रैव "देवि गच्छामो वयमिदानीं कुरुकुलक्षयायेति" ।

(३५०) भेदः संहतिभेदनं ॥

यथा तत्रैव । "अत एवाद्य प्रभृति भिन्नोऽहं भवद्भ्यः" ।

केचित्तु "भेदः प्रोत्साहनेति" वदन्ति । अथ प्रतिमुखाङ्गानि ।

---

* णाधेति । नाथ किमिदानीमेष प्रलयजलधरस्तनितमन्थरः क्षणे क्षणे समरदुन्दुभिस्ताड्यते इति । सं० ॥ टी० ॥

† णाधेति । नाथ पुनरपि त्वया समाश्वासयितव्या इति । सं० ॥ टी० ॥

(३५१) विलासः परिसर्पश्च विधूतं तापनं तथा ।
नर्म्म नर्म्मद्युतिश्चैव तथा प्रगमनं पुनः ॥
विरोधश्च प्रतिमुखे तथा स्यात् पर्य्युपासनं ।
पुष्पं वज्रमुपन्यासो वर्णसंहार इत्यपि ॥

तत्र ।

(३५२) समीहा रतिभोगार्था विलास इति कथ्यते ।

रतिलक्षणस्य भावस्य यो हेतुभूतो भोगो विषयः प्रमदा पुरुषो वा तदर्था समीहा विलासः । यथा शाकुन्तले ।

"कामं प्रिया न सुलभा मनस्तु तद्भावदर्शनाश्वासि ।
अकृतार्थेऽपि मनसिजे रतिमुभयप्रार्थना कुरुते" ॥

(३५३) दृष्टनष्टानुसरणं परिसर्पश्च कथ्यते ।

यथा शाकुन्तले राजा । "भवितव्यमत्र तया । तथा हि ।

"अभ्युन्नता पुरस्तादवगाढा जघनगौरवात्पश्चात् ।
द्वारेऽस्य पाण्डुसिकते पदपङ्क्तिर्दृश्यतेऽभिनवा" ॥

(३५४) कृतस्यानुनयस्यादौ विधूतं त्वपरिग्रहः ।

यथा तत्रैव ।

"अलं वो अन्तपुरविरहपज्जुस्सुएण राएसिणा उवरुद्धेन" * । केचित्तु "विधूतं स्यादरतिरिति" वदन्ति ॥

---

* अलमिति । अलं वोऽन्तःपुरविरहपर्य्युत्सुकेन राजर्षिणोपरुद्धेन । सं० ॥ टी० ॥

(३१७) बीजं बिन्दुः पताका च प्रकरी कार्य्यमेव च।
अर्थप्रकृतयः पञ्च ज्ञात्वा योज्या यथाविधि॥

अर्थप्रकृतयः प्रयोजनसिद्धिहेतवः। तत्र बीजं।

(३१८) अल्पमात्रं समुद्दिष्टं बहुधा यद्विसर्पति।
फलस्य प्रथमो हेतुर्वीजं तदभिधीयते॥

यथा रत्नावल्यां वत्सराजस्य रत्नावलीप्राप्तिहेतुर्दैवानुकूल्यलालितो यौगन्धरायणव्यापारः॥ यथा वा वेण्यां द्रौपदीकेशसंयमनहेतुर्भीमसेनक्रोधोपचितो युधिष्ठिरोत्साहः।

(३१९) अवान्तरार्थविच्छेदे बिन्दुरच्छेदकारणं।

यथा रत्नावल्यामनङ्गपूजापरिसमाप्तौ कथार्थविच्छेदे सति उदयनस्येन्दोरिवोद्वीक्ष्यते इति सागरिका श्रुत्वा सहर्षं। कधं एसो सो उदअणं णिरिन्दो: * इत्यादिरवान्तरार्थहेतुः।

(३२०) व्यापि प्रासङ्गिकं वृत्तं पताकेत्यभिधीयते॥

यथा रामचरिते सुग्रीवादेर्वेण्यां भीमादेः शाकुन्तले विदूषकस्य चरितं।

(३२१) पताका नायकस्य स्यान्न स्वकीयफलान्तरं।
गर्भे सन्धौ विमर्षे वा निर्व्वाहस्तस्य जायते॥

यथा सुग्रीवादेराज्यप्राप्त्यादिः। यत्तु मुनिनोक्तं।
"आगर्भाद्वाविमर्षाद्वा पताका विनिवर्त्तते" इति।

* कथं एष स उदयनं निरिन्द्रो रिति। सं। टी०॥

तत्र "पताकेति पताका नायकफलं निर्व्वहणपर्य्यन्तमपि पताकायाः प्रवृत्तिदर्शनादिति" व्याख्यातमभिनवगुप्तपादैः।

(३२२) प्रासङ्गिकं प्रदेशस्थं चरितं प्रकरी मता।

यथा कुलपत्यङ्के रावणस्य जटायुसंवादः।

(३२३) प्रकरी नायकस्य स्यान्न स्वकीयं फलान्तरं।
अपेक्षितन्तु यत्साध्यमारम्भो यन्निबन्धनः॥
समापनन्तु तत्सिद्धौ तत्कार्य्यमिति सम्मतं।

यथा रामचरिते रावणवधः।

(३२४) अवस्थाः पञ्च कार्य्यस्य प्रारब्धस्य फलार्थिभिः।
आरम्भयत्नप्राप्त्याशानियताप्तिफलागमाः॥

तत्र।

(३२५) भवेदारम्भ औत्सुक्यं यन्मुख्यफलसिद्धये।

यथा रत्नावल्यां। रत्नावल्यन्तःपुरनिवेशार्थं योगन्धरायणस्यौत्सुक्यं। एवं नायकनायिकादीनामप्यौत्सुक्यमाकरेषु बोद्धव्यं।

(३२६) प्रयत्नस्तु फलावाप्तौ व्यापारोऽतित्वरान्वितः॥

यथा रत्नावल्यां। "तहवि ण अत्थि अण्णो दंसणोवाओ त्ति जधा कधा आलिहिअ जधा समीहिदं करइस्सं" *॥

* तहवीति। तथापि नास्त्यन्यो दर्शनोपाय इति यथा तथा आलेख्य यथा समीहितं करिष्यामीति॥ सं०। टी०॥

इत्यादिना प्रतिपादितो रत्नावल्याश्चित्रलेखनादिर्वत्सराजसङ्गमोपायः । तथा च रामचरिते समुद्रबन्धनादिः ।

(३२७) उपायापायशङ्काभ्यां प्राप्त्याशा प्राप्तिसम्भवः ।

यथा रत्नावल्यां तृतीयेऽङ्के । वेशपरिवर्त्तनाभिसरणादेः सङ्गमोपायाद्वासवदत्तालक्षणापायशङ्कया च अनिर्द्धारितैकान्तसङ्गमरूपफलप्राप्तिः प्रत्याशा । एवमन्यत्र ।

(३२८) अपायाभावतः प्राप्तिर्नियताप्तिस्तु निश्चिता ।

अपायाभावान्निर्धारितैकान्तफलप्राप्तिर्नियताप्तिः । यथा रत्नावल्यां । "राजा । देवीप्रसादनं त्यक्त्वा नान्यमत्रोपायं पश्यामीति" ॥ देवीलक्षणापायस्य प्रसादनेन निवारणान्नियतफलप्राप्तिः सूचिता ।

(३२९) सावस्था फलयोगः स्याद्यः समग्रफलोदयः ॥

यथा रत्नावल्यां रत्नावलीलाभचक्रवर्त्तित्वलक्षणफलान्तरलाभसहितः । एवमन्यत्र ।

(३३०) यथा सङ्ख्यमवस्थाभिराभिर्योगात्तु पञ्चभिः ।
पञ्चधैवेतिवृत्तस्य भागाः स्युः पञ्च सन्धयः ॥

तल्लक्षणमाह ।

(३३१) अन्तरैकार्थसम्बन्धः सन्धिरेकान्वये सति ।

एकेन प्रयोजनेनान्वितानां कथांशानामवान्तरैकप्रयोजनसम्बन्धः सन्धिः । तद्भेदानाह ।

(३३२) मुखं प्रतिमुखं गर्भो विमर्ष उपसंहृतिः।
इति पञ्चास्य भेदाः स्युः क्रमाल्लक्षणमुच्यते॥

यथोद्देशं लक्षणमाह।

(३३३) यत्र वीजसमुत्पत्तिर्नानार्थरससम्भवा।
प्रारम्भेण समायुक्ता तन्मुखं परिकीर्त्तितं॥

यथा रत्नावल्यां प्रथमेऽङ्के।

(३३४) फलप्रधानोपायस्य मुखसन्धिनिवेशिनः।
लक्ष्यालक्ष्य इवोद्भेदो यत्र प्रतिमुखञ्च तत्॥

यथा रत्नावल्यां द्वितीयेऽङ्के वत्सराजसागरिकासमागमहेतोरनुरागवीजस्य प्रथमाङ्कोपक्षिप्तस्य सुसङ्गताविदूषकाभ्यां ज्ञायमानतया किञ्चिल्लक्ष्यस्य वासवदत्तया चित्रफलकवृत्तान्तेन किञ्चिदुन्नीयमानेऽस्योद्देशरूप उद्भेदः॥

(३३५) फलप्रधानोपायस्य प्रागुद्भिन्नस्य किञ्चन।
गर्भो यत्र समुद्भेदो ह्रासान्वेषणवान्मुहुः॥

फलस्य गर्भीकरणाद्गर्भः। यथा रत्नावल्यां द्वितीयेऽङ्के सुसङ्गता। "सहि अदक्खिणा दाणिसि तुमं जा एवं भट्टिणा हत्थेन गहिदावि कोवं ण मुञ्चसीत्यादौ" * समुद्भेदः। पुनर्वासवदत्ताप्रवेशे ह्रासः। तृतीयेऽङ्के "तद्वार्त्तान्वेषणाय गतः कथञ्चिर-

* सखि अदक्षिणा इदानीमसि त्वं यदेवं भर्त्रा हस्तेन गृहीतापि कोपं न मुञ्चसीति॥ सं०॥ टी०॥

यति वषसक" इत्यन्वेषणं । "विटू । ही ही भो कोषम्बीर-रज्जलम्भेणावि ण तादिसो पिअवअस्सस्स परितोषो आदिसो मम सआसादो पिअवअणं सुणिअ भविस्सदि इत्यादौ" * उद्भेदः । पुनरपि वासवदत्ताप्रत्यभिज्ञानात् त्रासः । पुनः सागरिकायाः सङ्केतस्थानगमने अन्वेषणं । पुनर्लतापाशकरणे उद्भेदः । अथ विमर्षः ।

(३३६) यत्र मुख्यफलोपाय उद्भिन्नो गर्भतोऽधिकः ।
शापाद्यैः सान्तरायश्च स विमर्ष इति स्मृतः ॥

यथा शाकुन्तले चतुर्थाङ्कादौ । "अनुसूया । पिअंवदे जइवि गान्धव्वेन विवाहेन णिव्वित्तकल्लाणा पियसही सउन्तला तधावि अनुरूअभत्तिभाइणी सम्वुत्तत्ति णिव्वुदं मे हिअअं" † । इत्यत आरभ्य सप्तमाङ्कोपक्षिप्तात् प्रागर्थसञ्चयः शकुन्तला-विस्मरणरूपविघ्नालिङ्गितः । अथ निर्व्वहणं ।

(३३७) वीजवन्तो मुखाद्यर्था विप्रकीर्णा यथायथं ।
एकार्थमुपनीयन्ते यत्र निर्व्वहणं हि तत् ॥

यथा वेण्यां । "कञ्चुकी । उपसृत्य सहर्षं महाराज वर्द्धसे ।

---

* हीहीति । कौशाम्बीराज्यलाभेनापि न तादृशः प्रियवयस्यस्य परितोषो यादृशो मम सकाशात् प्रियवचनं श्रुत्वा भविष्यतीति ॥ सं० ॥ टी० ॥

† जइवीति । यद्यपि गान्धर्व्वेण विवाहेन निर्वृत्तकल्याणा प्रियसखी शकुन्तला तथापि अनुरूपभर्त्तृभागिनी संवृत्तेति निर्वृतं मे हृदयं इति ॥ सं० ॥ टी० ॥

अयं खलु भीमसेनो दुर्य्योधनक्षतजारुणीकृतसर्व्वशरीरो दुर्ल-क्ष्यव्यक्तिः"। इत्यादिना द्रौपदीकेशसंयमनादिमुखसन्ध्यादि-बीजानां निजनिजस्थानोपक्षिप्तानामेकार्थयोजनं। यथा वा शाकुन्तले सप्तमाङ्के। शकुन्तलाभिज्ञानादुत्तरोऽर्थराशिः॥

एषामङ्गान्याह।

(३३८) उपक्षेपः परिकरः परिन्यासो विलोभनं।
युक्तिः प्राप्तिः समाधानं विधानं परिभावना॥
उद्भेदः करणं भेद एतान्यङ्गानि वै मुखे।

यथोद्देशं लक्षणमाह।

(३३९) काव्यार्थस्य समुत्पत्तिरुपक्षेप इति स्मृतः॥

काव्यार्थ इतिवृत्तलक्षणप्रस्तुताभिधेयः। यथा वेण्यां भीमः।

"लाक्षागृहानलविषान्नसभाप्रवेशैः
प्राणेषु वित्तनिचयेषु च नः प्रहृत्य।
आकृष्य पाण्डववधूपरिधानकेशान्
सुस्था भवन्ति मयि जीवति धार्त्तराष्ट्राः"॥

(३४०) समुत्पन्नार्थबाहुल्यं ज्ञेयः परिकरः पुनः।

यथा तत्रैव।

"प्रवृद्धं यद्वैरं मम खलु शिशोरेव कुरुभि-
र्न तत्रार्य्यो हेतुर्न भवति किरीटी न च युवां।
जरासन्धस्योरःस्थलमिव विरूढं पुनरपि
क्रुधा भीमः सन्धिं विघटयति यूयं घटयत"॥

(३४१) तन्निष्पत्तिः परिन्यासः

यथा तत्रैव ।

"चञ्चद्भुजभ्रमितचण्डगदाभिघात-
संचूर्णितोरुयुगलस्य सुयोधनस्य ।
स्त्यानावनद्धघनशोणितशोणपाणि-
रुत्तंसयिष्यति कचांस्तव देवि भीमः" ॥

अत्र उपक्षेपो नाम इतिवृत्तलक्षणस्य काव्याभिधेयस्य सङ्क्षेपेणोपक्षेपणमात्रं। परिकरस्तस्यैव बहुलीकरणं। परिन्यासस्ततोऽपि निश्चयापत्तिरूपतया परितो हृदये न्यसनमित्येषां भेदः। एतानि चाङ्गानि उक्तेनैव पौर्व्वापर्य्येण भवन्ति। अङ्गान्तराणि त्वन्यथापि ॥

(३४२) गुणाख्यानं विलोभनं।

यथा। "तत्रैव द्रौपदी। णाध किं दुक्करं तए परिकुविदेण" * ॥ यथा वा मम चन्द्रकलायां चन्द्रकलावर्णने। "सेयं तारुण्यस्य विलास इत्यादि"। यत्तु शाकुन्तलादिषु "ग्रीवा भङ्गाभिराममित्यादि" मृगादिगुणवर्णनं तद्वीजार्थसम्बन्धाभावान्न सन्ध्यङ्गं। एवमङ्गान्तराणामप्यूह्यं ॥

(३४३) सम्प्रधारणमर्थानां युक्तिः

यथा वेण्यां सहदेवो भीमं प्रति। "आर्य्य किं महाराज-

---

* णाधेति। नाथ किं दुष्करं त्वया परिकुपितेन ॥ सं० ॥ टी० ॥

सन्देशो मम व्युत्पन्न एवार्य्येण गृहीत इति" अतः प्रभृति यावज्जीमवचनं।

"युष्मान् ह्रेपयति क्रोधाल्लोके शत्रुकुलक्षयः।
न लज्जयति दाराणां सभायां केशकर्षणमिति"॥

(३४४) प्राप्तिः सुखागमः।

यथा तत्रैव।

"मथ्नामि कौरवशतं समरे न कोपात्"

इत्यादि द्रौपदी श्रुत्वा सहर्षं। णाध असुदपुव्वं क्खु एदं वअणं ता पुणो पुणो भण *॥

(३४५) बीजस्यागमनं यत्तु तत् समाधानमुच्यते।

यथा तत्रैव। "नेपथ्ये भो भो विराटद्रुपदप्रभृतयः श्रूयतां"।

"यत्सत्यव्रतभङ्गभीरुमनसा यत्नेन मन्दीकृतं
यद्विस्मर्त्तुमपीहितं शमवता शान्तिं कुलस्येच्छता।
तद्द्यूतारणिसम्भृतं नृपसुताकेशाम्बराकर्षणैः
क्रोधज्योतिरिदं महत्कुरुवने यौधिष्ठिरं जृम्भते"॥

अत्र "सुस्था भवन्ति मयि जीवतीति" आदिबीजस्य प्रधाननायकाभिमतत्वेन सम्यगाहितत्वात् समाधानं।

(३४६) सुखदुःखकृतो योऽर्थस्तद्विधानमिति स्मृतं।

यथा बालचरिते।

---

* णाधेति। नाथ अश्रुतपूर्व्वं खल्विदं वचनं तत् पुनः पुनर्भण॥ सं० ॥ टी० ॥

"उत्पातपातितमयं कस्य तव साध्वस्य पश्यत: ।
मम हर्षविषादाभ्यामाक्रान्तं युगपन्मन:" ॥

यथा वा मम प्रभावत्यां "नयनयुगासेचनकमित्यादि" ॥

(३४७) कुतूहलोत्तरा वाच: प्रोक्ता तु परिभावना ॥

यथा वेण्यां द्रौपदी "युद्धं स्यान्न वेति" संशयाना तूर्य्यशब्दानन्तरं ।
"णाध किं दाणिं एसो पलअजलहरत्थणिदमन्थरो खणे खणे समरदुन्दुभी ताडीअदि" * ॥

(३४८) बीजार्थस्य प्ररोह: स्यादुद्भेद:

यथा तत्रैव ।

"द्रौपदी । णाध पुणोवि तए समासासदव्वा † । भीम: ।
भूय: परिभवक्लान्तिलज्जाबन्धुरिताननं ।
अनि:शेषितकौरव्यं न पश्यसि वृकोदरं" ॥

(३४९) करणं पुन: ।
प्रकृतार्थसमारम्भ:

यथा तत्रैव "देवि गच्छामो वयमिदानीं कुरुकुलक्षयायेति" ।

(३५०) भेद: संहतिभेदनं ॥

यथा तत्रैव । "अत एवाद्य प्रभृति भिन्नोऽहं भवद्भ्य:" ।
केचित्तु "भेद: प्रोत्साहनेति" वदन्ति । अथ प्रतिमुखाङ्गानि ।

---

* णाधेति । नाथ किमिदानीमेष प्रलयजलधरस्तनितमन्थर: क्षणे क्षणे समरदुन्दुभिस्ताड्यते इति । सं० । टी० ॥

† णाधेत्ति । नाथ पुनरपि त्वया समाश्वासयितव्या इति । सं० । टी० ॥

(३५१) विलासः परिसर्पश्च विधूतं तापनं तथा।
नर्म्म नर्म्मद्युतिश्चैव तथा प्रगमनं पुनः॥
विरोधश्च प्रतिमुखे तथा स्यात् पर्य्युपासनं।
पुष्पं वज्रमुपन्यासो वर्णसंहार इत्यपि॥

तत्र।

(३५२) समीहा रतिभोगार्था विलास इति कथ्यते।

रतिलक्षणस्य भावस्य यो हेतुभूतो भोगो विषयः प्रमदा पुरुषो वा तदर्था समीहा विलासः। यथा शाकुन्तले।

"कामं प्रिया न सुलभा मनस्तु तद्भावदर्शनाश्वासि।
अकृतार्थेऽपि मनसिजे रतिमुभयप्रार्थना कुरुते"॥

(३५३) दृष्टनष्टानुसरणं परिसर्पश्च कथ्यते।

यथा शाकुन्तले राजा। "भवितव्यमत्र तया। तथा हि।
"अभ्युन्नता पुरस्तादवगाढा जघनगौरवात्पश्चात्।
द्वारेऽस्य पाण्डुसिकते पदपङ्क्तिर्दृश्यतेऽभिनवा"॥

(३५४) कृतस्यानुनयस्यादौ विधूतं त्वपरिग्रहः।

यथा तत्रैव।

"अलं वो अन्तेउरविरहपज्जुस्सुएण राएसिना उवरु-ध्धेन" *। केचित्तु "विधूतं स्यादरतिरिति" वदन्ति॥

---

* अलमिति। अलं वोऽन्तःपुरविरहपर्य्युत्सुकेन राजर्षिणोपरुद्धेन। सं० टी०॥

(३५५) उपायादर्शनं यत्तु तापनं नाम तद्भवेत्।

यथा रत्नावल्यां सागरिका।

"दुल्लहजनानुराओ लज्जा गुरुई परवसो अप्पा।
पियसहि विसमं पेम्मं मरणं सरणं नवरि एक्कं *॥

(३५६) परिहासवचो नर्म

यथा रत्नावल्यां। "सुसङ्गता। सहि जस्स कदे तुमं आअदा सो अयं दे पुरदो चिट्ठदि। सागरिका साभ्यसूयं। कस्स कदे अहं आअदा। सुसं। अइ अण्णसंकिदे ण चित्तफलअस्स"॥

(३५७) धृतिस्तु परिहासजा।

नर्मद्युतिः

यथा तत्रैव। सुसङ्गता। "सहि अदक्खिणा दाणिंसि तुमं जा एवं भट्टिणा हत्थावलम्बिदावि कोवं ण मुञ्चसि †।" साग। सभ्रूभङ्गमीषद्विहस्य। "सुसङ्गदे दाणिं वि कीळिदुं ण विर-

---

* दुल्लहेति। दुर्लभजनानुरागो लज्जा गुर्वी परवश आत्मा। प्रियसखि विषमं प्रेम मरणं शरणं केवलमेकमिति। सं०। नवरिशब्दः केवलार्थो देशीति॥ टी०॥
सहीति। सखि यस्य कृते त्वमागता सोऽयं ते पुरतस्तिष्ठति। इति सं०। कस्य कृतेऽहमागता इति सं०। अयि अन्यशङ्किते न चित्तफलकस्य॥ सं०॥ टी०॥

† सहीति। सखि अदक्षिणा इदानीमसि त्वं या एवं भर्त्रा हस्तावलम्बितापि कोपं न मुञ्चसीति॥ सं०॥ टी०॥

मर्षि * ॥ केचित्तु "दोषस्याच्छादनं हास्यं नर्मद्युतिरिति" वदन्ति।

(३५८) प्रगमनं वाक्यं स्यादुत्तरोत्तरं॥

यथा विक्रमोर्व्वश्यां। उर्व्वशी। "जअदु जअदु महाराओ †। राजा। मया नाम जितं यस्य त्वया जय उदीर्य्यते इत्यादि"।

(३५९) विरोधो व्यसनप्राप्तिः

यथा चण्डकौशिके राजा। "नूनमसमीक्ष्यकारिणा मयान्धेनेव स्फुरच्छिखाकलापो ज्वलनः पद्भ्यां समाक्रान्तः"॥

(३६०) क्रुद्धस्यानुनयः पुनः।
स्यात्पर्य्युपासनं

रत्नावल्यां। विदू। "भो मा कुप्प एसा हि कदलीघरन्तरं गदेत्यादि" ‡।

(३६१) पुष्पं विशेषवचनं मतं॥

यथा तत्रैव राजा। "हस्ते गृहीत्वा स्पर्शं नाटयति"। विदू। "भो वअस्स एसा अवरुव्वा सिरी तए समासादिदा"॥। राजा। वयस्य सत्यं।

---

* सुखकृते इदानीमपि क्रीडितं न मुञ्चसीति॥ सं०॥ टी०॥
† जयत्विति। जयतु जयतु महाराज इति॥ सं०॥ टी०॥
‡ भो मा कुप्येति। एषा हि कदलीगृहान्तरं गतेति॥ सं०॥ टी०॥
॥ भो वयस्येति। भो वयस्य एषा अपूर्व्वा श्रीस्त्वया समासादितेति॥ सं०॥ टी०॥

"श्रीरेषा पाणिरप्यस्याः पारिजातस्य पल्लवः।
कुतोऽन्यथा पतत्येष स्वेदच्छद्मामृतद्रवः" ॥

(३६२) प्रत्यक्षनिष्ठुरं वज्रं

यथा तत्रैव राजा। "कथमिह सोऽहं त्वया ज्ञातः"। सुसं। न केवलं तुमं समं चित्तफलएण ता आव गदुअ देवीए णिवेदइस्सं * ॥

(३६३) उपन्यासः प्रसादनं।

यथा तत्रैव। सुसं। भट्टा अलं सङ्काए मएवि भट्टिणीए पसादेण कीलिदं ज्जेव एदिहिं ता किं कण्णाभरणेण। अदोवि मे गरुअरो पसादो एसो जं तए अहं एत्थ आलिहिदत्ति कुविदा मे पिअसही सागरिका एसाज्जेव पसादीअदु † ॥ केचित्तु।

"उपपत्तिकृतो योऽर्थ उपन्यासः स कीर्त्तितः"।

इति वदन्ति उदाहरन्ति च। तत्रैव। अदिमुहरा क्खु सा गब्भदासीति ‡।

---

* न केवलं तुममिति। न केवलं त्वं समं चित्रफलकेन तद्यावद्गत्वा देव्यै निवेदयिष्यामीति ॥ सं० ॥ टी० ॥

† भट्टेति। भर्त्तरलं शङ्कया मयापि भर्त्त्र्याः प्रसादेन क्रीडितमेव एतैः तत्किं कर्णाभरणेन अतोऽपि मे गुरुतर एव प्रसाद एष यत् त्वया अहं अत्र आलिखितेति कुपिता मे प्रियसखी सागरिका एषैव प्रसाद्यतामिति ॥ सं० ॥ टी० ॥

‡ अतिमुखरा खल्वेषा गर्भदासीति ॥ सं० ॥ टी० ॥

(३६४) चातुर्व्वर्ण्योपगमनं वर्णसंहार इष्यते ॥

यथा वीरचरिते तृतीयेऽङ्के।

"परिषदियमृषीणामेष वीरो युधाजित्
सममृषिभिरमात्यैर्लोमपादश्च वृद्धः।
अयमविरतयज्ञो ब्रह्मवादी पुराणः
प्रभुरपि जनकानामद्रुहो याजकास्ते"॥

इत्यत्र ऋषिक्षत्रादीनां वर्णानां मेलनं। अभिनवगुप्तपादास्तु "वर्णशब्देन पात्राण्युपलक्ष्यन्ते। संहारो मेलनमिति" व्याचक्षते। उदाहरन्ति च रत्नावल्यां द्वितीयेऽङ्के।

अदोवि मे अअं गरुओ पसादो * इत्यादेरारभ्य णं हत्थे गेह्णिअ पसादेहि णं †। राजा क्वासौ क्वासावित्यादि॥ अथ गर्भाङ्गानि।

(३६५) अभूताहरणं मार्गो रूपोदाहरणे क्रमः।
सङ्ग्रहश्चानुमानञ्च प्रार्थनाक्षिप्तिरेव च॥
तोटकाधिबलोद्वेगा गर्भे स्युर्विद्रवस्तथा।
अत्र व्याजाश्रयं वाक्यमभूताहरणं मतं॥

यथा अश्वत्थामाङ्के।

"अश्वत्थामा हत इति पृथासूनुना स्पष्टमुक्त्वा
स्वैरं शेषे गज इति किल व्याहृतं सत्यवाचा"॥

---

* अदोवीति। अतोऽपि मे अयं गुरुतरः प्रसाद इति॥ सं०॥ टी०॥
† णमु हत्थे गृहीत्वा प्रसादय एनां इति॥ सं०॥ टी०॥

(३६६) तत्त्वार्थकथनं मार्गः

यथा चण्डकौशिके राजा। भगवन्

"गृह्यतामर्ज्जितमिदं भार्य्यातनयविक्रयात्।
शेषस्यार्थे करिष्यामि चाण्डालेऽप्यात्मविक्रयं"॥

(३६७) रूपं वाक्यं वितर्कवत्।

यथा रत्नावल्यां राजा।

"मनः प्रकृत्यैव चलं दुर्लक्ष्यञ्च तथापि मे।
कामेनैतत्कथं विद्धं समं सर्व्वैः शिलीमुखैः"॥

(३६८) उदाहरणमुत्कर्षयुक्तं वचनमुच्यते॥

यथा अश्वत्थामाङ्के।

"यो यः शस्त्रं बिभर्त्ति स्वभुजगुरुमदात् पाण्डवीनाञ्चमूनां
यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा।
यो यस्तत्कर्म्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपः
क्रोधान्धस्तस्य तस्य स्वयमिह जगतामन्तकस्यान्तकोऽहं"॥

(३६९) भावतत्त्वोपलब्धिस्तु क्रमः स्यात्

यथा शाकुन्तले राजा। "स्थाने खलु विस्मृतनिमेषेण चक्षुषा प्रियामवलोकयामि। तथाहि।

"उन्नमितैकभ्रूलतमाननमस्याः पदानि रचयन्त्याः।
पुलकाञ्चितेन कथयति मय्यनुरागं कपोलेन"॥

(३७०) संग्रहः पुनः।

सामदानार्थसम्पन्नः

यथा रत्नावल्यां राजा। साधु वयस्य इदन्ते पारितोषिकमिति कटकं ददाति।

(३७१) लिङ्गादूहोऽनुमानता॥

यथा जानकीराघवे नाटके रामः।

"लीलागतैरपि तरङ्गयतो धरित्रीम्
आलोकनैर्नमयतो जगतां शिरांसि।
तस्यानुमापयति काञ्चन कान्तिगौर-
कायस्य सूर्य्यतनयत्वमधृष्यताञ्च"॥

(३७२) रतिहर्षोत्सवानान्तु प्रार्थनं प्रार्थना भवेत्।

यथा रत्नावल्यां। प्रिये सागरिके।

"शीतांशुर्मुखमुत्पले तव दृशौ पद्मानुकारौ करौ
रम्भास्तम्भनिभं तथोरुयुगलं बाहू मृणालोपमौ।
इत्याह्लादकराखिलाङ्गि रभसान्निःशङ्कमालिङ्ग्य मा-
मङ्गानि त्वमनङ्गतापविधुराण्येह्येहि निर्व्वापय"॥

इदञ्च प्रार्थनाख्यमङ्गं। यन्मते निर्व्वहणे इत्थ भूतावसरत्वात् प्रशस्तिनामाङ्गं नास्ति तन्मतानुसारेणोक्तं। अन्यथाङ्गानां पञ्चषष्टित्त्वप्रसङ्गात्।

(३७३) रहस्यार्थस्य तूद्भेदः क्षिप्तिः स्यात्

यथा अश्वत्थामाङ्के।

"एकस्यैव विपाकोऽयं दारुणो भुवि वर्त्तते।
केशग्रहे द्वितीयेऽस्मिन् नूनं निःशेषिताः प्रजाः"॥

(३७४) त्रोटकं पुनः ।

संरब्धवाक्

यथा चण्डकौशिके कौशिकः ।

"आः पुनः कथमद्यापि न सम्भृताः स्वर्णदक्षिणाः" ॥

(३७५) अभिबलमभिसन्धिश्छलेन यः ॥

यथा रत्नावल्यां काञ्चनमाला । "भट्टिणि इत्रं सा चित्त-सालिश्रा वसन्तश्रस्य सङ्गेदं करेमीत्यादि * ।

(३७६) नृपादिजनिता भीतिरुद्वेगः परिकीर्त्तितः ।

यथा वेण्यां ।

"प्राप्तावेकरथारूढौ पृच्छन्तौ त्वामितस्ततः ।
स कर्णारिः स च क्रूरो वृककर्म्मा वृकोदरः" ॥

(३७७) शङ्काभयत्रासकृतः सम्भ्रमो विद्रवो मतः ॥

यथा ।

"कालान्तककरालास्यं क्रोधोद्भूतं दशाननं ।
विलोक्य वानरानीके सम्भ्रमः कोऽप्यजायत" ॥

अथ विमर्षाङ्गानि ।

(३७८) अपवादोऽथ सम्फेटो व्यवसायो द्रवो द्युतिः ।
शक्तिः प्रसङ्गः खेदश्च प्रतिषेधो विरोधनं ॥
प्ररोचना विमर्षे स्यादादानं छादनं तथा ।
दोषप्रख्याऽपवादः स्यात्

---

* भट्टिनीति । भर्त्तीयं सा चित्रशालिका वसन्तस्य सङ्केतं करोमीति ॥ स० ॥ टी० ॥

यथा वेण्यां युधिष्ठिरः । पाञ्चालक कच्चिदासादिता तस्य दुरात्मनः पदवी । पाञ्चालकः । न केवलं पदवी स एव दुरात्मा देवीकेशपाशस्पर्शपातकप्रधानहेतुरुपलब्धः ।

(३७९) संफेटो रोषभाषणं ॥

यथा तत्रैव राजा । अरेरे मरुत्तनय वृद्धस्य राज्ञः पुरतो निन्दितमप्यात्मकर्म श्लाघसे । शृणु रे ।

"कृष्टा केशेषु भार्या तव तव च पशोस्तस्य राज्ञस्तयोर्वा
प्रत्यक्षं भूपतीनां मम भुवनपतेराज्ञया द्यूतदासी ।
तस्मिन् वैरानुबन्धे वद किमपकृतं तैर्हता ये नरेन्द्रा
बाह्वोर्वीर्यातिभारद्रविणगुरुमदं मामजित्वैव दर्पः" ॥

"भीमः सक्रोधं आः पाप । राजा । आः पाप इत्यादि" ।

(३८०) व्यवसायश्च विज्ञेयः प्रतिज्ञाहेतुसम्भवः ॥

यथा तत्रैव भीमः ।

"निहताशेषकौरव्यः क्षीबो दुःशासनासृजा ।
भङ्क्ता दुर्योधनस्योर्वोर्भीमोऽयं शिरसा नतः" ॥

(३८१) द्रवो गुरुव्यतिक्रान्तिः शोकावेगादिसम्भवा ।

यथा तत्रैव । "युधिष्ठिरः । भगवन् कृष्णाग्रज सुभद्राभ्रातः ।

ज्ञातिप्रीतिर्मनसि न कृता क्षत्रियाणां न धर्मो
रूढं सख्यं तदपि गणितं नानुजस्यार्ज्जुनेन ।
तुल्यः कामं भवतु भवतः शिष्ययोः स्नेहबन्धः
कोऽयं पन्था यदसि विमुखो मन्दभाग्ये मयि त्वं" ॥

(३८२) तत्रानोद्वेजने प्रोक्ता द्युतिः

यथा तत्रैव दुर्योधनं प्रति कुमारवृकोदरेणोक्तं।

"जन्मेन्दोर्विमले कुले व्यपदिशस्यद्यापि धत्से गदां
मां दुःशासनकोष्णशोणितमधुक्षीवं रिपुं मन्यसे।
दर्पान्धो मधुकैटभद्विषि हरावप्युद्धतं चेष्टसे
त्रासान्मे नृपशो विहाय समरं पङ्केऽधुना लीयसे"॥

(३८३) शक्तिः पुनर्भवेत्।
विरोधस्य प्रशमनं

यथा तत्रैव।

"कुर्वन्त्वाप्ता हतानां रणशिरसि जना वह्निसाद्देहभारान्-
श्रून्मिश्रं कथञ्चिद्ददतु जलममी बान्धवा बान्धवेभ्यः।
मार्गन्तां ज्ञातिदेहान् हतनरगहने खण्डितान् गृध्रकङ्कै-
रस्तं भास्वान् प्रयातः सह रिपुभिरयं संह्रियन्तां बलानि"॥

(३८४) प्रसङ्गो गुरुकीर्त्तनं॥

यथा मृच्छकटिकायां चाण्डालकः। "एसो सागरदत्तस्स सुओ अज्जविसुदत्तस्स नत्तिओ चारुदत्तो वावादिदुं वज्झट्ठाणं णिज्जइ एदेण किल गणिआ वसन्तसेना सुवण्णलोहेन वावादिदत्ति" *। चारुदत्तः।

---

* एष सागरदत्तस्य सुत आर्य्यविश्वदत्तस्य नप्ता चारुदत्तो व्यापादयितुं वध्यस्थानं नीयते। एतेन किल गणिका वसन्तसेना सुवर्णलोभेन व्यापादितेति॥ सं०॥ टी०॥

"मखशतपरिपूतं गोत्रमुद्भासितं यत्
सदसि निविडचैत्यब्रह्मघोषैः पुरस्तात्।
मम निधनदशायां वर्त्तमानस्य पापै-
स्तदसदृशमनुष्यैर्घुष्यते घोषणायां" ॥

इत्यनेन चारुदत्तवधाभ्युदयानुकूलप्रसङ्गाद् गुरुकीर्त्तनमिति प्रसङ्गः।

(३८५) मनश्चेष्टासमुत्पन्नः श्रमः खेद इति स्मृतः।

मनःसमुत्पन्नो यथा मालतीमाधवे।

"दलति हृदयं गाढोद्वेगं द्विधा न तु भिद्यते
वहति विकलः कायो मोहं न मुञ्चति चेतनां।
ज्वलयति तनूमन्तर्दाहः करोति न भस्मसात्
प्रहरति विधिर्मर्म्मच्छेदी न कृन्तति जीवितं" ॥

एवं चेष्टासमुत्पन्नोऽपि।

(३८६) ईप्सितार्थप्रतीघातः प्रतिषेध इतीष्यते।

यथा मम प्रभावत्यां विदूषकं प्रति प्रद्युम्नः। "सखे कथमिह त्वमेकाकी वर्त्तसे क्व नु पुनः प्रियसखीजनानुगम्यमाना प्रियतमा मे प्रभावती। विदू। असुरवइणा आआरिअ कहिं वि णीदा *। प्रद्युम्नः दीर्घं निश्वस्य।

"हा पूर्णचन्द्रमुखि मत्तचकोरनेत्रे
मामानताङ्गि परिहाय कुतो गतासि।

---

* असुरपतिना आकार्य्य कुत्रापि नीता। सं०॥

गच्छ त्वमद्य ननु जीवित तूर्णमेव
दैवं कदर्थनपरं कृतकृत्यमस्तु" ॥

(३८७) कार्य्यात्ययोपगमनं विरोधनमिति स्मृतं ॥

यथा वेण्यां युधिष्ठिरः।

"तीर्णे भीष्ममहोदधौ कथमपि द्रोणानले निर्वृते
कर्णाशीविषभोगिनि प्रशमिते शल्ये च याते दिवं।
भीमेन प्रियसाहसेन रभसात्स्वल्पावशेषे जये
सर्व्वे जीवितसंशयं वयममी वाचा समारोपिताः" ॥

(३८८) प्ररोचना तु विज्ञेया संहारार्थप्रदर्शिनी।

यथा वेण्यां पाञ्चालकः। "अहं देवेन चक्रपाणिना सहित इत्युपक्रम्य कृतं सन्देहेन।

"पूर्य्यन्तां सलिलेन रत्नकलशा राज्याभिषेकाय ते
कृष्णाऽत्यन्तचिरोज्झिते तु कवरीबन्धे करोतु क्षणं।
रामे शातकुठारभास्वरकरे क्षत्रद्रुमोच्छेदिनि
क्रोधान्धे च वृकोदरे परिपतत्याजौ कुतः संशयः" ॥

(३८९) कार्य्यसंग्रह आदानं

यथा वेण्यां। "ननु भोः समन्तपञ्चकचारिणः।
नाहं रक्षो न भूतो रिपुरुधिरजलाह्लादिताङ्गः प्रकामं
निस्तीर्णोरुप्रतिज्ञाजलनिधिगहनः क्रोधनः क्षत्रियोऽस्मि।
भो भो राजन्यवीराः समरशिखिशिखाभुक्तशेषाः कृतं व-
स्त्रासेनानेन लीनैर्हतकरितुरगान्तर्हितैरास्यते यत्" ॥

अत्र समस्तरिपुवधकार्य्यस्य सङ्गृहीतत्वादादानं।

(३९०) तदाङ्गच्छादनं पुनः।

कार्य्यार्थमपमानादेः सहनं खलु यद्भवेत्॥

यथा तत्रैव अर्ज्जुनः। आर्य्य।

"अप्रियाणि करोत्येष वाचा शक्तो न कर्म्मणा।

हतभ्रातृशतो दुःखी प्रलापैरस्य का व्यथा"॥

अथ निर्व्वहणाङ्गानि।

(३९१) सन्धिर्विबोधो ग्रथनं निर्णयः परिभाषणं।

कृतिः प्रसाद आनन्दः समयोऽप्युपगूहनं॥

भाषणं पूर्व्ववाक्यञ्च काव्यसंहार एव च।

प्रशस्तिरिति संहारे ज्ञेयान्यङ्गानि नामतः॥

तत्र।

(३९२) वीजोपगमनं सन्धिः

यथा वेण्यां भीमः। "भवति यज्ञवेदिसम्भवे स्मरति भवती यत्मयोक्तं चञ्चद्भुजेत्यादि"॥ अनेन मुखे क्षिप्तवीजस्य पुनरुपगमनमिति सन्धिः।

(३९३) विबोधः कार्य्यमार्गणं॥

यथा तत्रैव भीमः। "मुञ्चतु मामार्य्यः क्षणमेकं। युधिष्ठिरः। किमपरमवशिष्टं। भीमः। सुमहदवशिष्टं। संयमयामि तावदनेन सुयोधनशोणितोक्षितेन पाणिना पाञ्चाल्या दुःशासनावकृष्टं केशहस्तं। युधिष्ठिरः। गच्छतु भवाननुभवतु

तपस्विनो वेणीसंहारमिति" अनेन केशसंयमनकार्य्यस्यान्वेषणा-द्विबोधः।

(३९४) उपन्यासस्तु कार्य्याणां ग्रथनं

यथा तत्रैव भीमः। "पाञ्चालि न खलु मयि जीवति संहर्त्तव्या दुःशासनविलुलिता वेणिरात्मपाणिभ्यां तिष्ठ स्वयमेवाहं संहरामीति" अनेन कार्य्यस्योपक्षेपाद्ग्रथनं।

(३९५) निर्णयः पुनः।
अनुभूतार्थकथनं

यथा तत्रैव भीमः। "देव अजातशत्रो अद्यापि दुर्य्योधनहतकः। मयापि तस्य दुरात्मनः।

"भूमौ क्षिप्तं शरीरं निहितमिदमसृक्चन्दनाभं निजाङ्गे
लक्ष्मीरार्य्ये निषिक्ता चतुरुदधिपयःसीमया सार्द्धमुर्व्या।
भृत्या मित्राणि योधाः कुरुकुलमनुजा दग्धमेतद्रणाग्नौ
नामैकं यद्ब्रवीषि क्षितिप तदधुना धार्त्तराष्ट्रस्य शेषं"॥

(३९६) परिवादकृतं वाक्यं वदन्ति परिभाषणं।

यथा शाकुन्तले। राजा। "आर्य्ये अथ सा तत्रभवती किमाख्यस्य राजर्षेः पत्नी। तापसी। को तस्स धम्मदारपरिच्चाइणो णामं गेण्हिस्सदि"*॥

(३९७) लब्धार्थागमनं कृतिः।

---

* कस्तस्य धर्म्मदारपरित्यागिनो नाम ग्रहीष्यतीति॥ सं०॥ टी०॥

यथा वेण्यां कृष्णः। "एते भगवन्तो व्यासवाल्मीकिप्रभृतयोऽभिषेकं धारयन्तस्तिष्ठन्ति इति" अनेन प्राप्तराज्यस्याभिषेकमङ्गलैः स्थिरीकरणं कृतिः।

(३९८) शुश्रूषादिः प्रसादः स्यात्

यथा तत्रैव। भीमेन द्रौपद्याः केशसंयमनं।

(३९९) आनन्दो वाञ्छितागमः।

यथा तत्रैव। द्रौपदी। विस्समवि दं एदं वावारं नाधस्स पसादेन पुणोवि सिक्खिस्सं *।

(४००) समयो दुःखनिर्याणं

रत्नावल्यां वासवदत्ता। रत्नावलीमालिङ्ग्य समस्सस वहीणिए समस्सस †।

(४०१) तद्भवेदुपगूहनं।

यत्स्यादद्भुतसम्प्राप्तिः

यथा मम प्रभावत्यां नारददर्शनात् प्रद्युम्न ऊर्द्ध्वमवलोक्य।

"दधद्विद्युल्लेखामिव कुसुममालां परिमल-
भ्रमद्भृङ्गश्रेणीध्वनिभिरुपगीतां तत इतः।
दिगन्तं ज्योतिर्भिस्तुहिनकरगौरैर्धवलय-
न्नितः कैलासाद्रिः पतति वियतः किं पुनरिदं"॥

---

* विस्मृतमपि तदेतद् व्यापारं नाथस्य प्रसादेन पुनरपि शिक्षिष्यामीति॥ सं०॥ टी०॥

† समाश्वसीहि भगिनि समाश्वसीहीति॥ सं०॥ टी०॥

(४०२) सामदानादिभाषणं ॥

यथा चण्डकौशिके। "धर्म्मः। तदेहि धर्म्मलोकमधितिष्ठ" ॥

(४०३) पूर्व्ववाक्यन्तु विज्ञेयं यथोक्तार्थोपदर्शनं।

यथा वेण्यां भीमः। "बुद्धिमतिके क सा भानुमती परिभवतु सम्प्रति पाण्डवदारान्"।

(४०४) वरप्रदानसम्प्राप्तिः काव्यसंहार इष्यते।

यथा सर्व्वत्र। "किन्ते भूयः प्रियमुपकरोमीति"।

(४०५) नृपदेशादिशान्तिस्तु प्रशस्तिरभिधीयते ॥

यथा प्रभावत्यां।

"राजानः सुतनिर्व्विशेषमधुना पश्यन्तु नित्यं प्रजा
जीयासुः सदसद्विवेकपटवः सन्तो गुणग्राहिणः।
शस्यस्वर्णसमृद्धयः समधिकाः सन्तु क्षमामण्डले
भूयादव्यभिचारिणी त्रिजगतो भक्तिश्च नारायणे" ॥

अत्र च उपसंहारप्रशस्त्योरन्त एकेन क्रमेणैव स्थितिः। "इह च मुखसन्धौ उपक्षेपपरिकरपरिन्यासयुक्त्युद्भेदसमाधानानां प्रतिमुखे च परिसर्पणप्रगमनवज्रोपन्यासपुष्पाणां गर्भे अभूताहरणमार्गत्रोटकाक्षेपाणां विमर्षे अपवादशक्तिव्यवसायप्ररोचनादानानां प्राधान्यं।" "अन्येषाञ्च यथा सम्भवं स्थितिरिति" केचित्।

(४०६) चतुःषष्टिविधं ह्येतदङ्गं प्रोक्तं मनीषिभिः।
कुर्य्यादनियते तस्य सन्धावपि निवेशनं ॥
रसानुगुणतां वीक्ष्य रसस्यैव हि मुख्यता।

यथा वेणीसंहारे तृतीयाङ्के। दुर्य्योधनकर्णयोर्म्महत्सम्प्रधारणं। एवमन्यत्रापि । यत्तु "रुद्रटादिभिर्नियम एवेति" उक्तं तल्लक्ष्यविरुद्धं ।

(४०७) इष्टार्थरचनाश्चर्य्यलाभो वृत्तान्तविस्तरः।
रागप्राप्तिः प्रयोगस्य गोप्यानां गोपनन्तथा॥
प्रकाशनं प्रकाश्यानामङ्गानां षड्विधं फलं।
अङ्गहीनो नरो यद्वन्नैवारम्भक्षमो भवेत्॥
अङ्गहीनं तथा काव्यं न प्रयोगाय युज्यते।
सम्पादयेतां सन्ध्यङ्गं नायकप्रतिनायकौ॥
तदभावे पताकाद्यास्तदभावे तथेतरत्।

प्रायेण प्रधानपुरुषप्रयोज्यानि सन्ध्यङ्गानि भवन्ति। किन्तूपक्षेपादित्रयं वीजस्याल्पमात्रसमुद्दिष्टत्वात् अप्रधानपुरुषप्रयोजितमेव साधु।

(४०८) रसव्यक्तिमपेक्ष्यैषामङ्गानां सन्निवेशनं।
न तु केवलया शास्त्रस्थितिसम्पादनेच्छया॥

तथा च वेण्यां। दुर्य्योधनस्य भानुमत्या सह विप्रलम्भो दर्शितस्तत्तादृशेऽवसरेऽत्यन्तमनुचितं।

(४०९) अविरुद्धन्तु यद्वृत्तं रसादिव्यक्तयेऽधिकं।
तदप्यन्यथयेद्धीमान् न वदेद्वा कदाचन॥

अनयोरुदाहरणं सत्प्रबन्धेष्वभिव्यक्तमेव। अथ वृत्तयः।

(४१०) शृङ्गारे कैशिकी वीरे सात्त्वत्यारभटी पुनः।
रसे रौद्रे च वीभत्से वृत्तिः सर्व्वत्र भारती॥

चतस्रो वृत्तयो ह्येताः सर्व्वनाट्यस्य मातृकाः।
स्युर्नायकादिव्यापारविशेषा नाटकादिषु॥

तत्र कौशिकी।

(४११) या श्लक्ष्णनेपथ्यविशेषचित्रा
स्त्रीसङ्कुला पुष्कलनृत्यगीता।
कामोपभोगप्रभवोपचारा
सा कौशिकी चारुविलासयुक्ता॥
नर्म्म च नर्म्मस्फूर्जो नर्म्मस्फोटोऽथ नर्म्मगर्भश्च।
चत्वार्य्यङ्गान्यस्याः

तत्र।

(३१२) वैदग्ध्यक्रीडितं नर्म्म।
इष्टजनावर्ज्जनकृत्तच्चापि त्रिविधं मतं॥
विहितं शुद्धहास्येन सशृङ्गारभयेन च।

तत्र केवलहास्येन विहितं यथा रत्नावल्यां। वासवदत्ता फलकमुद्दिश्य सहासं। "एसा वि अवरा तव समीवे आ लिहिदा एदं किं अज्ज वसन्तस्स विणाणं" *। सशृङ्गारहास्येन यथा शाकुन्तले। राजानं प्रति शकुन्तला। "असन्तुट्टो उण किं करिस्ससि †। राजा इदमिति व्यवसितः। शकु। वक्त्रं ढौकते"। सभयहास्येन यथा रत्नावल्यां। आलेख्यदर्शनावसरे। "सुसङ्गा।

---

* एषाप्यपरा तव समीपे यथा लिखिता इदं किमार्य्यं वसन्तस्य विज्ञापनमिति॥ सं॰॥ टी॰॥

† असन्तुष्टः पुनः किं करिष्यतीति॥ सं॰॥ टी॰॥

णिदो मए एसो वुत्तन्तो समं चित्तफलएण। ता देवीए गदुअ णिवेदइस्सं”*। एतद्वाक्यसम्बन्धि नर्म्मोदाहृतं। एवं वेशचेष्टा-सम्बन्ध्यपि।

(४१३) नर्म्मस्फूर्ज्जः सुखारम्भो भयान्तो नवसङ्गमः।

यथा मालविकायां सङ्केतनायकमभिसृतायां नायकः।

“विसृज सुन्दरि सङ्गमसाध्वसं
ननु चिरात्प्रभृति प्रणयोन्मुखे।
प्रतिगृहाण गते सहकारतां
त्वमतिमुक्तलताचरितं मयि” ॥

मालविका। भट्टा देवीए भएण अप्पणोवि पिअं कत्तुं ण पारेमि इत्यादि”†। अथ नर्म्मस्फोटः।

(४१४) नर्म्मस्फोटो भावलेशैः सूचितोऽल्परसो मतः॥

यथा मालतीमाधवे।

“गमनमलसं शून्या दृष्टिः शरीरमसौष्ठवं
श्वसितमधिकं किन्न्वेतत् स्यात् किमन्यदितोऽथवा।
भ्रमति भुवने कन्दर्पाज्ञा विकारि च यौवनं
ललितमधुरास्ते ते भावाः क्षिपन्ति च धीरतां” ॥

अत्रालसगमनादिभिर्भावलेशैर्माधवस्य मालत्यामनुरागः स्तोकः प्रकाशितः।

---

* नीतो मया एष वृत्तान्तः समं चित्रफलकेन ता देव्यै गत्वा निवेदयिष्यामीति। सं० ॥ टी० ॥

† भर्त्तर्देव्या भयेनात्मनोऽपि प्रियं कर्त्तुं न पारयामीति ॥ सं०॥टी०॥

(४१५) नर्म्मगर्भो व्यवहृतिर्नेतुः प्रच्छन्नवर्त्तिनः।

यथा तत्रैव। सखीरूपधारिणा माधवेन मालत्या मरण व्यवसायवारणं। अथ सात्त्वती।

(४१६) सात्त्वती बहुला सत्त्वशौर्य्यत्यागदयार्जवैः।
सहर्षा क्षुद्रशृङ्गारा विशोका साद्भुता तथा॥
उत्थापकोऽथ संघात्यः संलापः परिवर्त्तकः।
विशेषा इति चत्वारः सात्त्वत्याः परिकीर्त्तिताः॥
उत्तेजनकरी शत्रोर्व्वागुत्थापक उच्यते।

यथा वीरचरिते।

"आनन्दाय च विस्मयाय च मया दृष्टोऽसि दुःखाय वा
वैतृष्ण्यन्तु कुतोऽद्य सम्प्रति मम त्वद्दर्शने चक्षुषः।
त्वत्साङ्गत्यसुखस्य नास्मि विषयः किं वा बहुव्याहृते-
रस्मिन् विस्मृतजामदग्न्यविजये बाहौ धनुर्जृम्भतां"॥

(४१७) मन्त्रार्थदैवशक्त्यादेः संघात्यः सङ्घभेदनं।

मन्त्रशक्त्या यथा मुद्राराक्षसे राक्षससहायानां चाणक्येन स्वबुद्ध्या भेदनं। अर्थशक्त्यापि तत्रैव। दैवशक्त्या यथा रामायणे रावणादिभोषणस्य भेदः।

(४१८) संलापः स्याद् गभीरोक्तिर्नानाभावसमाश्रयः।

यथा वीरचरिते रामः। "अयं सः किल सपरिवारका-र्त्तिकेयविजयावर्ज्जितेन भगवता नीललोहितेन परिवत्सर-

महद्भ्यस्तेवास्मिने तुभ्यं प्रसादीकृतः परशुः। परशुरामः।
राम दाशरथे स एवायमार्य्यपादानां प्रियः परशुरित्यादि"।

(४१९) प्रारब्धादन्यकार्य्याणां करणं परिवर्त्तकः।

यथा वेण्यां भीमः। "सहदेव गच्छ त्वं गुरुमनुवर्त्तस्व अहमप्यस्त्रागारं प्रविश्यायुधसहायो भवामीति यावत् अथवा आमन्त्रयितव्यैव मया पाञ्चालीति"। अथारभटी।

(४२०) मायेन्द्रजालसंग्रामक्रोधोद्भ्रान्तादिचेष्टितैः।
संयुक्ता वधबन्धाद्यैरुद्धतारभटी मता॥
वस्तूत्थापनसम्फेटौ संक्षिप्तिरवपातनं।
इति भेदास्तु चत्वार आरभट्याः प्रकीर्त्तिताः॥
मायाद्युत्थापितं वस्तु वस्तूत्थापनमुच्यते।

यथोदात्तराघवे।

"जीयन्ते जयिनो निशान्ततिमिरव्रातैर्व्वियद्व्यापिभि-
र्भास्वन्तः सकला रवेरपि कराः कस्मादकस्मादमी।
एते चोग्रकबन्धकण्ठरुधिरैराध्मायमानोदरा
मुञ्चन्त्याननकन्दरानलमुचस्तीव्रारवान् फेरवा इत्यादि"॥

(४२१) सम्फेटस्तु समाघातः क्रुद्धसत्वरयोर्द्वयोः।

यथा मालत्यां माधवाघोरघण्टयोः।

(४२२) संक्षिप्ता वस्तुरचना शिल्पैरितरथापि वा।
संक्षिप्तिः स्यान्निवृत्तौ च नेतुर्नेतन्तरग्रहः॥

यथा उदयनचरिते किलिञ्जहस्तिप्रयोगः। द्वितीयं यथा॥

वालिनिहत्या सुग्रीवः। यथा वा परशुरामस्यौद्धत्यनिवृत्त्या शान्तत्वापादानं। "पुण्या ब्राह्मणजातिरिति"॥

(४२३) प्रवेशत्रासनिष्क्रान्तिहर्षविद्रवसम्भवं।
अवपातनमित्युक्तं

यथा कृत्यारावणे षष्ठेऽङ्के। "प्रविश्य खड्गहस्तः पुरुष इति" अतः प्रभृति निष्क्रमणपर्य्यन्तं।

(४२४) पूर्व्वमुक्तैव भारती॥

अथ नाट्योक्तयः।

(४२५) अश्राव्यं खलु यद्वस्तु तदिह स्वगतं मतं।
सर्व्वश्राव्यं प्रकाशं स्यात्तद्भवेदपवारितं॥
रहस्यन्तु यदन्यस्य परावृत्त्य प्रकाश्यते।
त्रिपताककरेणान्यानपवार्य्यान्तरा कथां॥
अन्योन्यामन्त्रणं यत्स्याज्जनान्ते तज्जनान्तिकं।
किं ब्रवीषीति यन्नाट्ये विना पात्रं प्रयुज्यते॥
श्रुत्वेवानुक्तमप्यर्थं तत्स्यादाकाशभाषितं।

यः कश्चिदर्थो यस्माद्गोपनीयस्तस्यान्तरत ऊर्द्ध्वं सर्व्वाङ्गुलिनामितानामिकं त्रिपताकलक्षणं करं कृत्वान्येन सह यन्मन्त्र्यते तज्जनान्तिकं परावृत्त्यान्यस्य रहस्यकथनमपवारितं। शेषं स्पष्टं।

(४२६) दत्तां सिद्धाञ्च सेनाञ्च वेश्यानां नाम दर्शयेत्।
दत्तप्रायाणि वणिजां चेटचेट्योस्तथा पुनः॥
वसन्तादिषु वर्ण्यस्य वस्तुनो नाम यद्भवेत्।

वेश्या यथा वसन्तसेनादिः। वणिग्विष्णुदत्तादिः। चेटः कलहंसादिः। चेटी मन्दारिकादिः।

(४२७) नाम कार्य्यं नाटकस्य गर्भितार्थप्रकाशकं।

यथा रामाभ्युदयादिः।

(४२८) नायिकानायकाख्यानां सञ्ज्ञाप्रकरणादिषु॥

यथा मालतीमाधवादिः।

(४२९) नाटिकासट्टकादीनां नायिकाभिर्विशेषणं।

यथा रत्नावलीकर्पूरमञ्जर्य्यादिः।

(४३०) प्रायेण ण्यन्तकः साधिर्गमेः स्थाने प्रयुज्यते॥

यथा आकुन्तले। ऋषी। गच्छाव इत्यर्थे साधयावस्तावत्।

(४३१) राजा स्वामीति देवेति भृत्यैर्भट्टेति चाधमैः।
राजर्षिभिर्व्वयस्येति तथा विदूषकेण च॥
राजन्नित्यृषिभिर्व्वाच्यः सोऽपत्यप्रत्ययेन च।
स्वेच्छया नामभिर्विप्रैर्विप्र आर्य्येति चेतरैः॥
वयस्येत्यथवा नाम्ना वाच्यो राज्ञा विदूषकः।
वाच्यौ नटीसूत्रधारावार्य्यनाम्ना परस्परं॥
सूत्रधारं भवेद्भाव इति वै पारिपार्श्विकः।
सूत्रधारो मारिषेति हण्डे इत्यधमैः समाः॥
वयस्येत्युत्तमैर्हंहो मध्यैरार्य्येति चाग्रजः।
भगवन्निति वक्तव्याः सर्व्वैर्देवर्षिलिङ्गिनः॥

वदेद्राज्ञीश्च चेटीश्च भवतीति विदूषकः ।
आयुष्मन् रथिनं सूतो वृद्धं तातेति चेतरः ॥
वत्स पुत्रक तातेति नाम्ना गोत्रेण वा सुतः ।
शिष्योऽनुजश्च वक्तव्योऽमात्य आर्य्येति चाधमैः ॥
विप्रैरयममात्येति सचिवेति च भण्यते ।
साधो इति तपस्वी च प्रशान्तश्चोच्यते बुधैः ॥
अगृहीताभिधः पूज्यः शिष्याद्यैर्विनिगद्यते ।
उपाध्यायेति चाचार्य्यो महाराजेति भूपतिः ॥
स्वामीति युवराजस्तु कुमारो भर्तृदारकः ।
सौम्य भद्रमुखेत्येवमधमैस्तु कुमारकः ॥
वाच्या प्रकृतिभीराज्ञः कुमारी भर्तृदारिका ॥
पतिर्यथा तथा वाच्या ज्येष्ठमध्याधमैस्त्रियः ।
हलेति सदृशी प्रेष्या हञ्जे वेश्याऽज्जुका तथा ॥
कुट्टिन्यम्बेत्यनुगतैः पूज्या च जरतीजनैः ।
आमन्त्रणैश्च पाषण्डा वाच्याः स्वसमयागतैः ॥
शकादयश्च सम्भाष्या भद्रदत्तादिनामभिः ।
यस्य यत्कर्म्म शिल्पं वा विद्या वा जातिरेव वा ॥
तेनैव नाम्ना वाच्योऽसौ ज्ञेयाश्चान्ये यथोचितं ।

अथ भाषाविभागः ।

(४३२) पुरुषाणामनीचानां संस्कृतं स्यात् कृतात्मनां ।
शौरसेनी प्रयोक्तव्या तादृशीनाञ्च योषितां ॥

आसामेव तु गाथासु महाराष्ट्रीं प्रयोजयेत्।
अत्रोक्ता मागधी भाषा राजान्तःपुरचारिणां॥
चेटानां राजपुत्राणां श्रेष्ठिनां चार्द्धमागधी।
प्राच्या विदूषकादीनां धूर्त्तानां स्यादवन्तिका॥
योधनागरिकादीनां दाक्षिणात्या हि दीव्यतां।
शकाराणां शकादीनां शाकारीं सम्प्रयोजयेत्॥
वाह्लीकभाषा दिव्यानां द्राविडी द्रविडादिषु।
आभीरेषु तथाऽभीरी चाण्डाली पुक्कसादिषु॥
आभीरी शावरी चापि काष्ठपत्रोपजीविषु।
तथैवाङ्गारकारादौ पैशाची स्यात् पिशाचवाक्॥
चेटीनामप्यनीचानामपि स्यात् शौरसेनिका।
बालानां षण्ढकानाञ्च नीचग्रहविचारिणां॥
उन्मत्तानामातुराणां सैव स्यात् संस्कृतं क्वचित्॥
ऐश्वर्य्येण प्रमत्तस्य दारिद्रोपस्रुतस्य च।
भिक्षुबन्धधरादीनां प्राकृतं सम्प्रयोजयेत्॥
संस्कृतं सम्प्रयोक्तव्यं लिङ्गिनीषूत्तमासु च।
देवीमन्त्रिसुतावेश्यास्वपि कैश्चित्तथोदितं॥
यद्देशं नीचपात्रन्तु तद्देशं तस्य भाषितं।
कार्य्यतश्चोत्तमादीनां कार्य्यो भाषाविपर्य्ययः॥
योषित् सखीबालवेश्याकितवाप्सरसां तथा।
वैदग्ध्यार्थं प्रदातव्यं संस्कृतं चान्तरान्तरा॥

एषामुदाहरणान्याकरेषु बोद्धव्यानि । भाषालक्षणानि मम तातपादानां भाषार्णवे ।

(४३३) षट्‌त्रिंशल्लक्षणान्यत्र नाट्यालङ्कृतयस्तथा ।
त्रयस्त्रिंशत् प्रयोज्यानि वीथ्यङ्गानि त्रयोदश ॥
लास्याङ्गानि दश यथालाभं रसव्यपेक्षया ।

यथालाभं प्रयोज्यानीति सम्बन्धः । अत्रेति नाटके । तत्र लक्षणानि ।

(४३४) भूषणाक्षरसंघातौ शोभोदाहरणं तथा ।
हेतुसंशयदृष्टान्तास्तुल्यतर्कः पदोच्चयः ॥
निदर्शनाभिप्रायौ च प्राप्तिर्व्विचार एव च ।
दिष्टोपदिष्टे च गुणातिपातातिशयौ तथा ॥
विशेषणनिरुक्ती च सिद्धिर्भ्रंशविपर्य्ययौ ।
दाक्षिण्यानुनयौ मालाऽर्थापत्तिर्गर्हणा तथा ॥
पृच्छा प्रसिद्धिः सारूप्यं सङ्क्षेपो गुणकीर्त्तनं ।
लेशो मनोरथोऽनुक्तसिद्धिः प्रियवचस्तथा ॥

तत्र ।

(४३५) लक्षणानि गुणैः सालङ्कारैर्य्योगस्तु भूषणं ।

यथा ।

"आक्षिपन्त्यरविन्दानि मुग्धे तव मुखश्रियं ।
कोषदण्डसमग्राणां किमेषामस्ति दुष्करं" ॥

(४३६) वर्णनाक्षरसंघातश्चित्रार्थैरक्षरैर्मितैः।

यथा शाकुन्तले राजा। "कच्चित् सखीं विनाऽतिबाधते शरीरसन्तापः। प्रियम्वदा। सम्पदं लद्धोसहो उवसमं गमिस्सदि" ॥*

(४३७) सिद्धैरर्थैः समं यत्र प्रसिद्धोऽर्थः प्रकाशते।
श्लिष्टलक्षणचित्रार्था सा शोभेत्यभिधीयते ॥

यथा।

"सद्वंशसम्भवः शुद्धः कोटिदोऽपि गुणान्वितः।
कामं धनुरिव क्रूरो वर्ज्जनीयः सताम्प्रभुः" ॥

(४३८) यत्र तुल्यार्थयुक्तेन वाक्येनाभिप्रदर्शनात्।
साध्यतेऽभिमतश्चार्थस्तदुदाहरणं मतं ॥

यथा।

"अनुयान्त्या जगातीतं कान्तं साधु त्वया कृतं।
का दिनश्रीर्व्विनार्केण का निशा शशिना विना" ॥

(४३९) हेतुर्व्वाक्यं समासोक्तमिष्टकृद्धेतुदर्शनात्।

यथा वेण्यां भीमं प्रति चेटी। "एवं मए भणिदं। भाणुमदि तुम्हाणं अमुक्केसु केसहत्थेसु कधं अम्हाणं देवीए केशाः संयमीअन्तित्ति ॥ †

(४४०) संशयो ज्ञाततत्त्वस्य वाक्ये स्याद्यदनिश्चयः।

---

* साम्प्रतं लब्धौषध उपशमं गमिष्यतीति ॥ सं० ॥ टी० ॥

† एवमिति। एवं मया भणितं भानुमति युष्माकं अमुक्तेषु केशहस्तेषु कथमस्माकं देव्याः केशाः संयम्यन्ते इति ॥ सं० ॥ टी० ॥

यथा ययातिविजये।

"इयं स्वर्गाधिनाथस्य लक्ष्मीः किं यक्षकन्यका।
किञ्चास्य विषयस्यैव देवता किमु पार्व्वती"॥

(४४१) दृष्टान्तो यस्तु पक्षार्थसाधनाय निदर्शनं।

यथा वेण्यां भीमः। "आर्य्य उचितमेवैतत् तस्याः यतो दुर्य्योधनकलत्रं हि सेत्यादि"।

(४४२) तुल्यतर्को यदर्थेन तर्कः प्रकृतगामिना।

यथा तत्रैव।

"प्रायेणैव हि दृश्यन्ते कामं स्वप्नाः शुभाशुभाः।
शतसंख्या पुनरियं सानुजं स्पृशतीव मां"॥

(४४३) सच्चयोऽर्थानुरूपो यः पदानां स पदोच्चयः।

शाकुन्तले यथा।

"अधरः किसलयरागः कोमलविटपानुकारिणौ बाहू।
कुसुममिव लोभनीयं यौवनमङ्गेषु सन्नद्धं"॥

अत्र पदपदार्थयोः सौकुमार्य्यं सदृशमेव।

(४४४) यत्रार्थानां प्रसिद्धानां क्रियते परिकीर्त्तनं।
परपक्षव्युदासार्थं तन्निदर्शनमुच्यते॥

यथा।

"क्षत्रधर्म्मोचितैर्धर्म्मैरलं शत्रुवधे नृपाः।
किन्तु वालिनि रामेण मुक्तो वाणः पराङ्मुखे"॥

(४४५) अभिप्रायस्तु सादृश्यादभूतार्थस्य कल्पना।

यथा शाकुन्तले।

"इदं किलाव्याजमनोहरं वपु-
स्तपःक्षमं साधयितुं य इच्छति।
ध्रुवं स नीलोत्पलपत्रधारया
शमीलतां छेत्तुमृषिर्व्यवस्यति" ॥

(४४६) प्राप्तिः केनचिदंशेन किञ्चिद्यत्रानुमीयते।

यथा मम प्रभावत्यां। "अनेन खलु सर्व्वतश्चरता चञ्चरीकेणावश्यं विदिता भविष्यति प्रियतमा मे प्रभावती"।

(४४७) विचारो युक्तवाक्यैर्यदप्रत्यक्षार्थसाधनं।

यथा मम चन्द्रकलायां "राजा। नूनमियमन्तःपिहितप्रमदमदनविकारा वर्त्तते। यतः।

हसति परितोषरहितं निरीक्षमाणापि नेक्षते किञ्चित्।
सख्यामुदाहरन्त्यामसमञ्जसमुत्तरं दत्ते"।

(४४८) देशकालस्वरूपेण वर्णना दिष्टमुच्यते।

यथा वेण्यां सहदेवः।

"यद्वैद्युतमिव ज्योतिरार्य्ये क्रुद्धेऽद्य सम्भृतं।
तत्प्रावृडिव कृष्णेयं नूनं संवर्द्धयिष्यति" ॥

(४४९) उपदिष्टं मनोहारि वाक्यं शास्त्रानुसारतः।

यथा शाकुन्तले।

"शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजने
भर्त्तुर्विप्रकृतापि रोषणतया मा स्म प्रतीपं गम इत्यादि"॥

(४५०) गुणातिपातः कार्य्यं यद्विपरीतं गुणान् प्रति ।

यथा मम चन्द्रकलायां चन्द्रं प्रति । "अइ संहरिज्जइ तमो घेप्पइ सअलेहिं ते पाओ वससि सिरे पसुवइणो तहवि इत्थीअ जीअणं हरसि" * ॥

(४५१) यः सामान्यगुणोद्रेकः सगुणातिशयो मतः ।

यथा तत्रैव राजा चन्द्रकलाया मुखं निर्द्दिश्य ।

"असावन्तश्चञ्चद्विकचनवलीलाद्वयुगल-
स्तलस्फूर्ज्जत्कम्बुर्विलसदलिसङ्घात उपरि ।
विना दोषासङ्गं सततपरिपूर्णाखिलकलः
कुतः प्राप्तश्चन्द्रो विगलितकलङ्कः सुमुखि ते" ॥

(४५२) अर्थान् सिद्धान् बहूनुक्त्वा विशेषोक्तिर्व्विशेषणं ।

यथा ।

"कृष्णापहारी विमलो द्विजावासो जनप्रियः ।
हृदः पद्माकरः किन्तु बुधस्त्वं स जडाशयः" ॥

(४५३) पूर्व्वसिद्धार्थकथनं निरुक्तिरिति कीर्त्तितं ।

यथा वेण्यां । "निहताशेषकौरव्य इत्यादि" ।

(४५४) बहूनां कीर्त्तनं सिद्धिरभिप्रेतार्थसिद्धये ।

यथा ।

---

* अयि । यदि संह्रियते तमो गृह्यते सकलैस्ते पादः वससि शिरसि पशुपतेस्तथापि स्त्रिया जीवनं हरसि इति ॥ सं॰॥टी॰॥

"यदीयैः कूर्म्मराजस्य यस्य शेषस्य विक्रमः।
पृथिव्या रक्षणे राजन्नेकत्र त्वयि तत्स्थितं"॥

(४५५) इत्यादीनां भवेद्भ्रंशो वाच्यादन्यतरद्वचः।

वेण्यां कञ्चुकिनं प्रति दुर्य्योधनः।

"सहभृत्यगणं सबान्धवं सहमित्रं ससुतं सहानुजं।
स्वबलेन निहन्ति संयुगे न चिरात् पाण्डुसुतः सुयोधनं"॥

(४५६) विचारस्यान्यथाभावः सन्देहात्तु विपर्य्ययः।

यथा।

"मत्वा लोकमदातारं सन्तोषे यैः कृता मतिः।
त्वयि राजनि ते राजन्न तथा व्यवसायिनः"॥

(४५७) दाक्षिण्यं चेष्टया वाचा परचित्तानुवर्त्तनं।

वाचा यथा।

"प्रसाधय पुरीं लङ्कां राजा त्वं हि विभीषण।
आर्य्येणानुगृहीतस्य न विघ्नः सिद्धिमन्तरा"॥

एवं चेष्टयापि।

(४५८) वाक्यैः स्निग्धैरनुनयो भवेदर्थस्य साधनं।

यथा वेण्यां अश्वत्थामानं प्रति कृपः। "दिव्यास्त्रग्रामकोविदे भारद्वाजतुल्यपराक्रमे किं न सम्भाव्यते त्वयि"।

(४५९) माला स्याद्यदभीष्टार्थं नैकार्थप्रतिपादनं।

यथा शाकुन्तले "राजा।

किं शीतलैः क्लमविनोदिभिरार्द्रवातं
सञ्चारयामि नलिनीदलतालवृन्तैः।
अङ्के निवेश्य चरणावुत पद्मताम्रौ
संवाहयामि करभोरु यथा सुखं ते"॥

(४६०) अर्थापत्तिर्यदन्यार्थोऽर्थान्तरोक्तेः प्रतीयते।

यथा वेण्यां। द्रोणोऽश्वत्थामानं राज्येऽभिषेक्तुमिच्छतीति कथयन्तं कर्णं प्रति "राजा। साधु अङ्गराज साधु" कथमन्यथा।

"दत्त्वा भयं सोऽतिरथो वध्यमानं किरीटिना।
सिन्धुराजमुपेक्षेत नैवं चेत्कथमन्यथा"॥

(४६१) भूषणोद्वाषणायां तु भर्त्सना गर्हणं तु तत्।

यथा तत्रैव कर्णं प्रति "अश्वत्थामा। निर्वीर्यं गुरुशापभाषितवशात् किं मे तवेवायुधमित्यादि"।

(४६२) अभ्यर्थनापरैर्वाक्यैः पृच्छाऽर्थान्वेषणं मतं।

यथा तत्रैव "सुन्दरकः। अज्जा अज्ज अवि णाम सारधिदुदिओ दिट्ठो तुम्हेहिं महाराओ दुय्योधण ण वत्ति" *॥

(४६३) प्रसिद्धिर्लोकसिद्धार्थैरुत्कृष्टैरर्थसाधनं।

यथा विक्रमोर्व्वश्यां "राजा।

सूर्य्याचन्द्रमसौ यस्य मातामहपितामहौ।
स्वयं वृतः पतिर्द्वाभ्यामुर्व्वश्या च भुवा च यः"॥

---

* अज्जेति। आर्य्या अद्य अपि नाम सारथिद्वितीयो दृष्टोयुष्माभिर्महाराजो दुर्य्योधनो न वा इति॥ सं०॥ टी०॥

(४६४) सारूप्यमभिभूतस्य सारूप्यात् क्षोभवर्णनं।

यथा वेण्यां। दुर्य्योधनभ्रान्त्या भीमं प्रति "युधिष्ठिरः। "दुरात्मन् दुर्य्योधनहतकेत्यादि"॥

(४६५) सङ्क्षेपो यत्तु सङ्क्षेपादात्मान्यार्थे प्रयुज्यते।

यथा मम चन्द्रकलायां। "राजा। प्रिये।

अङ्गानि खेदयसि किं शिरीषकुसुमपरिपेलवानि मुधा।"

आत्मानं निर्दिश्य।

"अयमीप्सितकुसुमानां सम्पादयिता तवास्ति दासजनः"॥

(४६६) गुणानां कीर्त्तनं यत्तु तदेव गुणकीर्त्तनं।

यथा तत्रैव। "नेत्रे खञ्जन इत्यादि"।

(४६७) स लेशो भण्यते वाक्यं यत्साहश्यपुरःसरं।

यथा वेण्यां "राजा।

हते जरति गाङ्गेये पुरस्कृत्य शिखण्डिनं।
या श्लाघा पाण्डुपुत्राणां सैवास्माकं भविष्यति"॥

(४६८) मनोरथस्त्वभिप्रायस्योक्तिर्भङ्ग्यन्तरेण यत्।

यथा।

"रतिकेलिकलः किञ्चिदेष मन्मथमन्थरः।
पश्य सुभ्रु समासक्तां कादम्बश्चुम्बति प्रियां"॥

(४६९) विशेषार्थोऽनिप्रस्तावेऽनुक्तसिद्धिरुदीर्य्यते।

यथा पुष्पदूषवाटिकायां।

"दुष्मन्ते तस्मि यावेतौ चाद्यज्ञमथं प्रति।
प्राप्ते कस्याश्चमामागावुभौ तिष्ठपुनर्व्वसू" ॥

(४७०) स्यात्प्रमाणयितुं पूर्व्वं प्रियोक्तिर्हर्षभाषणं।

यथा शाकुन्तले।

"उदेति पूर्व्वं कुसुमं ततः फलं
घनोदयः प्राक् तदनन्तरं पयः।
निमित्तनैमित्तिकयोरयं विधि-
स्तव प्रसादस्य पुरस्तु सम्पदः" ॥

अथ नाट्यालङ्काराः।

(४७१) आशीराक्रन्दकपटाक्षमागर्व्वोद्यमाश्रयाः।
उत्प्रासनं स्पृहाक्षोभपश्चात्तापोपपत्तयः॥
आशंसाध्यवसायौ च विसर्पोल्लेखसञ्ज्ञितौ।
उत्तेजनं परीवादो नीतिरर्थविशेषणं॥
प्रोत्साहनञ्च साहाय्यमभिमानोऽनुवर्त्तनं।
उत्कीर्त्तनं तथा याञ्चा परीहारो निवेदनं॥
प्रवर्त्तनाख्यानयुक्तिप्रहर्षाश्चोपदेशनं।
इति नाट्यालङ्कृतयो नाट्यभूषणहेतवः॥
आशीरिष्टजनाशंसा

यथा शाकुन्तले।

"ययातेरिव शर्म्मिष्ठा पत्युर्बहुमता भव।
पुत्रं त्वमपि सम्राजं सेव पूरुमवाप्नुहि" ॥

(४७२) आक्रन्दः प्रलपितं शुचा।

यथा वेण्यां। "कञ्चुकी। हा देवि कुन्ति राजभवनपताके इत्यादि"।

(४७३) कपटं मायया यत्र रूपमन्यद्विभाव्यते।

यथा कुलपत्यङ्के।

"मृगरूपं परित्यज्य विधाय कपटं वपुः।
नीयते रक्षसा तेन लक्ष्मणो युधि संशयं"॥

(४७४) अक्षमा सा परिभवः स्वल्पोऽपि नाभिसह्यते।

यथा शाकुन्तले "राजा। भोः सत्यवादिन् अभ्युपगतं तावदस्माभिः। किं पुनरिमामभिसन्धाय लभ्यते। शार्ङ्गरवः। विनिपात इत्यादि"।

(४७५) गर्व्वोऽवलेपजं वाक्यं

यथा तत्रैव "राजा। ममापि नाम सत्त्वैरभिभूयन्ते गृहाः"।

(४७६) कार्य्यस्यारम्भ उद्यमः।

यथा कुम्भे "रावणः। पश्यामि शोकविवशोऽन्तकमेव तावत्॥"

(४७७) ग्रहणं गुणवत्कार्य्यहेतोराश्रय उच्यते।

यथा विभीषणनिर्भर्त्सनाङ्के। "विभीषणः। राममेवाश्रयिष्यामीति"।

(४७८) उत्प्रासनन्तूपहासो योऽसाधौ साधुमानिनि।

यथा शाकुन्तले। "शार्ङ्गरवः। राजन् अथ पुनः पूर्व्ववृ-

न्तासमन्वयज्ञादिभ्यतो भवान् तत्कथमधर्म्मभीरोर्दारपरित्याग इत्यादि"।

(४७९) आकाङ्क्षा रमणीयत्वाद्वस्तुनो या स्पृहा तु सा।

यथा तत्रैव "राजा।

वाहचा स्फुरितेनायमपरिक्षतकोमलः।
पिपासतो ममानुज्ञां ददातीव प्रियाधरः" ॥

(४८०) अधिक्षेपवचःकारी क्षोभः प्रोक्तः स एव तु।

यथा।

"त्वया तपस्विचाण्डाल प्रच्छन्नवधवर्त्तिना।
न केवलं हतो वाली स्वात्मा च परलोकतः" ॥

(४८१) मोहावधीरितार्थस्य पश्चात्तापः स एव तु।

यथाऽनुतापाङ्के। "रामः। किं देव्या न विचुम्बितोऽस्मि बहुशो मिथ्याभिशप्तस्तदेति"।

(४८२) उपपत्तिर्मता हेतोरुपन्यासोऽर्थसिद्धये।

यथा वध्यशिलायां।

"म्रियते म्रियमाणे या त्वयि जीवति जीवति।
तां यदीच्छसि जीवन्तीं रक्षात्मानं ममाऽसुभिः" ॥

(४८३) आशंसनं स्यादाशंसा

यथा श्मशाने "माधवः। तत्पश्येयमनङ्गमङ्गलगृहं भूयोऽपि तस्या मुखमिति"।

(४८४) प्रतिज्ञाध्यवसायकः।

यथा मम प्रभावत्यां वज्रनाभः ।

"अस्य वक्षः क्षणेनैव निर्मथ्य गदयानया ।
लीलयोन्मूलयाम्येव भुवनद्वयमद्य वः" ॥

(४८५) विसर्पो यत्समारब्धं कर्म्मानिष्टफलप्रदं ।

यथा वेण्यां । "एकस्य तावत्पाकोऽयमित्यादि" ।

(४८६) कार्य्यग्रहणमुल्लेखः

यथा शाकुन्तले । राजानं प्रति "तापसौ । समिदाहरणाय प्रस्थितावावां । इह चास्मद्गुरोः कण्वस्य साधिदैवत इव शकुन्तलयानुमालिनीतीरमाश्रमो दृश्यते न चेदन्यः कार्य्यातिपातः प्रविश्य गृह्यतामतिथिसत्कार इति" ॥

(४८७) उत्तेजनमितीष्यते ।
स्वकार्य्यसिद्धयेऽन्यस्य प्रेरणाय कठोरवाक् ।

यथा ।

"इन्द्रजिच्चण्डवीर्य्योऽसि नाम्नैव बलवानसि ।
धिक् धिक् प्रच्छन्नरूपेण युध्यसेऽस्मद्भयाकुलः" ॥

(४८८) भर्त्सना तु परीवादः ।

यथा सुन्दराङ्के "दुर्य्योधनः । धिक् धिक् सूत किं कृतवानसि वत्सस्य मे प्रकृतिदुर्ललितस्य पापः पापं विधास्यति इत्यादि" ॥

(४८९) नीतिः शास्त्रेण वर्त्तनं ।

यथा शाकुन्तले दुष्मन्तः । "विनीतवेशप्रवेश्यानि तपोवनानीति" ॥

(४९०) उक्तस्यार्थस्य यत्तु स्यादुत्कीर्त्तनमनेकधा।
उपालम्भस्वरूपेण तत्स्यादर्थविशेषणं॥

यथा शाकुन्तले राजानं प्रति "शार्ङ्गरवः। आः कथमिदं नाम किमिदमुपन्यस्तमिति। ननु भवानेव नितरां लोकवृत्तान्ते निष्णातः।

सतीमपि ज्ञातिकुलैकसंश्रयां
जनोऽन्यथा भर्तृमतीं विशङ्कते।
अतः समीपे परिणेतुरिष्यते
प्रियाप्रिया वा प्रमदा स्वबन्धुभिः"॥

(४९१) प्रोत्साहनं स्यादुत्साहगिरा कस्यापि योजनं।

यथा बालरामायणे।

"कालरात्रिकरालेयं स्त्रीति किं विचिकित्ससि।
तज्जगत्त्रितयं पातुं तात ताडय ताडकां"॥

(४९२) साहाय्यं सङ्कटे यत्स्यात् सानुकूल्यं परस्य च।

यथा वेण्यां कृपं प्रति "अश्वत्थामा। त्वमपि तावद्राज्ञः पार्श्ववर्त्ती भव। कृपः। वाञ्छाम्यहमद्य प्रतिकर्त्तुमित्यादि"।

(४९३) अभिमानः स एव स्यात्

यथा तत्रैव। "दुर्य्योधनः। मातः किमप्यसदृशं कृपणं वचस्त्वमित्यादि"।

(४९४) प्रश्रयादनुवर्त्तनं।

अनुवृत्तिः

यथा शाकुन्तले राजा शकुन्तलां प्रति। "अपि तपो वर्द्धते। अनसूया। दाणिं अदिधिविसेसलाहेण"* ॥

(४९५) भूतकार्य्याख्यानमुत्कीर्त्तनं मतं।

यथा बालरामायणे।

"अत्रासीत् फणिपाशबन्धनविधिः शक्त्या भवद्देवरे
गाढं वक्षसि ताडिते हनुमता द्रोणाद्रिरत्राहृत इत्यादि"॥

(४९६) याच्ञा तु क्वापि याच्ञायाः स्वयं दूतमुखेन वा।

यथा।

"अद्यापि देहि वैदेहीं दयालुस्त्वयि राघवः।
शिरोभिः कन्दुकक्रीडां किं कारयसि वानरान्" ॥

(४९७) परिहार इति प्रोक्तः कृतानुचितमार्ज्जनं।

यथा।

"प्राणप्रयाणदुःखार्त्त उक्तवानस्म्यनक्षरं।
तत्क्षमस्व विभो किञ्च सुग्रीवस्ते समर्पितः" ॥

(४९८) अवधीरितकर्त्तव्यकथनन्तु निवेदनं।

यथा राघवाभ्युदये "लक्ष्मणः। आर्य्य समुद्राभ्यर्थनया गन्तुमुद्यतोऽसि किमेतत्"।

(४९९) प्रवर्त्तनन्तु कार्य्यस्य यत्स्यात् साधुप्रवर्त्तनं।

यथा वेण्यां "राजा। कञ्चुकिन् देवस्य देवकीनन्दनस्य

* दाणिमिति। इदानीमतिथिविशेषलाभेनेत्यादि॥ सं॰ ॥ टी॰ ॥

वकुमागादस्य भीमसेनस्य विजयमनुमत्य प्रवर्त्तनां तथोप-चिताः समारम्भाः।

(५००) आख्यानं पूर्व्ववृत्तोक्तिः

यथा तत्रैव। "देशः सोऽयमरातिशोणितजलैर्यस्मिन् ह्रदाः पूरिता इत्यादि"।

(५०१) युक्तिरर्थावधारणं।

यथा तत्रैव।

"यदि समरमपास्य नास्ति मृत्यो-
र्भयमिति युक्तमितोऽन्यतः प्रयातुं।
अथ मरणमवश्यमेव जन्तोः
किमिति मुधा मलिनं यशः कुरुध्वं"।

(५०२) प्रहर्षः प्रमदाधिक्यं

यथा शाकुन्तले "राजा। तत्किमिदानीमात्मानं पूर्णमनो-रथं नाभिनन्दामि"।

(५०३) शिक्षा स्यादुपदेशनं।

यथा तत्रैव। "सहि ण जुत्तं अस्समवासिणो जणस्स अकि-दसक्कारं अदिधिविसेसं उज्झिअ सच्छन्ददो गमणं" *।
एवामु अङ्गं नाट्यालङ्काराणां सामान्यत एकरूपत्वेऽपि भेदेन व्यपदेशो गड्डालिकाप्रवाहेण। एषु च केषाञ्चिद् गुणाल-

* सखीति। सखि न युक्तमाश्रमवासिनो जनस्याकृतसत्कारम-तिथिविशेषमुज्झित्वा स्वच्छन्दतो गमनं इति॥ सं०॥ टी०॥

ङ्गारभावसन्ध्यङ्गविशेषाणामभावेऽपि नाटके प्रयत्नतः कर्त्तव्यत्वा-
त्तद्विशेषोक्तिः। एतानि च।

"पञ्चसन्धि चतुर्वृत्ति चतुःषष्ट्यङ्गसंयुतं।
षट्‌त्रिंशल्लक्षणोपेतमलङ्कारोपशोभितं॥
महारसं महाभोगमुदात्तरचनान्वितं।
महापुरुषसञ्चारं साध्वाचारं जनप्रियं॥
सुश्लिष्टसन्धियोगञ्च सुप्रयोगं सुखाश्रयं।
मृदुशब्दाभिधानञ्च कविः कुर्य्यात्तु नाटकं"॥

इति मुनिनोक्तत्वात् नाटकेऽवश्यं कर्त्तव्यान्येव। वीथ्यङ्गानि
वक्ष्यन्ते। लास्याङ्गान्याह।

(५०४) गेयपदं स्थितपाठ्यमासीनं पुष्पगण्डिका।
प्रच्छेदकस्त्रिगूढञ्च सैन्धवाख्यं द्विगूढकं॥
उत्तमोत्तमकञ्चान्यदुक्तप्रत्युक्तमेव च।
लास्ये दशविधं ह्येतदङ्गमुक्तं मनीषिभिः॥

तत्र च।

(५०५) तन्त्रीभाण्डं पुरस्कृत्योपविष्टस्यासने पुरः।
शुष्कं गानं गेयपदं

यथा गौरीगृहे वीणां वादयन्ती मलयवती।

"उत्फुल्लकमलकेसरपरागगौरद्युते मम हि गौरि।
अभिवाञ्छितं प्रसिध्यतु भगवति युष्मत्प्रसादेन"॥

(५०६) स्थितपाठ्यं तदुच्यते।
मदनोत्तापिता यत्र पठति प्राकृतं स्थिता॥

अभिनवगुप्तपादास्त्वाहुः । "उपलक्षणञ्चैतत् । क्रोधोद्भ्रान्तस्यापि प्राकृतपठनं स्थितपाठ्यमिति" ।

(५०७) निखिलातोद्यरहितं शोकचिन्तान्विताबला ।
सुप्रसारितगात्रं यदासीदासीनमेव तु ॥
आतोद्यमिश्रितं गेयं छन्दांसि विविधानि च ।
स्त्रीपुंसयोर्व्विपर्य्यासचेष्टितं पुष्पगण्डिका ॥
अन्यासक्तं पतिं मत्वा प्रेमविच्छेदमन्युना ।
वीणापुरःसरं गानं स्त्रियाः प्रच्छेदको मतः ॥
स्त्रीवेशधारिणां पुंसां नाट्यं श्लक्ष्णं त्रिगूढकं ।

यथा मालत्यां । "मकरन्दः । एषोऽस्मि मालती संवृत्तः ।

(५०८) कश्चन भ्रष्टसङ्केतः सुव्यक्तकरणान्वितः ।
प्राकृतं वचनं वक्ति यत्र तत्सैन्धवं विदुः ॥

करणं वीणादिक्रिया ।

(५०९) चतुरस्रपदं गीतं मुखप्रतिमुखान्वितं ।
द्विगूढं रसभावाढ्यमुत्तमोत्तमकं पुनः ॥
कोपप्रसादजमधिक्षेपयुक्तं रसोत्तरं ।
हावहेलान्वितं चित्रश्लोकबन्धमनोहरं ॥
उक्तिप्रत्युक्तिसंयुक्तं सोपालम्भमलीकवत् ।
विलासान्वितगीतार्थमुक्तप्रत्युक्तमुच्यते ॥

स्पष्टान्युदाहरणानि ।

(५१०) एतदेव यदा सर्व्वैः पताकास्थानकैर्युतं ।
अङ्कैश्च दशभिर्धीरा महानाटकमूचिरे ॥

एतदेव नाटकं यथा बालरामायणं । अथ प्रकरणं ।

(५११) भवेत्प्रकरणे वृत्तं लौकिकं कविकल्पितं ।
शृङ्गारोऽङ्गी नायकस्तु विप्रोऽमात्योऽथवा वणिक् ॥
सापायधर्म्मकामार्थपरो धीरप्रशान्तकः ।

विप्रनायकं यथा मृच्छकटिकं । अमात्यनायकं मालती-माधवं । वणिङ्नायकं पुष्पभूषितं ।

(५१२) नायिका कुलजा कापि वेश्या कापि द्वयं क्वचित् ।
तेन भेदास्त्रयस्तस्य तत्र भेदस्तृतीयकः ॥
कितवद्यूतकारादिविटचेटकसङ्कुलः ।

कुलस्त्रीपुष्पभूषिते । वेश्या तु रङ्गदत्ते । द्वे अपि मृच्छक-टिकायां । अस्य नाटकप्रकृतित्वात् । शेषं नाटकवत् । अथ भाणः ।

(५१३) भाणः स्याद्धूर्त्तचरितो नानावस्थान्तरात्मकः ।
एकाङ्क एक एवात्र निपुणः पण्डितो विटः ॥
रङ्गे प्रकाशयेत् स्वेनानुभूतमितरेण वा ।
सम्बोधनोक्तिप्रत्युक्ती कुर्य्यादाकाशभाषितैः ॥
सूचयेद्वीरशृङ्गारौ शौर्य्यसौभाग्यवर्णनैः ।
तत्रेतिवृत्तमुत्पाद्यं वृत्तिः प्रायेण भारती ॥
मुखनिर्व्वहणे सन्धी लास्याङ्गानि दशापि च ।

तत्र आकाशभाषितरूपं परवचनमपि स्वयमेवानुवदन्नु-त्तरप्रत्युत्तरे कुर्य्यात्। शृङ्गारवीररसौ च सौभाग्यशौर्य्य-वर्णनया सूचयेत्। प्रायो भारती कैशिक्यपि वृत्तिर्भवति। लास्याङ्गानि गेयपदादीनि। उदाहरणं लीलामधुकरः॥

अथ व्यायोगः।

(५१४) ख्यातेतिवृत्तो व्यायोगः स्वल्पस्त्रीजनसंयुतः।
हीनो गर्भविमर्षाभ्यां नरैर्ब्बहुभिराश्रितः॥
एकाङ्कश्च भवेदस्त्रीनिमित्तसमरोदयः।
कैशिकीवृत्तिरहितः प्रख्यातस्तत्र नायकः॥
राजर्षिरथ दिव्यो वा भवेद्धीरोद्धतश्च सः।
हास्यशृङ्गारशान्तेभ्य इतरेऽत्राङ्गिनो रसाः॥

यथा सौगन्धिकाहरणं। अथ समवकारः।

(५१५) वृत्तं समवकारे तु ख्यातं देवासुराश्रयं।
सन्धयो निर्व्विमर्षास्तु त्रयोऽङ्कास्तत्र चादिमे॥
सन्धी द्वावन्त्ययोस्तद्वदेक एको भवेत्पुनः।
नायका द्वादशोदात्ताः प्रख्याता देवदानवाः॥
फलं पृथक् पृथक् तेषां वीरमुख्योऽखिलो रसः।
वृत्तयो मन्दकैशिक्यो नात्र विन्दुप्रवेशकौ॥
वीथ्यङ्गानि च तत्र स्युर्यथालाभं त्रयोदश।
गायत्र्युष्णिङ्मुखान्यत्र छन्दांसि विविधानि च॥
त्रिशृङ्गारस्त्रिकपटः कार्य्यश्चायं त्रिविद्रवः।

यस्तु द्वादशनाडीभिर्निष्पाद्यं प्रथमाङ्कगं ॥
द्वितीयेऽङ्के च निष्पभिर्द्वाभ्यामङ्के तृतीयके।

नाडिका घटिकाद्वयमुच्यते। बिन्दुप्रवेशकौ च नाटको-क्तावपि नेह विधातव्यौ॥ तत्र।

(५१६) धर्म्मार्थकामैस्त्रिविधः शृङ्गारः कपटः पुनः।
स्वाभाविकः कृत्रिमश्च दैवजो विद्रवः पुनः॥
अचेतनैश्चेतनैश्च चेतनाचेतनैः कृतः।

तत्र शास्त्राविरोधेन कृतो धर्मशृङ्गारः। अर्थलाभार्थ-कल्पितः अर्थशृङ्गारः। प्रहसनशृङ्गारः कामशृङ्गारः। तत्र कामशृङ्गारः प्रथमाङ्क एव। अन्ययोस्तु न नियम इत्याहुः। चेतनाचेतना गजादयः। समवकीर्य्यन्ते बहवोऽर्था अस्मिन्निति समवकारः। यथा समुद्रमथनं॥ अथ डिमः॥

(५१७) मायेन्द्रजालसङ्ग्रामक्रोधोद्भ्रान्तादिचेष्टितैः।
उपरागैश्च भूयिष्ठो डिमः ख्यातोऽतिवृत्तकः॥
अङ्गी रौद्ररसस्तत्र सर्व्वेऽङ्गानि रसाः पुनः।
चत्वारोऽङ्का मता नेह विष्कम्भकप्रवेशकौ॥
नायका देवगन्धर्व्वयक्षरक्षोमहोरगाः।
भूतप्रेतपिशाचाद्याः षोडशात्यन्तमुद्धताः॥
वृत्तयः कैशिकीहीना निर्व्विमर्षाश्च सन्धयः।
दीप्ताः स्युः षड्रसाः शान्तहास्यशृङ्गारवर्ज्जिताः॥

अस्योदाहरणञ्च। "त्रिपुरदाह" इति महर्षिः। अथे-हामृगः।

(५१८) ईहामृगो मिश्रवृत्तश्चतुरङ्कः प्रकीर्त्तितः।
मुखप्रतिमुखे सन्धी तत्र निर्व्वहणं तथा॥
नरदिव्यावनियमौ नायकप्रतिनायकौ।
ख्यातौ धीरोद्धतावन्त्यो गूढभावादयुक्तकृत्॥
दिव्यस्त्रियमनिच्छन्तीमपहारादिनेच्छतः।
शृङ्गाराभासमप्यस्य किञ्चित् किञ्चित्प्रदर्शयेत्॥
पताकानायका दिव्या मर्त्त्या वापि दशोद्धताः।
युद्धमानीय संरम्भं परं व्याजान्निवर्त्तते॥
महात्मानो वधप्राप्ता अपि वध्याः स्युरत्र नो।
एकाङ्को देव एवात्र नेतेत्याहुः परे पुनः॥
दिव्यस्त्रीहेतुकं युद्धं नायकाः षडितीतरे।

मिश्रं ख्याताख्यातं। अन्त्यः प्रतिनायकः। पताकानायकास्तु नायकप्रतिनायकयोर्मिलिता दश। नायको मृगवदलभ्यां नायिकामत्र ईहते वाञ्छतीतीहामृगः। यथा कुसुमशेखरविजयादि। अथाङ्कः।

(५१९) उत्सृष्टिकाङ्क एकाङ्को नेतारः प्राकृता नराः।
रसोऽत्र करुणः स्थायी बहुस्त्रीपरिदेवितं॥
प्रख्यातमितिवृत्तञ्च कविर्बुद्ध्या प्रपञ्चयेत्।

भाणवत् सन्धिवृत्त्यङ्गान्यस्मिन् जयपराजयौ ॥
युद्धञ्च वाचा कर्त्तव्यं निर्व्वेदवचनं बहु ।

इयमत्र केचित् "नाटकाद्यन्तःपातिरूपपरिच्छेदार्थं उत्सृष्टिकाङ्कनामानं" आहुः। अन्ये तु "उत्क्रान्ता विलोमरूपा सृष्टिर्यत्रेति" उत्सृष्टिकाङ्कः। यथा शर्म्मिष्ठाययातिः। अथ वीथी।

(५२०) वीथ्यामेको भवेदङ्कः कश्चिदेकोऽत्र कल्प्यते ।
आकाशभाषितैरुक्तैश्चित्रां प्रत्युक्तिमाश्रितः ॥
सूचयेद्भूरिशृङ्गारं किञ्चिदन्यान् रसानपि ।
मुखनिर्व्वहणे सन्धी अर्थप्रकृतयोऽखिलाः ॥

कश्चिदित्युत्तमो मध्यमोऽधमो वा। शृङ्गारबहुलत्वाच्चास्याः कैशिकीवृत्तिबहुलत्वं।

(५२१) अस्यास्त्रयोदशाङ्गानि निर्द्दिशन्ति मनीषिणः ।
उद्घात्यकावलगिते प्रपञ्चस्त्रिगतं छलं ॥
वाक्केल्यधिवले गण्डमवस्यन्दितनालिके ।
असत्प्रलापव्याहारमृदवानि च तानि तु ।

तत्रोद्घात्यकावलगिते प्रस्तावनाप्रस्तावे सोदाहरणं लक्षिते।

(५२२) मिथो वाक्यसमुद्भूतः प्रपञ्चो हास्यकृन्मतः ।

यथा विक्रमोर्व्वश्यां। वडभीस्थविदूषकचेट्योरन्योन्यवचनं।

(५२३) त्रिगतं स्यादनेकार्थयोजनं श्रुतिसाम्यतः ।

यथा तत्रैव राजा।

"सर्व्वक्षितिभृतां नाथ दृष्टा सर्व्वाङ्गसुन्दरी।
राजा रम्ये वनान्तेऽस्मिन् मया विरहिता त्वया।

नेपथ्ये तथैव प्रतिशब्दः। राजा कथं दृष्टेत्याह"। अत्र प्रश्नवाक्यमेवोत्तरत्वेन योजितं। "नटादित्रितयविषयमेवेदमिति" कश्चित्।

(५२४) प्रियाभैरप्रियैर्व्वाक्यैर्व्विलोभ्य छलनाच्छलं।

यथा वेण्यां "भीमार्ज्जुनौ।

कर्त्ता द्यूतच्छलानां जतुमयशरणोद्दीपनः सोऽभिमानी
राजा दुःशासनादेर्गुरुरनुजशतस्याङ्गराजस्य मित्रं।
कृष्णा केशोत्तरीयव्यपनयनपटुः पाण्डवा यस्य दासाः
क्वास्ते दुर्य्योधनोऽसौ कथयतु न रुषा द्रष्टुमभ्यागतौ स्वः" ॥

(५२५) अन्ये त्वाहुश्छलं किञ्चित् कार्य्यमुद्दिश्य कस्यचित्।
उदीर्य्यते यद्वचनं वञ्चना हास्यरोषकृत् ॥
वाक्केलिर्हास्यसम्बन्धो द्वित्रिप्रत्युक्तितो भवेत्।

द्वित्रीत्युपलक्षणं यथा।

"भिक्षो मांसनिषेवणं प्रकुरुषे किन्तेन मद्यं विना
मद्यञ्चापि तव प्रियं प्रियमहो वाराङ्गनाभिः सह।
वेश्याप्यर्थरुचिः कुतस्तव धनं द्यूतेन चौर्य्येण वा
चौर्य्यद्यूतपरिग्रहोऽपि भवतो नष्टस्य कान्या गतिः" ॥

"केचित् प्रक्रान्तवाक्यस्य साकाङ्क्षस्यैव निवृत्तिर्व्वाक्केलिरित्याहुः"। अन्ये च "अनेकस्य प्रश्नस्यैकमुत्तरं"।

(५२६) अन्योन्यवाक्याधिक्योक्तिः स्पर्द्धयाधिबलं मतं ।

यथा मम प्रभावत्यां "वज्रनाभः ।

अस्य वक्षः क्षणेनैव निर्म्मथ्य गदयानया ।
लीलयोन्मूलयिष्यामि भुवनद्वयमद्य वः ॥

प्रद्युम्नः । अरेरे असुरापसद अलममुना बहुप्रलापेन मम खलु ।

अद्य प्रचण्डभुजदण्डसमर्पितोरु-
कोदण्डनिर्गलितकाण्डसमूहपातैः ।
आस्तां समस्तदितिजक्षतजोक्षितेयं
क्षोणिः क्षणेन पिशिताशनलोभनीया" ।

(५२७) गण्डं प्रस्तुतसम्बन्धि भिन्नार्थं सत्वरं वचः ।

यथा वेण्यां "राजा ।

अध्यासितुं तव चिराज्जघनस्थलस्य
पर्य्याप्तमेव करभोरु ममोरुयुग्मं ॥

अनन्तरं प्रविश्य कञ्चुकी । देव भग्नं भग्नमित्यादि ।" अत्र रथकेतनभङ्गार्थं वचनमूरुभङ्गार्थे सम्बन्धे सम्बद्धं ।

(५२८) व्याख्यानं स्वरसोक्तस्यान्यथावस्यन्दितं भवेत् ।

यथा छलितरामे "सीता । आद कालं क्खु अओज्भाए गन्तव्वं तहिं सो राआ विणएण पणयिदव्वो * । लवः । अथ

---

* आदेति । पुत्र काल्य खलु अयोध्यायां गन्तव्यं तहिं स राजा विनयेन प्रणयितव्यः ॥ इति सं॰ टी॰ ॥

किमावाभ्यां राजोपजीविभ्यां भवितव्यं। सीता। आदू सो तुम्हाणं पिदा *। लवः। किमावयोर्रघुपतिः पिता। सीता। मा अस्सूं मा अवधा संकधं णं क्खु तुम्हाणं सअलाए ज्जेव पुहवी एत्ति" † ॥

(५२९) प्रहेलिकैव हास्येन युक्ता भवति नालिका।

संवरणकार्य्युत्तरं प्रहेलिका। यथा रत्नावल्यां। "सुसङ्गता। सहि जस्स कदे तुमं आअदा सो इध ज्जेव चिट्ठदि। सागरिका। कस्स कदे अहं आअदा। सुसं। णं चित्तफलअस्स" ‡। अत्र त्वं राज्ञः कृते आगतेत्यर्थः संवृतः।

(५३०) असत्प्रलापो यद्वाक्यमसम्बद्धं तथोत्तरं।
अगृह्णतोऽपि मूर्खस्य पुरो यच्च हितं वचः।

तत्राद्यं यथा मम प्रभावत्यां। "प्रद्युम्नः। सहकारवल्लीमवलोक्य सानन्दं। अहो कथमिहैव।

अलिकुलमञ्जुलकेशी परिमलबहुला रसावहा तन्वी।
किसलयपेशलपाणिः कोकिलकलभाषिणी प्रियतमा मे"॥

---

* पुत्र स युष्माकं पितेति ॥ सं० ॥ टी० ॥

† मा अन्यथा प्रशङ्कयो न खलु युवयोः सकलाया एव पृथिव्या इति ॥ सं० ॥ टी० ॥

‡ सखीति। सखि यस्य कृते त्वमागता स इत एव तिष्ठतीति ॥ सं०॥ टी० ॥ कस्यार्थमहमागतेति ॥ सं० ॥ टी० ॥ ननु चित्रफलकस्येति ॥ सं० ॥ टी० ॥

एवमसम्बद्धोत्तरेऽपि। तृतीयं यथा वेण्यां दुर्य्योधनं प्रति गान्धारीवाक्यं।

(५३१) व्याहारो यत्परस्यार्थे हास्यलोभकरं वचः।

यथा मालविकाग्निमित्रे। लास्यप्रयोगावसाने मालविका निर्गन्तुमिच्छति। "विदूषकः। मा दाव उपदेससुद्धा गमिस्सखि * इत्युपक्रमेण। दासः। विदूषकं प्रति आर्य्य उच्यतां यस्त्वया क्रमभेदो लक्षितः। विदूषकः। पढमं बम्हणपूआ भोदि सा इमाए लङ्घिदा †। मालविका "स्मयत" इत्यादिना नायकस्य विस्रब्धनायिकादर्शनप्रयुक्तेन हासलोभकारिणा वचसा व्याहारः।

(५३२) दोषा गुणा गुणा दोषा यत्र स्युर्म्मृदवं हि तत्।

क्रमेण यथा।

"प्रियजीवितता क्रौर्य्यं निःस्नेहत्वं कृतघ्नता।
भूयस्त्वद्दर्शनादेव ममैते गुणतां गताः॥
तस्यास्तद्रूपसौन्दर्य्यं भूषितं यौवनश्रिया।
सुखैकतायनं जातं दुःखायैव ममाधुना"॥

इति वाङ्गानि नाटकादिषु सम्भवत्यपि वीथ्यामवश्यं विधेयानि। विस्पष्टतया नाटकादिषु विनिविष्टान्यपीहोदाहृतानि वीथी च। नानारसानाञ्चात्र मालारूपतया स्थितत्वादीथीयं। यथा मालविका। अथ प्रहसनं॥

---

* मा तावदुपदेशशुद्धा गमिष्यसीति॥ सं०॥ टी०॥
† प्रथमं ब्राह्मणपूजा भवति साऽनया लङ्घितेति। सं०॥ टी०॥

(५३३) भाणवत्सन्धिसन्ध्यङ्गलास्याङ्गाङ्कैर्व्विनिर्म्मितं ।
भवेत्प्रहसनं वृत्तं निन्द्यानां कविकल्पितं ॥

अत्र नारभटी नापि विष्कम्भकप्रवेशकौ ।

(५३४) अङ्गी हास्यरसस्तत्र वीथ्यङ्गानां स्थितिर्न वा ।

तत्र ।

(५३५) तपस्विभगवद्विप्रप्रभृतिष्वत्र नायकः ।
एको यत्र भवेद्धृष्टो हास्यं तच्छुद्धमुच्यते ॥

यथा कन्दर्पकेलिः ।

(५३६) आश्रित्य कञ्चन जनं सङ्कीर्णमिति तद्विदुः ।

यथा धूर्त्तचरितं ।

(५३७) वृत्तं बहूनां धृष्टानां सङ्कीर्णं केचिदूचिरे ।
तत्पुनर्भवति द्व्यङ्कमथवैकाङ्कनिर्म्मितं ॥

यथा लटकमेलकादि । मुनिस्त्वाह ।
"वेश्याचेटनपुंसकविटधूर्त्ता बन्धकीच यत्र स्युः ।
अविकृतवेशपरिच्छदचेष्टितकरणन्तु सङ्कीर्णमिति" ।

(५३८) विकृतन्तु विदुर्यत्र षण्ढकञ्चुकितापसाः ।
भुजङ्गचारणभटप्रभृतेर्व्वेशवाग्युताः ॥

इदन्तु सङ्कीर्णेनैव गतार्थमिति मुनिना पृथङ्नोक्तं । अथोपरूपकाणि । तत्र ।

(५३९) नाटिका क्लृप्तवृत्ता स्यात् स्त्रीप्राया चतुरङ्किका ।
प्रख्यातो धीरललितस्तत्र स्यान्नायको नृपः ॥

स्यादन्तःपुरसम्बन्धा सङ्गीतव्यापृताऽथवा ।
नवानुरागा कन्यात्र नायिका नृपवंशजा ॥
सम्प्रवर्त्तेत नेताऽस्यां देव्यास्त्रासेन शङ्कितः ।
देवी पुनर्भवेज्ज्येष्ठा प्रगल्भा नृपवंशजा ॥
पदे पदे मानवती तद्वशः सङ्गमो द्वयोः ।
वृत्तिः स्यात् कैशिकी स्वल्पविमर्षाः सन्धयः पुनः ॥

द्वयोर्नायकनायिकयोः । यथा रत्नावलीविद्धशालभञ्जिकादि । अथ त्रोटकं ।

(५४०) सप्ताष्टनवपञ्चाङ्कं दिव्यमानुषसंश्रयं ।
त्रोटकं नाम तत् प्राहुः प्रत्यङ्कं सविदूषकं ॥

प्रत्यङ्कं सविदूषकत्वादेवात्र शृङ्गारोऽङ्गी । सप्ताङ्कं यथा स्तम्भितरम्भं । पञ्चाङ्कं यथा विक्रमोर्व्वशी । अथ गोष्ठी ।

(५४१) प्राकृतैर्नवभिः पुंभिर्दशभिर्व्वाप्यलङ्कृता ।
नोदात्तवचना गोष्ठी कैशिकीवृत्तिशालिनी ॥
हीना गर्भविमर्षाभ्यां पञ्चषड्योषिदन्विता ।
कामशृङ्गारसंयुक्ता स्यादेकाङ्कविनिर्म्मिता ॥

यथा रैवतमदनिका । अथ सट्टकं ।

(५४२) सट्टकं प्राकृताशेषपाठ्यं स्यादप्रवेशकं ।
न च विष्कम्भकोऽप्यत्र प्रचुरश्चाद्भुतो रसः ॥
अङ्का जवनिकाख्याः स्युः स्यादन्यन्नाटिकासमं ।

यथा कर्पूरमञ्जरी। अथ भाणिकाङ्कं।

(५४३) भाण्डरासकमेकाङ्कं बहुतालल्यस्थिति।
उदात्तनायकं तद्वत् पीठमर्दोपनायकं॥
हास्योऽङ्गमत्र सशृङ्गारो नारी वासकसज्जिका।
मुखनिर्व्वहणे सन्धी लास्याङ्गानि दशापि च॥
केचित्प्रतिमुखं सन्धिमिव नेच्छन्ति केवलं।

अत्र सन्धिद्वयवती यथा नर्म्मवती। सन्धिचतुष्टयवती यथा विलासवती। अथ प्रस्थानं।

(५४४) प्रस्थाने नायको दासो हीनः स्यादुपनायकः।
दासी च नायिका वृत्तिः कैशिकी भारती तथा॥
सुरापानसमायोगादुद्दिष्टार्थस्य संहृतिः।
अङ्कौ द्वौ लयतालादिर्व्विलासो बहुलस्तथा॥

यथा शृङ्गारतिलकं। अथोल्लाप्यं।

(५४५) उदात्तनायकं दिव्यवृत्तमेकाङ्कभूषितं।
शिल्पकाङ्गैर्युतं हास्यशृङ्गारकरुणैरसैः॥
उल्लाप्यं बहुसङ्ग्रामं व्यस्रगीतिमनोहरं।
चतस्रो नायिकास्तत्र त्रयोऽङ्का इति केचन॥

शिल्पकाङ्गानि वक्ष्यमाणानि। यथा देवीमहादेवं। अथ काव्यं।

(५४६) काव्यमारभटीहीनमेकाङ्कं हास्यसङ्कुलं।
खण्डमात्रा द्विपदिका भग्नतालैरलङ्कृतं॥
वर्णमात्राच्छड्डुलिकायुतं शृङ्गारभाषितं।
नेता स्त्री चाप्युदात्तात्र सन्धी आद्यौ तथान्तिमः॥

यथा यादवोदयः। अथ प्रेङ्खणं।

(५४७) गर्भावमर्षरहितं प्रेङ्खणं हीननायकं।
असूत्रधारमेकाङ्कमविष्कम्भप्रवेशकं॥
नियुद्धसम्फेटयुतं सर्व्ववृत्तिसमाश्रितं।
नेपथ्ये गीयते नान्दी तथा तत्र प्ररोचना॥

यथा बालिवधः। अथ रासकं।

(५४८) रासकं पञ्चपात्रं स्यान्मुखनिर्व्वहणान्वितं।
भाषाविभाषाभूयिष्ठं भारतीकैशिकीयुतं॥
असूत्रधारमेकाङ्कं सवीथ्यङ्गं कलान्वितं।
श्लिष्टनान्दीयुतं ख्याननायिकं मूर्खनायकं॥
उदात्तभावविन्याससंश्रितं चोत्तरोत्तरं।
इह प्रतिमुखं सन्धिमपि केचित्प्रचक्षते॥

यथा मेनकाहितं। अथ संलापकं।

(५४९) संलापकेऽङ्काश्चत्वारस्त्रयो वा नायकः पुनः।
पाषण्डः स्याद्रसस्तत्र शृङ्गारकरुणेतरः॥
भवेयुः पुरसंरोधछलसङ्ग्रामविद्रवाः।
न तत्र वृत्तिर्भवति भारती न च कैशिकी॥

यथा मायाकापालिकं। अथ श्रीगदितं।

(५५०) प्रख्यातवृत्तमेकाङ्कं प्रख्यातोदात्तनायकं।
प्रसिद्धनायकं गर्भविमर्षाभ्यां विवर्ज्जितं॥
भारतीवृत्तिबहुलं श्रीतिशब्देन संयुतं।
मतं श्रीगदितं नाम विद्वद्भिरुपरूपकं॥

यथा क्रीडारसातलं।

"श्रीरासीना श्रीगदिते गायेत्किञ्चित्पठेदपि।
एकाङ्को भारतीप्राय इति केचित्प्रचक्षते"॥

अन्यदुदाहरणं। अथ शिल्पकं।

(५५१) चत्वारः शिल्पकेऽङ्काः स्युश्चतस्रो वृत्तयस्तथा।
अशान्तहास्याश्च रसा नायको ब्राह्मणो मतः॥
वर्णनात्र श्मशानादेर्हीनः स्यादुपनायकः।
सप्तविंशतिरङ्गानि भवन्त्येतस्य तानि तु॥
आशंसातर्कसन्देहतापोद्वेगप्रसक्तयः।
प्रयत्नग्रथनोत्कण्ठावहित्थाप्रतिपत्तयः॥
विलासालस्यवाष्पानि प्रहर्षाश्वासमूढताः।
साधनानुगमोच्छ्वासविस्मयाः प्राप्तयस्तथा॥
लाभविस्मृतिसम्फेटा वैशारद्यं प्रबोधनं।
चमत्कृतिश्चेत्यमीषां स्पष्टत्वाल्लक्ष्म नोच्यते॥

सम्फेटप्रयत्नयोः पूर्व्वमुक्तत्वादेव लक्ष्म सिद्धं। यथा कनकावतीमाधवः। अथ विलासिका।

(५५२) शृङ्गारबहुलैकाङ्का दशलास्याङ्गसंयुता।
विदूषकविटाभ्याञ्च पीठमर्द्देन भूषिता॥
हीना गर्भविमर्षाभ्यां सन्धिभ्यां हीननायका।
स्वल्पवृत्ता सुनेपथ्या विख्याता सा विलासिका॥

केचित्तत्र विलासिकास्थाने "लासिकेति" पठन्ति तस्यास्तु "दुर्म्मल्लिकायामन्तर्भाव" इत्यन्ये। अथ दुर्म्मल्लिका।

(५५३) दुर्म्मल्ली चतुरङ्का स्यात् कैशिकी भारती तथा।
अगर्भा नागरनरा न्यूननायकभूषिता॥
त्रिनालिः प्रथमोऽङ्कोऽस्यां विटक्रीडामयो भवेत्।
पञ्चनालिर्द्वितीयोऽङ्को विदूषकविलासवान्॥
षण्नालिकस्तृतीयस्तु पीठमर्द्दविलासवान्।
चतुर्थो दशनालिः स्यादङ्कः क्रीडितनायकः॥

यथा बिन्दुमती। अथ प्रकरणिका।

(५५४) नाटिकैव प्रकरणी सार्थवाहादिनायका।
समानवंशजा नेतुर्भवेद्यत्र च नायिका॥

मृग्यमुदाहरणं। अथ हल्लीशः।

(५५५) हल्लीश एव एकाङ्कः सप्ताष्टौ दश वा स्त्रियः।
वागुदात्तैकपुरुषः कैशिकीवृत्तसङ्कुलः॥
मुखान्तिमौ तथा सन्धी बहुताललयस्थितिः।

यथा केलिरैवतकं। अथ भाणिका।

(५५६) भाणिका श्लक्ष्णनेपथ्या मुखनिर्व्वहणान्विता।
कैशिकीभारतीवृत्तियुक्तैकाङ्कविनिर्म्मिता ॥
उदात्तनायिका मन्दपुरुषा ऽत्राङ्गसप्तकं।
उपन्यासोऽथ विन्यासो विबोधः साध्वसं तथा ॥
समर्पणं निवृत्तिश्च संहार इति सप्तमः।
उपन्यासः प्रसङ्गेन भवेत्कार्य्यस्य कीर्त्तनं ॥
निर्व्वेदवाक्यव्युत्पत्तिर्विन्यास इति स स्मृतः।
भ्रान्तिनाशो विबोधः स्यान् मिथ्याख्यानन्तु साध्वसं ॥
सोपालम्भवचः कोपपीडयेव समर्पणं।
निदर्शनस्योपन्यासो निवृत्तिरिति कथ्यते।
संहार इति च प्राहुर्यत्कार्य्यस्य समापनं ॥

स्पष्टान्युदाहरणानि। यथा कामदत्ता। एषां सर्व्वेषामपि नाटकप्रकृतिकत्वेऽपि यथौचित्यं यथालाभं नाटकोक्तविशेषपरिग्रहः। यत्र च नाटकोक्तस्यापि पुनरुपादानं तत्र तत्सद्भावस्य नियमः। अथ श्रव्यकाव्यानि।

(५५७) श्रव्यं श्रोतव्यमात्रं तत् पद्यगद्यमयं द्विधा।

तत्र पद्यमयान्याह।

५५८) छन्दोबद्धपदं पद्यं तेनैकेन च मुक्तकं।
द्वाभ्यान्तु युग्मकं सन्दानितकं त्रिभिरिष्यते ॥
कलापकं चतुर्भिश्च पञ्चभिः कुलकं मतं।

तत्र सुप्तकं यथा मम।

"शान्तात्मस्मसमस्तमध्यममर्ज यद्योगिनोऽपि क्षणं
साक्षात्कर्त्तुमुपासते प्रति मुहुर्ध्यानैकतानाः परं।
धन्यास्ता मथुरापुरीयुवतयस्तद्ब्रह्म याः कौतुकाद्
आलिङ्गन्ति समालपन्ति शतधा कर्षन्ति चुम्बन्ति च"॥

चुम्बकं यथा मम।

"किं करोषि करोपान्ते कान्ते गण्डस्थलीमिमां।
प्रणयप्रवणे कान्ते नैकान्ते नोचिताः क्रुधः॥
इति यावत्कुरङ्गाक्षीं वक्तुमीहामहे वयं।
तावदाविरभूच्चूते मधुरो मधुपध्वनिः"॥

एवमन्यत्रापि।

(५५९) सर्गबन्धो महाकाव्यं तत्रैको नायकः सुरः।
सद्वंशः क्षत्रियो वापि धीरोदात्तगुणान्वितः॥
एकवंशभवा भूपाः कुलजा बहवोऽपि वा।
शृङ्गारवीरशान्तानामेकोऽङ्गी रस इष्यते॥
अङ्गानि सर्व्वेऽपि रसाः सर्व्वे नाटकसन्धय।
इतिहासोद्भवं वृत्तमन्यद्वा सज्जनाश्रयं॥
चत्वारस्तस्य वर्गाः स्युस्तेष्वेकञ्च फलं भवेत्।
आदौ नमस्क्रियाशीर्व्वा वस्तुनिर्द्देश एव वा॥
क्वचिन्निन्दा खलादीनां सताञ्च गुणकीर्त्तनं।
एकवृत्तमयैः पद्यैरवसानेऽन्यवृत्तकैः॥

नातिस्वल्पा नातिदीर्घाः सर्गा अष्टाधिका इह।
नानावृत्तमयः क्वापि सर्गः कश्चन दृश्यते॥
सर्गान्ते भाविसर्गस्य कथायाः सूचनं भवेत्।
सन्ध्यासूर्य्येन्दुरजनीप्रदोषध्वान्तवासराः॥
प्रातर्म्मध्याह्नमृगयाशैलर्त्तुवनसागराः।
सम्भोगविप्रलम्भौ च मुनिस्वर्गपुराध्वराः॥
रणप्रयाणोपयममन्त्रपुत्रोदयादयः।
वर्णनीया यथायोगं साङ्गोपाङ्गा अमी इह॥
कवेर्वृत्तस्य वा नाम्ना नायकस्येतरस्य वा।
नामास्य सर्गोपादेयकथया सर्गनाम तु॥

सन्ध्यङ्गानि यथालाभमत्र विधेयानि। अवसानेऽन्यवृत्तकैरिति बहुवचनमविवक्षितं। साङ्गोपाङ्गा इति जलकेलिमधुपानादयः। यथा रघुवंशशिशुपालवधनैषधादिः। यथा वा मम राघवविलासादिः।

(५६०) अस्मिन्नार्षे पुनः सर्गा भवन्त्याख्यानसञ्ज्ञकाः।

अस्मिन् महाकाव्ये। यथा महाभारतं।

(५६१) प्राकृतैर्निर्म्मिते तस्मिन् सर्गा आश्वाससञ्ज्ञकाः।
छन्दसास्कन्दकेनैतत् क्वचिद्गलितकैरपि॥

यथा सेतुबन्धः। यथा वा मम कुवलयाश्वचरितं।

(५६२) अपभ्रंशनिबन्धेऽस्मिन् सर्गाः कुडवकाभिधाः।
तथापभ्रंशयोग्यानि छन्दांसि विविधान्यपि।

यथा कर्णपराक्रमः ।

(५६३) भाषाविभाषानियमात् काव्यं सर्गसमुज्झितं ।
एकार्थप्रवणैः पद्यैः सन्धिसामग्र्यवर्ज्जितं ॥

यथा भिक्षाटनं आर्य्याविलासश्च ।

(५६४) खण्डकाव्यं भवेत् काव्यस्यैकदेशानुसारि च ।

यथा मेघदूतादि ।

(५६५) कोषः श्लोकसमूहस्तु स्यादन्योन्यानपेक्षकः ।
व्रज्याक्रमेण रचितः स एवातिमनोरमः ॥

सजातीयानामेकत्र सन्निवेशो व्रज्या । यथा मुक्तावल्यादि । अथ गद्यकाव्यानि । तत्र गद्यं ।

(५६६) वृत्तबन्धोज्झितं गद्यं मुक्तकं वृत्तगन्धि च ।
भवेदुत्कलिकाप्रायं चूर्णकञ्च चतुर्व्विधं ॥
आद्यं समासरहितं वृत्तभागयुतं परं ।
अन्यद्दीर्घसमासाढ्यं तुर्य्यञ्चाल्पसमासकं ॥

मुक्तकं यथा । "गुरुर्वचसि पृथुरुरसीत्यादि" । वृत्तगन्धि यथा मम । "समरकण्डूलनिबिडभुजदण्डकुण्डलीकृतकोदण्डशिञ्जिनीटङ्कारोज्जागरितवैरिनगर" । अत्र कुण्डलीकृतकोदण्डेत्यनुष्टुब्वृत्तस्य पादः । समरकण्डूलेति च प्रथमाक्षरद्वयरहितस्तस्यैव पादः । उत्कलिकाप्रायं यथा ममैव । "अणिस विसुमर णिसिद्दरसरविसरविदलितसमरपरिगदपवरपरब-

लेत्यादि" *। चूर्णकं यथा मम। "गुणरत्नसागर जगदेकनागर कामिनीमदन जनरञ्जनेत्यादि"।

(५६७) कथायां सरसं वस्तु पद्यैरेव विनिर्म्मितं।
क्वचिदत्र भवेदार्य्या क्वचिद्वक्त्रापवक्त्रके॥
आदौ पद्यैर्नमस्कारः खलादेर्वृत्तकीर्त्तनं।

यथा कादम्बर्य्यादि।

(५६८) आख्यायिका कथावत् स्यात् कवेर्वंशादिकीर्त्तनं॥
अस्यामन्यकवीनाञ्च वृत्तं गद्यं क्वचित् क्वचित्।
कथांशानां व्यवच्छेद आश्वास इति बध्यते॥
आर्य्या वक्त्रापवक्त्राणां छन्दसा येन केनचित्।
अन्यापदेशेनाश्वासमुखे भाव्यर्थसूचनं॥

यथा हर्षचरितादि।

"अपि त्वनियमो दृष्टस्तत्राप्यन्यैरुदीरणात्"।

इति दण्ड्याचार्य्यवचनात् केचित् "आख्यायिका नायकेनैव निबद्धव्या" इत्याहुस्तदयुक्तं। आख्यानादयश्च कथाख्यायिकयोरेवान्तर्भावान्न पृथगुक्ताः। यदुक्तं दण्डिनैव।

"अत्रैवान्तर्भविष्यन्ति शेषाश्चाख्यानजातय इति"।

एषामुदाहरणं पञ्चतन्त्रादि। अथ गद्यपद्यमयानि।

(५६९) गद्यपद्यमयं काव्यं चम्पूरित्यभिधीयते।

---

* अणिसेति। अनिशं विस्मर निशिततरशरविसरविदलितसमरपरिगतप्रबलपरबलेत्यादि॥ सं०॥ टी०॥

यथा देशराजचरितं।

(५७०) गद्यपद्यमयी राजस्तुतिर्व्विरुदमुच्यते।

यथा विरुदमणिमाला।

(५७१) करम्भकन्तु भाषाभिर्व्विविधाभिर्व्विनिर्म्मितं।

यथा मम षोडशभाषामयी प्रशस्तिरत्नावली। एवमन्येऽपि भेदा उद्देशमात्रप्रसिद्धत्वादुक्तभेदानतिक्रमाच्च न पृथग्लक्षिताः॥

इति साहित्यदर्पणे दृश्यश्रव्यकाव्यनिरूपणो नाम षष्ठः परिच्छेदः॥ * ॥

इह प्रथमतः काव्ये दोषगुणरीत्यलङ्काराणामवस्थितिक्रमो दर्शितः। सम्प्रति के ते इत्यपेक्षायामुद्देशक्रमप्राप्तानां दोषाणां स्वरूपमाह।

(५७२) रसापकर्षका दोषाः

अस्यार्थः प्रागेव स्फुटीकृतः। तद्विशेषमाह।

(५७३) ते पुनः पञ्चधा मताः।
पदे तदंशे वाक्यार्थे सम्भवन्ति रसेऽपि यत्॥

तत्र।

(५७४) दुःश्रवं त्रिविधाश्लीलानुचितार्थाप्रयुक्तताः।
ग्राम्योऽप्रतीतसन्दिग्धनेयार्थनिहतार्थताः॥
अवाचकत्वं क्लिष्टत्वं विरुद्धमतिकारिता।
अविमृष्टविधेयांशभावश्च पदवाक्ययोः॥
दोषाः केचिद्भवन्त्येषु पदांशेऽपि पदेऽपरं।
निरर्थकासमर्थत्वे च्युतसंस्कारता तथा॥

परुषवर्णतया श्रुतिदुःखावहत्वं दुःश्रवत्वं। यथा।

"कार्त्तार्थ्यं यातु तन्वङ्गी कदानङ्गवशंवदा"।

अश्लीलत्वं व्रीडाजुगुप्साऽमङ्गलव्यञ्जकत्वात्त्रिधा। क्रमेणोदाहरणं।

"दृप्तारिविजये राजन् साधनं सुमहत्तव।
प्रससार शनैर्व्वायुर्विनाशे तन्वि ते तदा"॥

अत्र साधनवायुविनाशशब्दा अश्लीलाः।

"शूरा अमरतां यान्ति पशुभूता रणाध्वरे"।

अत्र पशुपदं कातर्य्यमभिव्यनक्तीत्यनुचितार्थत्वं। अप्रयुक्तत्वं तथा प्रसिद्धावपि कविभिरनादृतत्वं। यथा। "भाति पद्मः सरोवरे"। अत्र पद्मशब्दः पुंलिङ्गः। ग्राम्यत्वं यथा। "कटिस्ते हरते मनः"। अत्र कटिशब्दो ग्राम्यः। अप्रतीतत्वमेकदेशमात्रप्रसिद्धत्वं। यथा। "योगेन दलिताशयः"। अत्र योगशास्त्र एव वासनार्थे आशयशब्दः।

"आशीःपरम्परां वन्द्यां कर्णे कृत्वा कृपां कुरु"।

अत्र वन्द्यामिति किं वन्दीभूतायामुत वन्दनीयायामिति सन्देहः। नेयार्थत्वं रूढिप्रयोजनाभावादशक्तिकृतं लक्ष्यार्थप्रकाशनं। यथा।

"कमले चरणाघातं मुखं सुमुखि तेऽकरोत्"।

अत्र चरणाघातेन निर्ज्जितत्वं लक्ष्यं। निहतार्थत्वमुभयार्थस्य शब्दस्याप्रसिद्धेऽर्थे प्रयोगः। यथा। "यमुनाशम्बरमम्बरं व्यतानीत्"। शम्बरशब्दो दैत्ये प्रसिद्ध इह तु जले निहतार्थः। "गीतेषु कर्णमादत्ते"। आङ्पूर्व्वो दाञ्धातुर्द्दानार्थेऽवाचकः। यथा वा।

"दिनं मे त्वयि सम्प्राप्ते ध्वान्तच्छन्नापि यामिनी"।

अत्र दिनमिति प्रकाशमयार्थेऽवाचकं। क्लिष्टत्वमर्थप्रतीतेर्व्यवहितत्वं। "क्षीरोदजावसतिजन्मभुवः प्रसन्नाः"। अत्र क्षीरोदजा लक्ष्मीस्तस्या वसतिः पद्मं तस्य जन्मभुवो जलानि। "भूतये

ऽस्तु भवानीश:"। अत्र भवानीशशब्दो भवान्या: पत्यन्तरप्रतीतिकारित्वाद्विरुद्धमवगमयति।

"स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनै: किमेभिर्भुजै:"।

अत्र वृथात्वं विधेयं तच्च समासे गुणीभावादनुवाद्यत्वप्रतीतिकृत्। यथा वा। "रक्षांस्यपि पुर:स्थातुमलं रामानुजस्य मे"। अत्र रामस्येति वाच्यं। यथा वा। "आसमुद्रक्षितीशानां"। अत्रासमुद्रमिति वाच्यं। यथा वा।

"यत्र ते पतति सुभ्रु कटाक्ष: षष्ठवाण इव पञ्चशरस्य"।

अत्र षष्ठ इवेत्युत्प्रेक्ष्यं। यथा वा।

"अमुक्ता भवता नाथ मुहूर्त्तमपि सा पुरा"।

अत्रामुक्तेत्यत्र नञ: प्रसज्यप्रतिषेधत्वमिति विधेयत्वमेवोचितं। यदाहु:।

"अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता।
प्रसज्यप्रतिषेधोऽसौ क्रियया सह यत्र नञ्"।

यथा।

"नवजलधर: सन्नद्धोऽयं न दृप्तनिशाचर:"।

अत्रोदाहरणे तत्पुरुषसमासे गुणीभावे नञ: पर्य्युदासतया निषेधस्य विधेयतानवगम:। यदाहु:।

"प्रधानत्वं विधेर्यत्र प्रतिषेधेऽप्रधानता।
पर्य्युदास: स विज्ञेयो यत्रोत्तरपदे न नञ्"॥

तेन।

"जुगोपात्मानमत्रस्तो भेजे धर्म्ममनातुर:।

अगृध्नुराददे सोऽर्थानसक्तः सुखमन्वभूत्" ॥

अत्राचस्ततामनूद्यात्मगोपनाद्येव विधेयमिति नञः पर्य्युदासतया गुणभावो युक्तः। यथाश्राद्धभोजी ब्राह्मणः, असूर्य्यम्पश्या राजदारा इत्यादिवत् अमुक्तेत्यत्रापि प्रसज्यप्रतिषेधो भविष्यतीति चेन्न। अत्रापि यदि भोजनादिरूपक्रियांशेन नञः सम्बन्धः स्यात्तदैव तत्र प्रसज्यप्रतिषेधत्वं वक्तुं शक्यं। न च तथा। विशेष्यतया प्रधानेन तद्भोक्त्यार्थेन कर्त्रंशेनैव नञः सम्बन्धात्। यदाहुः।

"श्राद्धभोजनशीलो हि यतः कर्त्ता प्रतीयते।
न तद्भोजनमात्रं तु कर्त्तरीनेर्व्विधानत इति" ॥

अमुक्तेत्यत्र तु क्रिययैव सह सम्बन्ध इति दोष एव। एते च क्लिष्टत्वादयः समासगता एव पददोषाः। वाक्ये दुःश्रवत्वं यथा।

"स्मरार्त्तन्धः कदा लप्स्ये कार्त्तार्थ्यं विरहे तव।
क्षतप्रवृत्तिरम्बर्थ्यै कविर्वाक्तं समश्नुते" ॥

अत्र जुगुप्साव्यञ्जकाश्लीलता।

"उद्यत्कमललौहित्यैर्वक्राभिर्भूषिता तनुः"।

अत्र कमललौहित्यं पद्मरागः। वक्राभिः वामाभिः।

"धम्मिल्लस्य न कस्य प्रेक्ष्य निकामं कुरङ्गशावाक्ष्याः।
रज्यत्यपूर्व्वबन्धव्युत्पत्तेर्मानसं शोभां" ॥

अत्र धम्मिल्लस्य शोभां प्रेक्ष्य कस्य मानसं रज्यतीति सम्बन्धः क्लिष्टः। "न्यक्कारो ह्ययमेव मे यदरय" इति" अत्र चायमेव न्यक्कार इति न्यक्कारस्य विधेयत्वं विवक्षितं। तच्च शब्दरचनावैपरी-

त्वेन गुणीभूतं। रचना च पदद्वयस्य विपरीतेति वाक्यदोषः।

"आनन्दयति ते नेत्रे योऽसौ सुभ्रु समागतः"।

इत्यादिषु "यत्तदोर्नित्यः सम्बन्धः" इति न्यायादुपक्रान्तस्य यच्छब्दस्य निराकाङ्क्षत्वप्रतिपत्तये तच्छब्दसमानार्थतया प्रतिपाद्यमाना इदमेतददःशब्दा विधेया एव भवितुं युक्ताः। अत्र तु यच्छब्दनिकटस्थतया अनुवाद्यत्वप्रतीतिकृत्तच्छब्दस्यापि यच्छब्दनिकटस्थितस्य प्रसिद्धपरामर्शित्वमात्रं। यथा।

"यः स ते नयनानन्दकरः सुभ्रु स आगतः"।

यच्छब्दव्यवधानेन स्थितास्तु निराकाङ्क्षत्वमवगमयन्ति। यथा।

"आनन्दयति ते नेत्रे योऽधुनासौ समागतः"।

एवमिदमादिशब्दोपादानेऽपि। यत्र च यत्तदोरेकस्यार्थत्वं सम्भवति तत्रैकस्योपादानेऽपि निराकाङ्क्षत्वप्रतीतिरिति न क्षतिः। तथा हि यच्छब्दस्योत्तरवाक्यगतत्वेनोपादाने सामर्थ्यात् पूर्व्ववाक्ये तच्छब्दस्यार्थत्वं। यथा "आत्मा जानाति यत् पापं"। एवं।

"यं सर्व्वशैलाः परिकल्प्य वत्सं मेरौ स्थिते दोग्धरि दोहदक्षे।
भास्वन्ति रत्नानि महौषधीश्च" इत्यादावपि। तच्छब्दस्य प्रक्रान्तप्रसिद्धानुभूतार्थत्वे यच्छब्दस्यार्थत्वं। क्रमेण यथा।

"स हत्वा वालिनं वीरं तत्पदे चिरकाङ्क्षिते।
धातोः स्थान इवादेशं सुग्रीवं संन्यवेशयत्"॥

"स वः शशिकलामौलिस्तादात्म्यायोपकल्पतां"।

"तामिन्दुसुन्दरमुखीं हृदि चिन्तयामि"॥

यत्र च यच्छब्दनिकटस्थितानामपीदमादिशब्दानां भिन्न-लिङ्गविभक्तित्वं तत्रापि निराकाङ्क्षत्वमेव। क्रमेण यथा।

"विभाति मृगशावाक्षी येदं भुवनभूषणं।
इन्दुर्विभाति यस्तेन दग्धाः पथिकयोषितः"॥

क्वचिदनुपात्तयोर्द्वयोरपि सामर्थ्यादवगमो यथा।

"न मे शमयिता कोऽपि भारस्येत्युर्व्वि माशुचः।
नन्दस्य भवने कोऽपि बालोऽस्त्यद्भुतपौरुषः"॥

अत्र योऽस्ति स ते भारस्य शमयितेति बुध्यते।

"यद्यद्विरहदुःखं मे तत्को वापहरिष्यति"।

इत्यत्रैको यच्छब्दः साकाङ्क्ष इति न वाच्यं। तथा हि यद्यदित्यनेन येन केनचिद्रूपेण स्थितं सर्व्वात्मकं वस्तु विवक्षितं। तथाभूतस्य तस्य तच्छब्देन परामर्षः। एवमन्येषामपि वाक्य-गतत्वेनोदाहरणं बोध्यं। पदांशे श्रुतिकटुर्यथा। "तद्गच्छ सिद्ध्यै कुरु देवकार्य्यं"। "धातुमत्तां गिरिर्धत्ते"। अत्र मत्ताशब्दः क्षीवार्थे निहतार्थः।

"वर्ण्यते किं महासेनो विजेयो यस्य तारकः"।

अत्र विजेय इति कृत्यप्रत्ययः क्तप्रत्ययार्थेऽवाचकः। "पाणिः पल्लवपेलवः"। पेलवशब्दस्याद्याक्षरे अश्लीले।

"सङ्ग्रामे निहताः शूरा वचोबाणत्वमागताः"।

अत्र वचःशब्दस्य गीःशब्दवाचकत्वे नेयार्थत्वं। तथा तत्रैव बाणत्वाने शरेति पाठे अत्र पदद्वयमपि न परिवृत्तिसहं।

असभ्यादौ तूत्तरपदं वाच्यवानत्वादौ पूर्व्वपदं। एवमन्येऽपि यथा सम्भवं पदांशदोषा ज्ञेयाः। निरर्थकत्वादीनां त्रयाणां पद-मात्रगतत्वेनैव लक्ष्ये सम्भवः। यथा। "मुञ्च मानं हि मानिनि"। अत्र हिशब्दो वृत्तिपूरणमात्रप्रयोजनः। "कुञ्जं हन्ति कृशो-दरी"। अत्र हन्तीति गमनार्थे पठितमपि न तत्र समर्थं। "गाण्डीवी कनकशिलानिभं भुजाभ्यामाजघ्ने विषमविलोचनस्य वक्षः"। "आङो यमहनः (पा० १।३।२८) स्वाङ्गकर्म्मकाच्चेति" (पा० १।३।२८। सू० वा० १) अनुशासनबलादाङ्पूर्व्वस्य हनः स्वाङ्गकर्म्मकस्यैवात्मनेपदं नियमितं। इह तु तल्लङ्घित-मिति व्याकरणलक्षणहीनत्वात् च्युतसंस्कारत्वं। नन्वत्र "आजघ्ने" इति पदस्य स्वतो न दुष्टता अपि तु पदान्तरापेक्षयैवेत्यस्य वाक्यदोषता। नैवं। तथा हि गुणदोषालङ्काराणां शब्दार्थ-गतत्वेन व्यवस्थितेस्तदन्वयव्यतिरेकानुविधायित्वं हेतुः। इह तु दोषस्य "आजघ्ने" इति पदमात्रस्यैवान्वयव्यतिरेकानुविधायित्वं। पदान्तराणां परिवर्त्तनेऽपि तस्य तादवस्थ्यादेवेति पददोष एव तथा। यथेहात्मनेपदस्य परिवृत्तावपि न पददोषः तथा हनप्रकृतेरपीति न पदांशदोषः। एवं "पद्म" इत्यत्राप्रयुक्तस्य पदगतत्वं बोध्यं। एवं प्राकृतादिव्याकरणलक्षणहानावपि च्युत-संस्कारत्वमूह्यं। इह शब्दानां सर्व्वथा प्रयोगाभावेऽसमर्थत्वं विरलप्रयोगे निहतार्थत्वं। निहतार्थत्वमनेकार्थशब्दविषयं। अप्रतीतत्वं त्वेकार्थस्यापि शब्दस्य सार्व्वत्रिकप्रयोगविरहः। अप्र-युक्तत्वमेकार्थशब्दविषयं। असमर्थत्वमनेकार्थशब्दविषयं। असम-

र्थत्वे इत्यादयोऽपि गमनार्थे पठिताः । अवाचकत्वे दिनादयः प्रकाशमवाद्यर्थे न तथेति परस्परभेदः । एवं पददोषसजातीया वाक्ये दोषा उक्ताः सम्प्रति तद्विजातीया उच्यन्ते ।

(५७५) वर्णानां प्रतिकूलत्वं लुप्ताहतविसर्गते ।
अधिकन्यूनकथितपदताहतवृत्तताः ॥
पतत्प्रकर्षता सन्धौ विश्लेषाश्लीलकष्टताः ।
अर्द्धान्तरैकपदता समाप्तपुनरात्तता ॥
अभवन्मतसम्बन्धाक्रमामतपरार्थताः ।
वाच्यस्यानभिधानञ्च भग्नप्रक्रमता तथा ॥
त्यागः प्रसिद्धेरस्थाने न्यासः पदसमासयोः ।
सङ्कीर्णता गर्भितता दोषाः स्युर्वाक्यमात्रगाः ॥

वर्णानां रसानुगुणविपरीतत्वं प्रतिकूलत्वं । यथा मम । "ओवट्टइ उल्लट्टइ सअणे कहिम्पि मोट्टाअइ णो परिहट्टइ । हिअएण फिट्टइ लज्जाइ खुट्टइ दिहीए सा" * । अत्र टकाराः शृङ्गाररसपरिपन्थिनः केवलं शक्तिप्रदर्शनाय निबद्धाः । एषाञ्चैकद्वित्रिचतुःप्रयोगेषु न तादृग्रसभङ्ग इति न दोषः । "गता निशा इमा बाले" । अत्र लुप्तविसर्गाः । आहता ओत्वं

* ओवट्टइ इति । उद्वर्त्तयति उल्लोटयति शयने कस्मिन्नपि मोट्टायति न परिघट्टति । हृदयेन स्फिटयति लज्जया खुट्टयति धृतेः सा इति ॥ सं० ॥ टी० ॥ उद्वर्त्तयति देहमुत्तानीकरोति । उल्लोटयति पार्श्वपरिवर्त्तनं करोति । मोट्टायितभावं न करोति । स्फिटयति भ्रश्यति । खुट्टयति कुण्ठिता भवति इत्यर्थः ॥ टी० ॥

प्राप्ता विसर्गा यत्र। यथा। "धीरो वरो नरो यातीति"। "पञ्च-वाह्वतिरश्कोष्ठी"। अत्राह्वतिपदमधिकं। एवं "सदाशिवं नौमि पिनाकपाणिमिति" विशेषणमधिकं। "कुर्य्यां हरस्यापि पिना-कपाणेरिति" अत्र तु विशेषप्रतिपत्त्यर्थमुपात्तत्वायुक्तमेव। यथा वा "वाचमुवाच कौत्सः"। अत्र वाचमित्यधिकं' उवाचेत्यनेनैव गतार्थत्वात्। क्वचित्तु विशेषणदानार्थं तत्प्रयोगो युज्यते। यथा। "उवाच मधुरां वाचमिति"। केचित्त्वाहुः "यत्र विशेषण-स्यापि क्रियाविशेषणत्वं सम्भवति तत्रापि तत्प्रयोगो न घटते" यथा। "उवाच मधुरं धीमानिति"।

"यदि मय्यर्पिता दृष्टिः किं ममेन्द्रतया तदा"।

अत्र प्रथमे त्वयेति पदं न्यूनं।

"रतिलीलाश्रमं भिन्ते सलीलमनिलो वहन्"।

लीलाशब्दः पुनरुक्तः। एवं "जघुर्विसं धृतविकाशिविसप्र-सूना"। अत्र विसशब्दस्य धृतपरिस्फुटतत्प्रसूना इति सर्व्वना-म्नैव परामर्शो युक्तः। हतं वृत्तं लक्षणानुसरणेऽप्यश्रव्यं रसान-नुगुणमप्राप्तगुरुभावान्तलघु च। क्रमेण यथा। "हन्त सतत-मेतस्या हृदयं भिन्ते मनोभवः कुपितः"। "अयि मयि मानिनि मा कुरु मानं"। इदं वृत्तं हास्यरसस्यैवानुकूलं। "विकसित-सहकारभारहारिपरिमल एष समागतो वसन्तः"। अत्पा-दान्ते लघोरपि गुरुभाव उक्तस्तत् सर्व्वत्र द्वितीयचतुर्थपाद-विषयं। प्रथमतृतीयपादविषयन्तु वसन्ततिलकादेरेव। अत्र प्रमुदितसौरभ आगतो वसन्त इति पाठो युक्तः। यथा वा।

"अन्यास्ता गुणरत्नरोहणभुवो धन्या मृदन्यैव सा
सम्भाराः खलु तेऽन्य एव विधिना यैरेष सृष्टो युवा।
श्रीमत्कान्तिजुषां द्विषां करतलात् स्त्रीणां नितम्बस्थलात्
दृष्टे यत्र पतन्ति मूढमनसामस्त्राणि वस्त्राणि च" ॥

अत्र वस्त्राणि चेति बन्धस्य श्लथत्वश्रुतिः। "वस्त्राण्यपीति" पाठे तु दार्ढ्यमिति न दोषः। "इदमप्राप्तगुरुभावान्तलघ्विति" काव्यप्रकाशकारः। वस्तुतस्तु "लक्षणानुसरणेऽप्यश्रव्यमिति" अन्ये।

"प्रोज्ज्वलज्ज्वलनज्वालाविकटोरुसटाछटः।
श्वासक्षिप्तकुलक्ष्माभृत् पातु वो नरकेसरी" ॥

अत्र क्रमेणानुप्रासप्रकर्षः पतितः।

"द्रवितो उत्पले एते अक्षिणी अमलाङ्गि ते"।

एवंविधसन्धिविश्लेषस्यासकृत्प्रयोग एव दोषः। अनुप्रासनमुसकृत् वृत्तभङ्गभयमात्रेण सन्धिविश्लेषस्य तु सकृदपि। यथा।

"वासवाशामुखे भाति इन्दुश्चन्दनविन्दुवत्"।

"चलण्डामरचेष्टित इति" अत्र सन्धौ जुगुप्साव्यञ्जकमश्लीलत्वं

"उर्व्यसावत्र तर्वाली मर्वन्ते चार्ववस्थितिः"।

अत्र सन्धौ कष्टत्वं।

"इन्दुर्विभाति कर्पूरगौरैर्धवलयन् करैः।
जगन्मा कुरु तन्वङ्गि मानं पादानते प्रिये" ॥

अत्र जगदिति प्रथमार्द्धे पठितुमुचितं।

"नाशयन्तो घनध्वान्तं तापयन्तो वियोगिनः।

पतन्ति सुन्दरि: पादा आस्थयन्त: समागतं" ॥

अत्र चतुर्थपादो वाक्यसमाप्तावपि पुनराप्त:। अभवन्मत-सम्बन्धो यथा ।

"या जयश्रीर्मनोजस्य यया जगदलङ्कृतं ।

यामेणाक्षीं विना प्राणा विफला मे कुतोऽस्य सा" ॥

अत्र यच्छब्दनिर्द्दिष्टानां वाक्यानां परस्परनिरपेक्षत्वात्त-द्वेकान्त:पातिना एणाक्षीशब्देन अन्येषां सम्बन्ध: कवेरभिमतो नोपपद्यत एव ।

"यां विनामी वृथा प्राणा एणाक्षी सा कुतोऽद्य मे"।

इति तच्छब्दनिर्द्दिष्टवाक्यान्त:पातित्वे तु सर्व्वैरपि यच्छ-ब्दनिर्द्दिष्टवाक्यै: सम्बन्धो घटते। यथा वा।

"ईक्षसे यत्कटाक्षेण तदा धन्वी मनोभव:"।

अत्र यदित्यस्य तदेत्यनेन सम्बन्धो न घटते। "ईक्षसे चेदि-ति" तु युक्त: पाठ:। यथा वा।

"ज्योत्स्ना च य: पय:पूरस्तारका: कैरवाणि च।

राजति व्योमकासाररराजहंस: सुधाकर:" ॥

अत्र कासारशब्दस्य समासे गुणीभावात्तदर्थस्य सर्व्वै: संयोग:। विधेयाविमर्षे यदेवाविमृष्टं तदेव दुष्टं। इह तु प्रधा-नस्य कासारपदार्थस्य प्राधान्येनाप्रतीते: सर्व्वोऽपि पय:पूरादि-पदार्थस्तदङ्गतया न प्रतीयते इति सर्व्ववाक्यार्थविरोधावभास इत्युभयोर्भेद:।

"अनेन छिन्दता मातु: कण्ठं परशुना तव।

बहुत्वन्तु: कृपाणोऽयं लज्जते मम भार्गव" ॥

अत्र "भार्गवनिन्दायां प्रयुक्तस्य मातृकण्ठच्छेदनकर्तृत्वस्य परशुना सह सम्बन्धो न युक्त इति" प्राच्याः। "परशुनिन्दा-मुखेन भार्गवनिन्दाधिक्यमेव वैदग्ध्यं द्योतयतीति" आधुनिकाः। अक्रमता यथा।

"समय एव करोति बलाबलं प्रणिगदन्त इतीव शरीरिणां।
शरदि हंसरवाः परुषीकृतस्वरमयूरमयूरमणीयतां"।

अत्र परात्मस्यमानवाक्यानन्तरमेवेतिशब्दप्रयोगो युक्तो न तु प्रणिगदन्त इत्यनन्तरं। एवं।

"द्वयं गतं सम्प्रति शोचनीयतां
समागमप्रार्थनया कपालिनः।
कला च सा कान्तिमती कलावत-
स्त्वमस्य लोकस्य च नेत्रकौमुदी"।

अत्र त्वमित्यनन्तरमेव चकारो युक्तः। अमतपरार्थता यथा।

"राममन्मथशरेणेत्यादि"। अत्र शृङ्गाररसस्य व्यञ्जको द्वितीयोऽर्थः प्रकृतरसविरोधित्वादनिष्टः। वाच्यस्यानभिधानं यथा।

"व्यतिक्रमलवं कं मे वीक्ष्य वामाक्षि कुप्यसि"।

अत्र व्यतिक्रमलवमपीत्यपिरवश्यं वक्तव्यो नोक्तः। न्यूनपदत्वे वाचकपदस्यैव न्यूनता विवक्षिता। अपेस्तु न तथात्वमित्यनयोर्भेदः। एवमन्यत्रापि। यथा वा।

"चरणानतकान्तायास्तन्वि कोपस्तथापि ते"।

अत्र "परवानतकाङ्कासीदिति" वाच्यं। भग्नप्रक्रमता यथा।

"एवमुक्तो मन्त्रिमुख्यैरावणः प्रत्यभाषत"।

अत्र वचधातुना प्रक्रान्तं प्रतिवचनमपि तेनैव वक्तुमुचितं तेन "रावणः प्रत्यवोचतेति" पाठो युक्तः। एवञ्च सति न कथितपदत्वदोषः। तस्योद्देश्यप्रतिनिर्देश्यव्यतिरिक्तविषयत्वात्। इह हि वचनप्रतिवचनयोरुद्देश्यप्रतिनिर्देश्यत्वं। यथा।

"उदेति सविता ताम्रस्ताम्र एवास्तमेति च"।

इत्यत्र यदि पदान्तरेण स एवार्थः प्रतिपाद्यते तदान्योऽर्थ इव प्रतिभासमानः प्रतीतिं स्थगयति। यथा वा।

"ते हिमालयमामन्त्र्य पुनः प्रेक्ष्य च शूलिनं।
सिद्धञ्चास्मै निवेद्यार्थं तद्विसृष्टाः खमुद्ययुः"॥

अत्र "अस्मा इति" इदमा प्रक्रान्तस्य तेनैव तत्समानाभ्यामेतददःशब्दाभ्यां वा परामर्शो युक्तो न तच्छब्देन। यथा वा।

उदन्वच्छिन्ना भूः स च पतिरपां योजनशतं"।

अत्र "मिता भूः पत्यापां स च पतिरपामिति" युक्तः पाठः। एवं।

"यशोऽधिगन्तुं सुखलिप्सया वा
मनुष्यसंख्यामतिवर्त्तितुं वा।
निरुत्सुकानामभियोगभाजां
समुत्सुकेवाङ्कमुपैति सिद्धिः"॥

अत्र सुखमीहितुमित्युचितं। अत्राद्ययोः प्रकृतिविषयः प्रक्रमभेदः। तृतीये पर्य्यायविषयः। चतुर्थे प्रत्ययविषयः। एवमन्यत्।

अप्रसिद्धिप्रयोगो यथा। "घोरो वारिमुचां रवः"। अत्र मेघानां गर्ज्जितमेव प्रसिद्धं। यदाहुः।

"मञ्जीरादिषु रणितप्रायं पक्षिषु तु कूजितप्रभृतिः।

स्तनितमणितादि सुरते मेघादिषु गर्ज्जितप्रमुखमित्यादि"॥

अस्थानस्थपदता यथा।

"तीर्थे तदीये गजसेतुबन्धात् प्रतीपगामुत्तरतोऽस्य गङ्गां।

अयत्नबालव्यजनीबभूवुर्हंसा नभोलङ्घनलोलपक्षाः"॥

अत्र तदीयपदात् पूर्व्वं गङ्गामित्यस्य पाठो युक्तः। एवं "हिताम् न यः संशृणुते स किं प्रभुः"। अत्र संशृणुत इत्यतः पूर्व्वं नञः स्थितिरुचिता। अत्र च "पदमात्रस्यास्थाने निवेशेऽपि सर्व्वमेव वाक्यं विवक्षितार्थप्रत्यायने मन्थरमिति" वाक्यदोषता। एवमन्यत्रापि। इह केऽप्याहुः "पदशब्देन वाचक एव प्रयोगो निगद्यते न च नञो वाचकता निर्विवादात् स्वातन्त्र्येणार्थबोधनविरहादिति" यथा "द्वयं गतं इत्यादौ" त्वमित्यनन्तरं चकारानुपादानादक्रमता तथात्रापीति। अस्थानस्थसमासता यथा।

"अद्यापि स्तनशैलदुर्गविषमे सीमन्तिनीनां हृदि

स्थातुं वाञ्छति मान एष धिगिति क्रोधादिवालोहितः।

प्रोद्यद्दूरतरप्रसारितकरः कर्षत्यसौ तत्क्षणात्

फुल्लत्कैरवकोषनिःसरदलिश्रेणीकृपाणं शशी"॥

अत्र कोपिन उक्तौ समासो न कृतः कवेरुक्तौ कृतः। वाक्यान्तरपदानां वाक्यान्तरेऽनुप्रवेशः सङ्कीर्णत्वं। यथा।

"मुञ्च चन्द्रं कुरङ्गाक्षि पश्य मानं नभोऽङ्गणे"।

अत्र नभोऽङ्गणे चन्द्रं पश्य मानं मुञ्चेति युक्तं । “क्लिष्टत्व-मेकवाक्यविषयमिति” अस्माद्भिन्नं । वाक्यान्तरे वाक्यान्तरानु-प्रवेशो गर्भितता । यथा ।

“रमणे चरणप्रान्ते प्रणतिप्रवणेऽधुना ।
वदामि सखि ते तत्त्वं कदाचिन्नोचिताः क्रुधः” ॥

अर्थदोषानाह ।

(५७६) अपुष्टदुष्क्रमग्राम्यव्याहताश्लीलकष्टताः ।
अनवीकृतनिर्हेतुप्रकाशितविरुद्धताः ॥
सन्दिग्धपुनरुक्तत्वे ख्यातिविद्याविरुद्धते ।
साकाङ्क्षतासहचरभिन्नतास्थानयुक्तता ॥
अविशेषे विशेषस्यानियमे नियमस्तथा ।
तयोर्विपर्य्ययो विध्यनुवादायुक्तते तथा ॥
निर्म्मुक्तपुनरुक्तत्वमर्थदोषाः प्रकीर्त्तिताः ।

तद्विपर्य्ययो विशेषेऽविशेषो नियमेऽनियमः । अत्रापुष्टत्वं मुख्यानुपकारित्वं । यथा ।

“विलोक्य वितते व्योम्नि विधुं मुञ्च रुषं प्रिये” ।

अत्र विततशब्दो मानत्यागं प्रति न किञ्चिदुपकुरुते । अधि-कपदत्वे पदार्थान्वयप्रतीतेः समकालमेव बाधप्रतिभासः इह तु पश्चादिति विशेषः । दुष्क्रमता यथा ।

“देहि मे वाजिनं राजन् गजेन्द्रं वा महालसं” ।

अत्र गजेन्द्रस्य प्रथमं याचनमुचितं ।

"स्वपिहि त्वं समीपे मे स्वपिम्येवाधुना प्रिय"।

अत्रार्थो ग्राम्यः। कस्यचित् प्रागुत्कर्षमपकर्षं वाभिधाय पश्चात्तदन्यप्रतिपादनं व्याहतत्वं। यथा।

"हरन्ति हृदयं यूनां न नवेन्दुकलादयः।
वीक्ष्यते यैरियं तन्वी लोकलोचनचन्द्रिका"॥

अत्र येषामिन्दुकला नानन्दहेतुस्तेषामेवानन्दाय तस्याश्चन्द्रिकात्वारोपः।

"हन्तुमेव प्रवृत्तस्य स्तब्धस्य विवरैषिणः।
यथाश्रु जायते पातो न तथा पुनरुन्नतिः"॥

अत्रार्थोऽश्लीलः।

"वर्षत्येतदहर्पतिर्न तु घनो धामस्थमच्छं पयः
सत्यं सा सवितुः सुता सुरसरित्पूरो यथा स्रावितः।
व्यासस्योक्तिषु विश्वसित्यपि न कः श्रद्धा न कस्य श्रुतौ
न प्रत्येति तथापि मुग्धहरिणी भास्वन्मरीचिष्वपः"॥

अत्र यस्मात् सूर्य्याद्वृष्टिर्यमुनायाश्च प्रभवस्तस्मात्तयोर्जलमपि सूर्य्यप्रभवं। ततश्च सूर्य्यमरीचीनां जलप्रत्ययहेतुत्वमुचितं। तथापि मृगी भ्रान्तत्वात्तत्र जलप्रायं न करोतीत्ययमप्रस्तुतोऽप्यर्थो दुर्ब्बोधः दूरे चास्मात् प्रस्तुतार्थबोध इति कष्टार्थत्वं।

"सदा चरति खे भानुः सदा वहति मारुतः।
सदा धत्ते भुवं शेषः सदा धीरोऽविकत्थनः"॥

अथ सदेत्यनवीकृतं अत्रास्य पदस्य पर्य्यायान्तरेणोपादाने

ऽपि यदि मान्यदिच्छत्यन्तरं तदास्य दोषस्य सद्भाव इति कथितपदत्वाद्भेदः। नवीकृतत्वं यथा।

"भानुः सकृद्युक्ततुरङ्ग एव रात्रिन्दिवं गन्धवहः प्रयाति।
विभर्त्ति शेषः सततं धरित्रीं षष्ठांशवृत्तेरपि धर्म्म एषः"॥

"गृहीतं येनासीः परिभवभयान्नोचितमपि
प्रभावाद्यस्याभून्न खलु तव कश्चिन्न विषयः।
परित्यक्तं तेन त्वमपि सुतशोकान्नतु भयात्
विमोक्ष्ये शस्त्र त्वामहमपि यतः स्वस्ति भवते"॥

अत्र द्वितीयशस्त्रमोचने हेतुर्नोक्त इति निर्हेतुत्वं।

"कुमारस्ते नराधीश श्रियं समधिगच्छतु"।

अत्र त्वं म्रियस्वेति विरुद्धार्थप्रकाशनात् प्रकाशितविरुद्धत्वं।

"अचला अबला वा स्युः सेव्या ब्रूत मनीषिणः"॥

अत्र प्रकरणाभावाच्छान्तशृङ्गारिणोः को वक्तेति निश्चयाभावात् सन्दिग्धत्वं।

"सहसा विदधीत न क्रियामविवेकः परमापदां पदं।
वृणुते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः"॥

अत्र द्वितीयार्द्धव्यतिरेकेण द्वितीयपादस्यैवार्थ इति पुनरुक्तता। प्रसिद्धिविरुद्धता यथा।

"ततश्चचार समरे शितशूलधरो हरिः"।

अत्र हरेः शूलं लोकेऽप्रसिद्धं। यथा वा।

"पादाघातादशोकस्ते सञ्जाताङ्कुरकण्टकः"।

अत्र पादाघातादशोकेषु पुष्पमेव आयत इति प्रसिद्धं न

त्स्फुर इति कविसमयख्यातिविरुद्धता ॥ "अधरे करजक्षतं मृगाक्ष्याः"। अत्र शृङ्गारशास्त्रविरुद्धत्वाद्विद्याविरुद्धता। एवमन्यशास्त्रविरुद्धत्वमपि।

"ऐशस्य धनुषो भङ्गं क्षत्रस्य च समुन्नतिं।
स्त्रीरत्नञ्च कथं नाम मृष्यते भार्गवोऽधुना" ॥

अत्र स्त्रीरत्नमुपेक्षितुमित्याकाङ्क्षति।

"सज्जनो दुर्गतौ मग्नः कामिनी गलितस्तनी।
खलः पूज्यः समज्यायां तापाय मम चेतसः" ॥

अत्र सज्जनः कामिनी च शोभनौ तत्सहचरः खलोऽशोभन इति सहचरभिन्नत्वं।

"आशा शक्रशिखामणिप्रणयिनी शास्त्राणि चक्षुर्नवं
भक्तिर्भूतपतौ पिनाकिनि पदं लङ्केति दिव्या पुरी।
उत्पत्तिर्द्रुहिणान्वये च तदहो नेदृग्वरो लभ्यते
स्याच्चेदेष न रावणः क्व नु पुनः सर्व्वत्र सर्व्वे गुणाः" ॥

अत्र न रावण इत्येतावतैव समाप्यं।

"हीरकाणां निधेरस्य सिन्धोः किं वर्णयामहे"।

अत्र रत्नानां निधेरित्यविशेष एव वाच्यः।

"आवर्त्त एव नाभिस्ते नेत्रे नीलसरोरुहे।
तरङ्गा वलयस्तेन त्वं लावण्याम्बुवापिका" ॥

अत्रावर्त्त एवेति नियमो न वाच्यः।

"यान्ति नीलनिचोलिन्यो रजनीष्वभिसारिकाः"।

अत्र तमिस्रास्विति रजनीविशेषो वाच्यः।

"आपातसुरसे भोगे निमग्नाः किं न कुर्व्वते"।

अत्र आपात एवेति नियमो वाच्यः। ननु वाच्यस्यानभिधाने "व्यतिक्रमलवम्" इत्यादावपेरभावः इह चैवकारस्येति कोऽनयोर्भेदः। अत्राह। नियमस्यावचनमेव पृथग्भूतं नियमपरिवृत्तेर्विषय इति। तन्न। तथात्वेऽपि द्वयोः शब्दार्थदोषतायां नियामकाभावात्। तत् का गतिरिति चेत् "व्यतिक्रमलवमित्यादौ" शब्दोच्चारणानन्तरमेव दोषप्रतिभासः इह त्वर्थप्रत्ययानन्तरमिति भेदः। एवञ्च शब्दपरिवृत्तिसहत्वासहत्वाभ्यां पूर्व्वैराहृतोऽपि शब्दार्थदोषविभाग एवं पर्य्यवस्यति। यो दोषः शब्दपरिवृत्त्यसहः स शब्ददोष एव। यश्च पदार्थान्वयप्रतीतिपूर्व्वबोध्यः सोऽपि शब्ददोषः। यस्त्वर्थप्रतीत्यनन्तरबोध्यः सोऽर्थाश्रय इति। एवं चानियमपरिवृत्तत्वादेरप्यधिकपदत्वादेर्भेदो बोद्धव्यः। अमतपरार्थत्वे तु "राममन्मथशरेणेत्यादौ" नियमेन वाक्यव्यापित्वाभिप्रायाद्वाक्यदोषता। अश्लीलत्वादौ तु न नियमेन वाक्यव्यापित्वं।

"आनन्दितस्वपक्षोऽसौ परपक्षान् हनिष्यति"।

अत्र परपक्षं हत्वा स्वपक्षमानन्दयिष्यतीति विधेयं।

"चक्कीशचूडाभरण चन्द्र लोकतमोपह।
विरहिप्राणहरण कदर्थय न मां वृथा"॥

अत्र विरहिप्ताणहरणेति तृतीयपादस्यार्थो नानुवाद्यः।

"लग्नं रागावृताङ्ग्या सुदृढमिह ययैवासि यष्टारिकण्ठे
मातङ्गानामपीहोपरि परपुरुषैर्या च दृष्टा पतन्ती।

तत्सङ्कोऽयं न किञ्चिद्गणयति विदितं तेऽस्तु तेनास्मि दत्ता
भृत्येभ्यः श्रीनियोगाद्गदितुमिति गतेवाम्बुधिं यस्य कीर्त्तिः"॥

अत्र विदितं तेऽस्त्वित्यनेन समापितमपि वचनं तेनेत्यादि पुनरुपात्तं॥ अथ रसदोषानाह।

(५७७) रसस्योक्तिः स्वशब्देन स्थायिसञ्चारिणोरपि।
परिपन्थिरसाङ्गस्य विभावादेः परिग्रहः॥
आक्षेपः कल्पितः कृच्छ्रादनुभावविभावयोः।
अकाण्डे प्रथनच्छेदौ तथा दीप्तिः पुनः पुनः॥
अङ्गिनोऽननुसन्धानमनङ्गस्य च कीर्त्तनं।
अतिविस्तृतिरङ्गस्य प्रकृतीनां विपर्य्ययः।
अर्थानौचित्यमन्यच्च दोषा रसगता मताः॥

रसस्य स्वशब्दो रसशब्दः शृङ्गारादिशब्दश्च। क्रमेण यथा।

"तामुद्वीक्ष्य कुरङ्गाक्षीं रसो न कोऽप्यजायत।
चन्द्रमण्डलमालोक्य शृङ्गारे मग्नमन्तरं"॥

स्थायिभावस्य स्वशब्दवाच्यत्वं यथा।

"अजायत रतिस्तस्यास्त्वयि लोचनगोचरे"।

व्यभिचारिणः स्वशब्दवाच्यत्वं यथा।

"जाता लज्जावती मुग्धा प्रियस्य परिचुम्बने"।

अत्र प्रथमे पादे "आसीन्मुकुलिताक्षी सेति" लज्जाया अनुभावमुखेन कथने युक्तः पाठः।

"मानं मा कुरु तन्वङ्गि ज्ञात्वा यौवनमस्थिरं"।

अत्र यौवनास्थैर्य्यनिवेदनं शृङ्गाररसस्य परिपन्थिनः शान्तरसस्याङ्गं शान्तस्यैव च विभाव इति शृङ्गारे तत्परिग्रहो न युक्तः।

"धवलयति शिशिररोचिषि भुवनतलं लोकलोचनानन्दे।
ईषत्क्षिप्तकटाक्षा स्मेरमुखी सा निरीक्ष्यतां तन्वी"॥

अत्र रसस्योद्दीपनालम्बनविभावावनुभावपर्य्यवसायिनौ स्थिताविति कष्टकल्पना।

"परिहरति रतिं मतिं लुनीते
स्खलतितरां परिवर्त्तते च भूयः।
इति वत विषमा दशास्य देहं
परिभवति प्रसभं किमत्र कुर्म्मः"॥

अत्र रतिपरिहारादीनां करुणादावपि सम्भवात् कामिनीरूपो विभावः क्लेशादाक्षेप्यः। अकाण्डे प्रथनं यथा। वेणीसंहारे द्वितीयेऽङ्के प्रवर्त्तमानानेकवीरसङ्क्षये काले दुर्य्योधनस्य भानुमत्या सह शृङ्गारप्रथनं। छेदो यथा वीरचरिते। राघवभार्गवयोर्द्धाराधिरूढे सङ्ग्रामे "कङ्कणमोचनाय गच्छामीति" राघवस्योक्तिः। पुनःपुनर्द्दीप्तिर्यथा। कुमारसम्भवे रतिविलापे। अङ्गिनोऽननुसन्धानं यथा। रत्नावल्यां चतुर्थेऽङ्के बाभ्रव्या गमने सागरिकाया विस्मृतिः। अनङ्गस्य कीर्त्तनं यथा। कर्पूरमञ्जर्य्यां राजनायिकयोः स्वयं कृतं वसन्तस्य वर्णनमनादृत्य वन्दिवर्णितस्य प्रशंसा। अङ्गस्यातिविस्तृतिर्यथा। किराते

सुराङ्गनाविलासादिः। प्रकृतयो दिव्या अदिव्या दिव्यादिव्याश्चेति। तेषां धीरोदात्तादिता तेषामप्युत्तमाधममध्यमत्वं। तेषु च यो यथाभूतस्तस्यायथावर्णने प्रकृतिविपर्य्ययो दोषः। यथा। धीरोदात्तस्य रामस्य धीरोद्धतवत् छद्मना वालिवधः। यथा वा कुमारसम्भवे। उत्तमदेवतयोः पार्व्वतीपरमेश्वरयोः सम्भोगशृङ्गारवर्णनं। "इदं पित्रोः सम्भोगवर्णनमिवात्यन्तमनुचितं" इत्याहुः। अन्यदनौचित्यं देशकालादीनामन्यथा यद्वर्णनं। तथा सति हि काव्यस्यासत्यताप्रतिभासेन विनेयानामुन्मुखीकारासम्भवः।

(५७८) एभ्यः पृथगलङ्कारदोषाणां नैव सम्भवः।

एभ्यः उक्तदोषेभ्यः। तथा हि उपमायामसादृश्यासम्भवयोरुपमानस्य जातिप्रमाणगतन्यूनत्वाधिकत्वयोरर्थान्तरन्यासे उत्प्रेक्षितार्थसमर्थने चानुचितार्थत्वं। क्रमेण यथा।

"ग्रथ्नामि काव्यशशिनं विततार्थरश्मिं"।

"प्रज्वलज्जलधारावत् निपतन्ति शरास्तव"।

"चण्डाल इव राजासौ सङ्ग्रामेऽधिकसाहसः"।

"कर्पूरखण्ड इव राजति चन्द्रबिम्बं"।

"हरनीलकण्ठोऽयं विराजति शिखावलः"।

"स्तनावद्रिसमानौ ते"।

"दिवाकराद्रक्षति यो गुहासु
लीनं दिवाभीतमिवान्धकारं।

क्षुद्रेऽपि नूनं शरणं प्रपन्ने
ममत्वमुच्चैः शिरसामतीव" ॥

एवमादिषूक्तविपरीतार्थस्यापरस्याभूततथैव प्रतिभासनं स्वरूपमित्यनुचितमेव तत्समर्थनं । यमकस्य पादत्रयगतत्वाप्रयुक्तत्वं दोषः । यथा ।

"सहसा लिङ्गनैः स्निग्धैः सहसा कुञ्जमन्दिरं ।
उदिते रजनीनाथे सहसा याति सुन्दरी" ॥

उत्प्रेक्षायां यथा शब्दस्योत्प्रेक्षाद्योतकत्वे ऽवाचकत्वं । यथा ।

"एष मूर्त्तो यथा धर्म्मः क्षितिपो रक्षति क्षितिं" ।

एवमनुप्रासे वृत्तिविरुद्धस्य प्रतिकूलवर्णत्वं । यथा । "अोवट्ट इ उल्लट्ट इ इत्यादौ" । उपमायाश्च साधारणधर्म्मस्याधिक्यन्यूनत्वयोरधिकपदत्वं न्यूनपदत्वञ्च । क्रमेणोदाहरणं ।

"अयमुद्योतितवा भाति शम्भुर्भूतिसितद्युतिः ।
विद्युतेव शरन्मेघो नीलवारिदखण्डधृक्" ॥

अत्र भगवतो नीलकण्ठत्वस्याप्रतिपादनाच्चतुर्थपादोऽधिकः ।

"कमलालिङ्गितसारहारहारी मुरं द्विषन् ।
विद्युद्विभूषितो नीलजीमूत इव राजते" ॥

अत्रोपमानस्य सबलाकत्वं वाच्यं । अस्यामेवोपमानोपमेययोर्लिङ्गवचनभेदस्य कालपुरुषविध्यादिभेदस्य च भग्नप्रक्रमत्वं । क्रमेणोदाहरणं । "सुधेव विमलश्चन्द्रः" । "ज्योत्स्ना इव सिता कीर्त्तिः" ।

"कापशिखा तयोरासीद्व्रजतोः शुद्धवेशयोः ।

हिमनिर्म्मुक्तयोर्योगे चित्राचन्द्रमसोरिव" ॥

अत्र तथाभूतचित्राचन्द्रमसोः शोभा न खल्वासीत् अपि तु सर्व्वदापि भवति। "असेव राजसे तन्वि"। अत्र असा राजसे त्वं तु राजसे।

"चिरं जीवतु ते सूनुर्मार्कण्डेयमुनिर्यथा"।

अत्र मार्कण्डेयमुनिर्जीवत्येव न खल्वेतदस्य जीवत्वित्यनेन विधेयं। इह तु यत्र लिङ्गवचनभेदेऽपि न साधारणधर्म्मस्यान्यथाभावस्तत्र न दोषः। क्रमेणोदाहरणं। "मुखं चन्द्र इवाभाति"।

"तद्वेशोऽसदृशोऽन्याभिः स्त्रीभिर्मधुरता भृतः।
दधते स्म परां शोभां तदीया विभ्रमा इव" ॥

पूर्व्वोदाहरणेषूपमानोपमेययोरेकस्यैव साधारणधर्म्मेणान्वयसिद्धेः प्रक्रान्तस्यार्थस्य स्फुटोऽनिर्व्वाहः। एवमनुप्राप्ते वैफल्यस्यापुष्टार्थत्वं। यथा।

"अनणुरणन्मणिमेखलमविरतशिञ्जानमञ्जुमञ्जीरं।
परिसरणमरुणचरणे रणरणकमकारणं कुरुते" ॥

एवं समासोक्तौ साधारणविशेषणवशात् परार्थस्य प्रतीतावपि पुनस्तस्य शब्देनोपादानमप्रस्तुतप्रशंसायां व्यञ्जनयेव प्रस्तुतार्थावगतेः शब्देन तदभिधानस्य च पुनरुक्तत्वं। क्रमेणोदाहरणं।

"अनुरागवन्तमपि लोचनयोर्दधतं वपुः सुखमतापकरं
निरकासयद्रविमपेतवसुं वियदालयादपरदिग्गणिका"।

अत्रापरदिगित्येतावतैव तस्या गणिकात्वं प्रतीयते।

"आहूतेषु विहङ्गमेषु मशको नायात् पुरो वार्य्यते
मध्ये वा धुरि वा वसंस्तृणमणिर्धत्ते मणीनां धुरं।
खद्योतोऽपि न कम्पते प्रचलितुं मध्येऽपि तेजस्विनां
धिक् सामान्यमचेतनं प्रभुमिवानामृष्टतत्त्वान्तरं"॥

अत्राचेतनस्य प्रभोरभिधानमनुचितं। एवमनुप्रासे प्रसिद्ध्यभावस्य ख्यातविरुद्धत्वं। यथा।

"चक्राधिष्ठिततां चक्री गोत्रं गोत्रभिदुच्छ्रितं।
वृषं वृषभकेतुश्च प्रायच्छन्नस्य भूभुजः"॥

उक्तदोषाणाञ्च क्वचिददोषत्वं क्वचिद्गुणत्वमित्याह।

(५७९) वक्तरि क्रोधसंयुक्ते तथा वाच्ये समुद्धते।
रौद्रादौ तु रसेऽत्यन्तं दुःश्रवत्वं गुणो भवेत्॥

एषु चास्वादस्वरूपविशेषात्मकतया मुख्यगुणप्रकर्षोपकारित्वाद्गुण इति व्यपदेशो भाक्तः। क्रमेण यथा।

"तद्विच्छेदकृशस्य कण्ठलुठितप्राणस्य मे निर्दयं
क्रूरः पञ्चशरः शरैरतिशितैर्भिन्दन् मनो निर्भरं।
शम्भोर्भूतकृपाविधेयमनसः प्रोद्दाममेत्रानल-
ज्वालाजालकरालितः पुनरसौ मास्तां स्वमस्वात्मना"॥

अत्र शृङ्गारे कुपितो वक्ता।

"मूर्द्धव्याधूयमानध्वनदमरधुनीलोलकल्लोलजालो-
द्भूताम्भःक्षोदरम्भात् प्रसभमभिनभःक्षिप्तनक्षत्रलक्षं।

ऊर्द्धन्यस्ताङ्घ्रिदण्डभ्रमिभवरभसोद्यन्नभस्वत्प्रवेश-
भ्राम्यब्रह्माण्डखण्डं प्रवितरतु शिवं शाम्भवं ताण्डवं वः" ॥

अत्रोद्धततताण्डवं वाच्यं। इमे पद्ये मम। रौद्रादिरसे
त्वेतद्विततयापेक्षयापि दुःश्रवत्वमत्यन्तं गुणः। यथा। "उत्कृत्योत्कृत्य कृत्तिमित्यादि"। अत्र वीभत्सो रसः।

(५८०) सुरतारम्भगोष्ठ्यादावश्लीलत्वं तथा पुनः।

तथा पुनरिति गुण एव। यथा।

"करिहस्तेन सम्बाधे प्रविश्यान्तर्विलोडिते।
उपसर्पन् ध्वजः पुंसः साधनान्तर्विराजते" ॥

अत्र हि सुरतारम्भगोष्ठ्यां "द्व्यर्थैः पदैः पिशुनयेच्च रहस्यवस्त्विति" कामशास्त्रस्थितिः। आदिशब्दात् शमकथाप्रभृतिषु बोद्धव्यं।

(५८१) स्यातामदोषौ श्लेषादौ निहतार्थाप्रयुक्तते।

यथा।

"पर्व्वतभेदि पवित्रं जैत्रं नरकस्य बहुमतङ्गहनं।
हरिमिव हरिमिव हरिमिव सुरसरिदम्भः पतन्नमत" ॥

अत्रेन्द्रपक्षे पवित्रशब्दो निहतार्थः। सिंहपक्षे मतङ्गशब्दो मातङ्गार्थेऽप्रयुक्तः।

(५८२) गुणः स्यादप्रतीतत्वं ज्ञत्वं चेद्वक्तृवाच्ययोः।

यथा।

"तामामनन्ति प्रकृतिं पुरुषार्थप्रवर्त्तिनीम्।
तद्दर्शनमुदासीनं त्वामेव पुरुषं विदुः" ॥

(५८३) स्वयं वापि परामर्षे

अप्रतीतत्वं गुण इत्यनुषज्यते। यथा।

"युक्तः कलाभिस्तमसां विवृद्धौ क्षीणश्च ताभिः क्षयये च एषां।
मुद्रं निरालम्बपदावलम्बं तमात्मचन्द्रं परिशीलयामि" ॥

(५८४) कथितञ्च पदं पुनः।
विहितस्यानुवाद्यत्वे विषादे विस्मये क्रुधि ॥
दैन्येऽथ लाटानुप्रासेऽनुकम्पायां प्रसादने।
अर्थान्तरसङ्क्रमितवाच्ये हर्षेऽवधारणे ॥

गुण इत्येव यथा। "उदेति सविता ताम्र इत्यादि" ॥ अत्र विहितानुवादः।

"हन्त हन्त गतः कान्तो वसन्ते सखि नागतः"।

अत्र विषादः।

"चित्रं चित्रमनाकाशे कथं सुमुखि चन्द्रमाः"।

अत्र विस्मयः।

"सुनयने नयने निधेहीति"

अत्र लाटानुप्रासः। "नयने तस्यैव नयने चेति" आद्रावर्थान्तरसङ्क्रमितवाच्यो ध्वनिः। एवमन्यत्र।

(५८५) सन्दिग्धत्वं तथा व्याजस्तुतिपर्य्यवसायि चेत्।

गुण इत्येव यथा।

"पृथुकार्त्तस्वरपात्रं भूषितनिःशेषपरिजनं देव।
विलसत्करेणुगहनं सम्प्रति सममावयोः सदनं" ॥

(५८५) वैयाकरणमुख्ये तु प्रतिपाद्येऽथ वक्तरि।
कष्टत्वं दुःश्रवत्वं वा

गुण इत्येव। यथा।

"दीधीवेवीसमः कश्चिद्गुणवृद्ध्योरभाजनं।
क्विप्प्रत्ययनिभः कश्चिद्यत्र सन्निहिते न ते" ॥

अत्रार्थः कष्टः वैयाकरणस्य वक्ता। एवमस्य प्रतिपाद्यत्वेऽपि।

"अधातार्थमुपाध्याय त्वामहं न कदाचन"।

अत्र दुःश्रवत्वं। वैयाकरणो वाच्यः। एवमस्य वक्तृत्वेऽपि।

(५८७) ग्राम्यत्वमधमोक्तिषु।

गुण इत्येव। यथा मम।

"एसो ससहरबिम्बो दीसइ हेअङ्गवीणपिण्डो व्व।
एए अ अस्ससमोहा पडन्ति आसासु दुद्धधार व्व" * ॥

इयं विदूषकोक्तिः।

(५८८) निर्हेतुता तु ख्यातेऽर्थे दोषतां नैव गच्छति।

यथा।

"सम्प्रति सन्ध्यासमयश्चक्रद्वन्द्वानि विघटयति"।

---

* एष शशधरबिम्बो दृश्यते हैयङ्गवीनपिण्ड इव। एते चास्य मयूखाः पतन्त्याशासु दुग्धधारा इव॥ सं०॥ टी०॥

(५८९) कवीनां समये ख्याते गुणः ख्यातविरुद्धता।

कविसमयख्यातानि च।

(५९०)मालिन्यं व्योम्नि पापे यशसि धवलता वर्ण्यते हासकीर्त्त्योः
रक्तौ च क्रोधरागौ सरिदुदधिगतं पङ्कजेन्दीवरादि।
तोयाधारेऽखिलेऽपि प्रसरति च मरालादिकः पक्षिसङ्घो
ज्योत्स्ना पेया चकोरैर्जलधरसमये मानसं यान्ति हंसाः॥
पादाघातादशोकं विकशति वकुलं योषितामास्यमद्यै-
र्यूनामङ्गेषु हाराः स्फुटति च हृदयं विप्रयोगस्य तापैः।
मौर्वी रोलम्बमाला धनुरथ विशिखाः कौसुमाः पुष्पकेतो-
र्भिन्नं स्यादस्य वाणैर्युवजनहृदयं स्त्रीकटाक्षेण तद्वत्॥
अह्न्यम्भोजं निशायां विकसति कुमुदं चन्द्रिका शुक्लपक्षे
मेघध्वानेषु नृत्यं भवति च शिखिनां नाप्यशोके फलं स्यात्।
न स्याज्जाती वसन्ते न च कुसुमफले गन्धसारद्रुमाणा-
मित्याद्युन्नेयमन्यत् कविसमयगतं सत्कवीनां प्रबन्धे॥

एषामुदाहरणान्याकरेषु स्पष्टानि।

(५९१) धनुर्ज्यादिषु शब्देषु शब्दास्तु धनुरादयः।

आरूढत्वादिबोधाय यथा।

"पूरिता रोदसी ध्वानैर्धनुर्ज्यास्फालनोद्भवैः"।

अत्र ज्याशब्देनापि गतार्थत्वे धनुःशब्देन ज्याया धनुरारूढ-
त्वीकरणं बोध्यते। आदिशब्दात् "भाति कर्णावतंसस्ते"। अत्र

कर्णस्थितत्वबोधनाय कर्णशब्दः। एवं श्रवणकुण्डलशिरःशेखर-प्रभृतिः। एवं निरुपपदो मालाशब्दः पुष्पस्रजमेवाभिधत्त इति स्थितावपि। "पुष्पमाला विभाति ते"। अत्र पुष्पशब्द उत्कृष्ट-पुष्पबुद्ध्यै। एवं मुक्ताहार इत्यत्र मुक्ताशब्देनान्यरत्नामिश्रितत्वं।

(५९२) प्रयोक्तव्याः स्थिता अमी।

धनुर्ज्यादयः शब्दाव्यवस्थिता एव निबद्धव्याः न लक्षिता अघमकाञ्चीकरकङ्कणादयः।

(५९३) उक्तावानन्दमग्नादेः स्यान्न्यूनपदता गुणः।
यथा।

"गाढालिङ्गनवामनीकृतकुचप्रोद्भिन्नरोमोद्गमा
सान्द्रस्नेहरसातिरेकविगलच्छ्रीमन्नितम्बाम्बरा।
मा मा मानद माति मामलमिति क्षामाक्षरोल्लापिनी
सुप्ता किं नु मृता नु किं मनसि मे लीना विलीना नु किं"॥

अत्र पीडयेति न्यूनं।

(५९४) क्वचिन्न दोषो न गुणः

न्यूनपदत्वमित्येव। यथा।

"तिष्ठेत्कोपवशात् प्रभावपिहिता दीर्घं न सा कुप्यति
स्वर्गायोत्पतिता भवेन्मयि पुनर्भावार्द्रमस्या मनः।
तां हर्तुं विबुधद्विषोऽपि न च मे शक्ताः पुरोवर्त्तिनीं
सा चात्यन्तमगोचरं नयनयोर्यातेति कोऽयं विधिः"॥

अत्र "प्रभावपिहितेति" "भवेदिति" चेत्यनन्तरं "नैत-द्यत" इति पदानि न्यूनानि। एषां पदानां न्यूनतायामप्येतद्वा-

व्यञ्जकस्य वितर्काख्यव्यभिचारिभावस्योत्कर्षाकरणात् गुणः दीर्घ न सेत्यादिवाक्यजन्यया च प्रतिपत्त्या तिष्ठेदित्यादिवाक्य-प्रतिपत्तेर्बाधः स्फुटमेवावभासत इति न दोषः।

(५९५) गुणः क्वाप्यधिकं पदं।

यथा।

"आचरति दुर्ज्जनो यत्सहसा मनसोऽप्यगोचरानर्थान्।
तन्न न जाने जाने स्पृशति मनः किन्तु नैव निष्ठुरतां"॥

अत्र न न जाने इत्यनेनायोगव्यवच्छेदः। द्वितीये जाने इत्यनेनाहमेव जाने इत्यन्ययोगव्यवच्छेदादिश्छिन्निविशेषः।

(५९६) समाप्तपुनरात्तत्वं न दोषो न गुणः क्वचित्।

यथा। "अन्यास्ता गुणरत्नेत्यादि"। अत्र प्रथमार्द्धेन वाक्य-समाप्तावपि द्वितीयार्द्धवाक्यं पुनरुपात्तं। एवञ्च विशेषणमात्रस्य पुनरुपादाने समाप्तपुनरात्तत्वं न वाक्यान्तरस्येति विज्ञेयं।

(५९७) गर्भितत्वं गुणः क्वापि

यथा।

"दिग्मातङ्गघटाविभक्तचतुराघाटा मही साध्यते
सिद्धा सापि वदन्त एव हि वयं रोमाञ्चिताः पश्यत।
विप्राय प्रतिपाद्यते किमपरं रामाय तस्मै नमो
यस्मात् प्रादुरभूत् कथाद्भुतमिदं यत्रैव चास्तं गतं"।

अत्र वदन्त एवेत्यादि वाक्यं वाक्यान्तरप्रवेशात् चमत्का-रातिशयं पुष्णाति।

(५९८) पतत्प्रकर्षता तथा।

तथेति कश्चित् गुणः। यथा। "चञ्चद्भुजेत्यादि"। अत्र चतुर्थपादे सुकुमारार्थतया शब्दाडम्बरत्यागो गुणः।

(५९९) क्वचिदुक्तौ स्वशब्देन न दोषो व्यभिचारिणः।
अनुभावविभावाभ्यां रचना यत्र नोचिता॥

यत्र विभावानुभावमुखेन प्रतिपादने विशदप्रतीतिर्नास्ति यत्र च विभावानुभावकृतपुष्टिराहित्यमेवानुगुणं तत्र व्यभिचारिणः स्वशब्देनोक्तौ न दोषः। यथा।

"औत्सुक्येन कृतत्वरा सह भुवा व्यावर्त्तमाना ह्रिया
तैस्तैर्बन्धुवधूजनस्य वचनैर्नीताभिमुख्यं पुनः।
दृष्ट्वाग्रे वरमात्तसाध्वसरसा गौरी नवे सङ्गमे।
संरोहत्पुलका हरेण हसता श्लिष्टा शिवायास्तु वः"॥

अत्रौत्सुक्यस्य त्वरारूपानुभावमुखेन प्रतिपादनेन झटिति प्रतीतिः। त्वराया भयादिनापि सम्भवात् ह्रियोऽनुभावस्य च व्यावर्त्तनस्य कोपादिनापि सम्भवः। साध्वसहासयोस्तु विभावादिपरिपोषस्य प्रकृतरसप्रतिकूलप्रायत्वादित्येषां स्वशब्दाभिधानमेव न्याय्यं।

(६००) सञ्चार्य्यादेर्विरुद्धस्य बाध्यत्वेन वचो गुणः।

"क्वाकार्य्यं शशलक्ष्मणः क्व च कुलमित्यादि"।

अत्र प्रशमाङ्गानां वितर्कमतिशङ्काधृतीनामभिलाषाङ्गौत्सुक्यस्मृतिदैन्यचिन्ताभिस्तिरस्कारः पर्य्यन्ते चिन्ताप्रधानमास्वादप्रकर्षमाविर्भावयति।

(६०१) विरोधिनोऽपि स्मरणे साम्येन वचनेऽपि वा।
भवेद्विरोधो नान्योन्यमङ्गिन्यङ्गत्वमाप्तयोः ॥

क्रमेण यथा। "अयं स रसनोत्कर्षीत्यादि"। अत्रालम्बनविच्छेदेन रतेररसात्मतया स्मर्यमाणानां तदङ्गानां शोकोद्दीपकतया करुणानुकूलता।

"सरागया स्रुतघनघर्मतोयया
कराहतिध्वनितपृथूरुपीठया।
मुहुर्मुहुर्दशनविलङ्घितोष्ठया
रुषा नृपाः प्रियतमयेव भेजिरे" ॥

अत्र सम्भोगशृङ्गारो वर्णनीयस्य वीरव्यभिचारिणः क्रोधस्यानुभावसाम्येन विवक्षितः।

"एकं ध्याननिमीलनान्मुकुलितप्रायं द्वितीयं पुनः
पार्वत्या वदनाम्बुजस्तनभरे सम्भोगभावालसं।
अन्यद्दूरविकृष्टचापमदनक्रोधानलोद्दीपितं
शम्भोर्भिन्नरसं समाधिसमये नेत्रत्रयं पातु वः" ॥

अत्र शान्तशृङ्गाररौद्रपरिपुष्टा भगवद्विषया रतिः। यथा वा।

"क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोंऽशुकान्तं
गृह्णन् केशेष्वपास्तश्चरणनिपतितो नेक्षितः सम्भ्रमेण।
आलिङ्गन् योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः
कामीवार्द्रापराधः स दहतु दुरितं शाम्भवो वः शराग्निः" ॥

अत्र कविगता भगवद्विषया रतिः प्रधानं। तस्याः परिपोषकतया भगवतस्त्रिपुरविध्वंसं प्रत्युत्साहस्यापरिपुष्टतया रस-

पदवीमप्राप्ततया भावमात्रस्य करुणोऽङ्गं। तस्य च कामीवेति साम्यबलादायातः शृङ्गारः। एवञ्चाविश्रान्तिधामतया करुणस्याप्यङ्गतैवेति द्वयोरपि करुणशृङ्गारयोर्भगवद्वत्साहपरिपुष्टतद्विषयरतिभावास्वादप्रकर्षकतया यौगपद्यसद्भावादङ्गत्वेन न विरोधः। ननु समूहालम्बनात्मकपूर्णघनानन्दस्वरूपस्य रसस्य च तादृशेनेतररसेन कथं विरोधः सम्भावनीयः। एकवाक्ये निवेशप्रादुर्भावयौगपद्यविरहेण परस्परोपमर्द्दकत्वानुपपत्तेः। नाप्यङ्गाङ्गिभावः। द्वयोरपि पूर्णतया स्वातन्त्र्येण विश्रान्तेः। सत्यमुक्तं। अत एवात्र प्रधानेतरेषु रसेषु स्वातन्त्र्यविश्रामराहित्यात् पूर्णरसभावमात्राच्च विलक्षणतया सञ्चारिरसनाम्ना व्यपदेशः प्राच्यानां। असत्यितामहानुजकविपण्डितमुख्यश्रीचण्डीदासपादानान्तु खण्डरसनाम्ना। यदाहुः।

"अङ्गं बाध्योऽथ संसर्गी यद्यङ्गी स्याद्रसान्तरे।
नास्वाद्यते समग्रं यत्ततः खण्डरसः स्मृत इति"॥

ननु "आद्यः करुणबीभत्सरौद्रवीरभयानकैः" इत्युक्तनयेन विरोधिनोर्वीरशृङ्गारयोः कथमेकत्र।

"कपोले जानक्याः करिकलभदन्तद्युतिमुषि
स्मरस्मेरस्फारोड्डमरपुलकं वक्त्रकमलं।
मुहुः पश्यन् शृण्वन् रजनिचरसेनाकलकलं
जटाजूटग्रन्थिं द्रढयति रघूणां परिवृढः"॥

इत्यादौ समावेशः। अत्रोच्यते। इह खलु रसानां विरोधिताया अविरोधितायाश्च त्रिधा व्यवस्था। कयोश्चिदालम्ब-

नैक्येन कयोश्चिदाश्रयैक्येन कयोश्चिन्नैरन्तर्य्येण इति। तत्र वीरशृङ्गारयोरालम्बनैक्येन विरोधः। तथा हास्यरौद्रवीभत्सैः सम्भोगस्य। वीरकरुणरौद्रादिभिर्विप्रलम्भस्य। आलम्बनैक्येन आश्रयैक्येन च वीरभयानकयोः। नैरन्तर्य्यविभावैक्याभ्यां शान्तशृङ्गारयोः। त्रिधाप्यविरोधो वीरस्याद्भुतरौद्राभ्यां। शृङ्गारस्याद्भुतेन। भयानकस्य वीभत्सेनेति। तेनात्र वीरशृङ्गारयोर्भिन्नालम्बनत्वान्न विरोधः। एवञ्च वीरस्य नायकनिष्ठत्वेन भयानकस्य प्रतिनायकनिष्ठत्वेन निबन्धे भिन्नाश्रयत्वेन विरोधः। यच्च नागानन्दे प्रशमाश्रयस्यापि जीमूतवाहनस्य मलयवत्यनुरागो दर्शितः। तत्र "अहो गीतमहो वादित्रमिति" अद्भुतस्यान्तरानिवेशनान्नैरन्तर्य्याभावान्न शान्तशृङ्गारयोर्विरोधः। एवमन्यदपि विज्ञेयं। "पाण्डु क्षामं वदनं" इत्यादौ च पाण्डुतादीनामङ्गभावः करुणविप्रलम्भेऽपीति न विरोधः।

(६०२) अनुकारे च सर्व्वेषां दोषाणां नैव दोषता।

सर्व्वेषां दुःश्रवत्वप्रभृतीनां। यथा।

"एष दुश्च्यवनं नौमीत्यादि जल्पति कश्चन"।

अत्र दुश्च्यवनशब्दोऽप्रयुक्तः।

(६०३) अन्येषामपि दोषाणामित्यौचित्यान्मनीषिभिः।
अदोषतापगुणता ज्ञेया चानुभयात्मता॥

अनुभयात्मता अदोषगुणात्मता।

इति साहित्यदर्पणे दोषनिरूपणो नाम सप्तमः परिच्छेदः॥

---

गुणानाह।

(६०४) रसस्याङ्गित्वमाप्तस्य धर्म्माः शौर्य्यादयो यथा।

गुणाः यथा खल्वङ्गित्वमाप्तस्यात्मन उत्कर्षहेतुत्वात् शौर्य्यादयो गुणशब्दवाच्याः तथा काव्येऽङ्गित्वमाप्तस्य रसस्य धर्म्माः स्वरूपविशेषाः माधुर्य्यादयोऽपि। स्वसमर्पकपदसन्दर्भस्य काव्यव्यपदेशस्यौपायिकानुगुणभाज इत्यर्थः। यथा चैषां सरमाचस्य धर्म्मत्वं तथा दर्शितं।

(६०५) एवं माधुर्य्यमोजोऽथ प्रसाद इति ते त्रिधा।

ते गुणाः। तत्र।

(६०६) चित्तद्रवीभावमयो ह्लादो माधुर्य्यमुच्यते।

यत्तु केनचिदुक्तं "माधुर्य्यं द्रुतिकारणमिति" तन्न। द्रवीभावस्यास्वादस्वरूपाह्लादाभिन्नत्वेन तत्कार्य्यत्वाभावात्। द्रवीभावश्च स्वाभाविकानाविष्टत्वात्मककाठिन्यमन्युक्रोधादिकृतदीप्तत्वविस्मयहासाद्युपहितविक्षेपपरित्यागेन रत्याद्याकारानुविद्धानन्दोद्बोधेन सहृदयचित्तार्द्रप्रायत्वं। तच्च।

(६०७) सम्भोगे करुणे विप्रलम्भे शान्तेऽधिकं क्रमात्।

सम्भोगादिशब्दा उपलक्षणानि। तेन सम्भोगाभासादिष्वप्येतस्य स्थितिर्ज्ञेया।

(६०८) मूर्द्ध्नि वर्गान्त्यवर्णेन युक्ताष्टठडढान् विना।

रणौ लघू च तद्व्यक्तौ वर्णाः कारणतां गताः ॥
अवृत्तिरल्पवृत्तिर्वा मधुरा रचना तथा।

यथा।

"अनङ्गमङ्गलभुवस्तदपाङ्गस्य भङ्गयः।
जनयन्ति मुहुर्यूनामन्तःसन्तापसन्ततिम्" ॥

यथा वा मम।

"लताकुञ्जं गुञ्जन्मदवदलिपुञ्जं चपलयन्
समालिङ्गन्नङ्गं द्रुततरमनङ्गं प्रबलयन्।
मरुन्मन्दं मन्दं दलितमरविन्दं तरलय-
न्रजोवृन्दं विन्दन् किरति मकरन्दं दिशि दिशि" ॥

(६०९) ओजश्चित्तस्य विस्ताररूपं दीप्तत्वमुच्यते।
वीरबीभत्सरौद्रेषु क्रमेणाधिक्यमस्य तु ॥

अस्य ओजसः। अत्रापि वीरादिशब्दा उपलक्षणानि तेन वीराभासादावप्यस्यावस्थितिः।

(६१०) वर्गस्याद्यतृतीयाभ्यां युक्तौ वर्णौ तदन्तिमौ।
उपर्य्यधो द्वयोर्वा सरेफाष्टठडढैः सह ॥
शकारश्च षकारश्च तस्य व्यञ्जकतां गताः।
तथा समासो बहुलो घटनौद्धत्यशालिनी ॥

यथा "चञ्चद्भुजेत्यादि"।

(६११) चित्तं व्याप्नोति यः क्षिप्रं शुष्केन्धनमिवानलः।
स प्रसादः समस्तेषु रसेषु रचनासु च ॥

व्याप्नोति आविष्करोति।

(६१२) शब्दास्तद्व्यञ्जका अर्थबोधकाः श्रुतिमात्रतः।

यथा।

"सूचीमुखेन सकृदेव कृतव्रणस्त्वं
मुक्ताकलाप लुठसि स्तनयोः प्रियायाः।
बाणैः स्मरस्य शतशो विनिकृत्तमर्म्मा
स्वप्नेऽपि तां कथमहं न विलोकयामि"॥

(६१३) एषां शब्दगुणत्वञ्च गुणवृत्त्योच्यते बुधैः।

शरीरस्य शौर्य्यादिगुणयोग इवेति शेषः।

(६१४) श्लेषः समाधिरौदार्य्यं प्रसाद इति ये पुनः।
गुणाश्चिरन्तनैरुक्ता ओजस्यन्तर्भवन्ति ते॥

ओजसि भक्त्या ओजःपदवाच्ये शब्दार्थधर्म्मविशेषे तत्र श्लेषो बहूनामपि पदानामेकपदवद्भासनात्मा। यथा।

"उन्मज्जज्जलकुञ्जरेन्द्ररभसास्फालानुबन्धोद्धतः
सर्व्वाः पर्व्वतकन्दरोदरभुवः कुर्व्वन् प्रतिध्वानिनीः।
उच्चैरुच्चरति ध्वनिः श्रुतिपथोन्माथी यथाऽयन्तथा
प्रायःप्रेङ्खदसङ्ख्यशङ्खधवला वेलेयमुद्गच्छति"॥

अयं बन्धवैकट्यात्मकत्वादोज एव। समाधिरारोहावरोहक्रमरूपः। आरोह उत्कर्षः। अवरोहोऽपकर्षस्तयोः क्रमो वैरस्यानावहो विन्यासः॥ यथा "चञ्चद्भुजेत्यादि"। अत्र पादत्रये क्रमेण बन्धस्य गाढता। चतुर्थपादे त्वपकर्षः। तत्रापि च तीव्र-

प्रयत्नोऽवार्य्यतया श्रोजस्विता। उदारता विकटत्वलक्षणा। विकटत्वञ्च पदानां नृत्यत्प्रायत्वं। यथा।

"स्वचरणविनिविष्टैर्नूपुरैर्नर्त्तकीनां
झणितिरणितमासीत्तत्र चित्रं कलञ्च"।

अत्र च तत्मतानुसारेण रसानुसन्धानमन्तरेणैव अर्थप्रौढो-क्तिमात्रेणौजः। प्रसाद श्रोजोमिश्रितशैथिल्यात्मा। यथा।

"यो यः शस्त्रं बिभर्त्ति स्वभुजगुरुमदः पाण्डवीनां चमूनां
यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा।
यो यस्तत्कर्म्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपः
क्रोधान्धस्तस्य तस्य स्वयमिह जगतामन्तकस्यान्तकोऽहं"॥

(६१५) माधुर्य्यव्यञ्जकत्वं यदसमासस्य दर्शितं।
पृथक् पदत्वं माधुर्य्यं तेनैवाङ्गीकृतं पुनः॥

यथा। "श्वासान्मुञ्चतीत्यादि"।

(६१६) अर्थव्यक्तेः प्रसादाख्यगुणेनैव परिग्रहः।
अर्थव्यक्तिः पदानां हि झटित्यर्थसमर्पणं॥

स्पष्टमुदाहरणं।

(६१७) ग्राम्यदुःश्रवतात्यागात् कान्तिश्च सुकुमारता।

अङ्गीकृतेति सम्बन्धः। कान्तिरौज्ज्वल्यं। तच्च ग्रामिकादि-पदन्यासवैपरीत्येनालौकिकशोभाशालित्वं। सुकुमारता अपा-रुष्यं। अनयोरुदाहरणे स्पष्टे।

(६१८) क्वचिद्दोषस्तु समता मार्गाभेदस्वरूपिणी।
अन्यथोक्तगुणेष्वस्या अन्तःपातो यथायथं॥

मसृणेन विकटेन वा मार्गेणोपक्रान्तस्य सन्दर्भस्य तेनैव परिनिष्ठानं मार्गाभेदः स च क्वचिद्दोषः। तथा हि।

"अच्यूतांशुसमूढपाणिजठराभोगस्य विभ्रद्वपुः
पारीन्द्रः शिशुरेष पाणिपुटके सम्मातु कियावता।
उद्यद्दुर्द्धरगन्धसिन्धुरशतप्रोद्दामदानार्णव-
स्रोतःशोषणरोषणात् पुनरितः कल्पाग्निरल्पायते"॥

अत्रोद्धतेऽर्थे वाच्ये सुकुमारबन्धत्यागो गुण एव। अनेवंविधस्थले माधुर्य्यादावेवान्तःपातः। यथा "लताकुञ्जं गुञ्जन्दित्यादि"।

(६१९) ओजः प्रसादो माधुर्य्यं सौकुमार्य्यमुदारता।
तदभावस्य दोषत्वात् स्वीकृता अर्थगा गुणाः॥

ओजः साभिप्रायत्वरूपं। प्रसादोऽर्थवैमल्यं। माधुर्य्यमुक्तिवैचित्र्यं। सौकुमार्य्यमपारुष्यं। उदारता अग्राम्यत्वं। एषाञ्च पञ्चानामप्यर्थगुणानां यथाक्रममपुष्टार्थाधिकपदानवीकृतामङ्गलरूपाश्लीलग्राम्यतानां निराकरणेनैवाङ्गीकारः। स्पष्टान्युदाहरणानि।

(६२०) अर्थव्यक्तिः स्वभावोक्त्यलङ्कारेण तथा पुनः।
रसध्वनिगुणीभूतव्यङ्ग्याभ्यां कान्तिनामकः॥

अङ्गीकृत इति सम्बन्धः। अर्थव्यक्तिर्वस्तुस्वभावस्फुटत्वं। कान्तिर्दीप्तरसत्वं। स्पष्टे उदाहरणे।

(६२१) श्लेषो विचित्रतामात्रमदोषः समतापरं।

श्लेषः क्रमकौटिल्यानुल्वणत्वोपपत्तियोगरूपघटनात्मा। तत्र क्रमः क्रियासन्ततिः। विदग्धचेष्टितं कौटिल्यं। अप्रसिद्धवर्णनाविरहोऽनुल्वणत्वं। उपपादकयुक्तिविन्यास उपपत्तिः। एषां योगः सम्मेलनं स एव रूपं यस्या घटनायास्तद्रूपः श्लेषो वैचित्र्यमात्रं। अनन्यसाधारणरसोपकारित्वातिशयविरहादिति भावः। यथा।

"दृष्टैकासनसंस्थिते प्रियतमे इत्यादि"।

अत्र दर्शनादयः क्रियाः। उभयसमर्थनरूपं कौटिल्यं। लोकसंव्यवहाररूपमनुल्वणत्वं। "एकासनसंस्थिते, पश्चादुपेत्य, नयने निमील्य, ईषद्वक्रितकन्धर, इति चोपपादकानि, एषां योगः। अनेन च वाच्योपपत्तिग्रहणव्यग्रतया रसास्वादो व्यवहितप्राय इत्यस्यागुणता समता च। प्रक्रान्तप्रकृतिप्रत्ययविपर्य्यासेनार्थस्य विसम्वादिता विरहः। स च प्रक्रमभङ्गरूपदोषविरह एव। स्पष्टमुदाहरणं।

(६२२) न गुणत्वं समाधेश्च

समाधिश्चायोन्यच्छायायोनिरूपद्विविधार्थदृष्टिरूपः। तत्रायोनिरर्थो यथा।

"सद्योमुण्डितमत्तहूणचिबुकप्रस्पर्द्धिनारङ्गकं"।

अन्यच्छायायोनिर्यथा।

"निजनयनप्रतिबिम्बैरम्बुनि बहुशः प्रतारिता कापि।
नीलोत्पलेऽपि विमृशति करमर्पयितुं कुसुमलावी"॥

अत्र नीलोत्पलनयनयोरतिप्रसिद्धं सादृश्यं विच्छित्तिविशेषेण निबद्धं। अस्य चासाधारणशोभानाधायकत्वान्न गुणत्वं किन्तु काव्यशरीरमात्रनिवर्त्तकत्वं। क्वचिच्चन्द्रमित्येकस्मिन् पदार्थे वक्तव्ये"अत्रेर्नयनसमुत्थं ज्योतिरिति"वाक्यवचनं। क्वचित् "निदाघशीतलहिमकालोष्णसुकुमारशरीरावयवा योषिदिति" वाक्यार्थे वक्तव्ये "वरवर्णिनीति" पदाभिधानं। क्वचित् "एकस्य वाक्यार्थस्य किञ्चिद्विशेषनिवेशादनेकैर्वाक्यैरभिधानमित्येवंरूपो व्यासः। क्वचिद्बहुवाक्यप्रतिपाद्यस्यैकवाक्येनाभिधानमित्येवंरूपः समासश्च" इत्येवमादीनामन्येदक्तानां न गुणत्वमुचितं अपि तु वैचित्र्यमात्रावहत्वं।

(६२३) तेन नार्थगुणाः पृथक्।

तेनोक्तप्रकारेण। अर्थगुणा ओजःप्रभृतयः प्रोक्ताः॥

इति साहित्यदर्पणे गुणविवेचनो नामाष्टमः परिच्छेदः॥

---

अथोद्देशक्रमप्राप्तमस्यालङ्कारनिरूपणं बहुवक्तव्यत्वेनोल्लङ्घ्य रीतिमाह।

(६२४) पदसङ्घटना रीतिरङ्गसंस्थाविशेषवत्।
उपकर्त्री रसादीनां

रसादीनामर्थात् शब्दार्थशरीरस्य काव्यस्यात्मभूतानां।

(६२५) सा पुनः स्याच्चतुर्विधा।
वैदर्भी चाथ गौडी च पाञ्चाली लाटिका तथा॥

सा रीतिः। तत्र।

(६२६) माधुर्य्यव्यञ्जकैर्वर्णैरचना ललितात्मिका।
अवृत्तिरल्पवृत्तिर्वा वैदर्भीरीतिरिष्यते॥

यथा। "अनङ्गमङ्गलभुव इत्यादि"। रुद्रटस्त्वाह
"असमस्तैकसमस्ता युक्ता दशभिर्गुणैश्च वैदर्भी।
वर्गद्वितीयबहुला स्वल्पप्राणाक्षरा च सुविधेया"।
अत्र दशगुणास्तन्मतोक्ताः श्लेषादयः।

(६२७) ओजःप्रकाशकैर्वर्णैर्बन्ध आडम्बरः पुनः।
समासबहुला गौडी

यथा "चञ्चद्भुजेत्यादि"। पुरुषोत्तमस्त्वाह। "बहुतरसमासयुक्ता सुमहाप्राणाक्षरा च गौडीया। रीतिरनुप्रासमहिमपरतन्त्रास्तोभवाक्या च"।

(६२८) वर्णैः शेषैः पुनर्द्वयोः ।
समस्तपञ्चषपदो बन्धः पाञ्चालिका मता ॥

द्वयोर्वैदर्भीगौड्योः । यथा ।

"मधुरया मधुबोधितमाधवीमधुसमृद्धिसमेधितमेधया ।
मधुकराङ्गनया मुहुरुन्मदध्वनिभृता निभृताक्षरमुज्जगे" ॥

भोजस्त्वाह ।

"समस्तपञ्चषपदामोजःकान्तिसमन्विताम् ।
मधुरां सुकुमाराञ्च पाञ्चालीं कवयो विदुः" ॥

(६२९) लाटी तु रीतिर्वैदर्भीपाञ्चाल्योरन्तरा स्थिता ।

यथा ।

"अयमुदयति मुद्राभञ्जनः पद्मिनीना-
मुदयगिरिवनालीबालमन्दारपुष्पं ।
विरहविधुरकोकद्वन्द्वबन्धुर्विभिन्दन्
कुपितकपिकपोलक्रोडताम्रस्तमांसि" ॥

कश्चिदाह ।

"मृदुपदसमाससुभगा युक्तैर्वर्णैर्नचातिभूयिष्ठा ।
उचितविशेषणपूरितवस्तुन्यासा भवेल्लाटी" ॥

अन्ये त्वाहुः ।

"गौडी डम्बरबन्धा स्यात् वैदर्भी ललितक्रमा ।
पाञ्चाली मिश्रभावेन लाटी तु मृदुभिः पदैः" ॥

(६३०) क्वचित्तु वक्त्राद्यौचित्यादन्यथा रचनादयः ।

वक्त्रादीत्यादिशब्दाद्वाच्यप्रबन्धौ । रचनादीत्यादिशब्दाद्वृत्तिवर्णौ । तत्र वक्त्रौचित्याद्यथा । "मन्थायस्तार्णवाम्भ" इत्यादि । अत्र वाच्यस्य क्रोधाद्यव्यञ्जकत्वेऽपि भीमसेनवक्तृत्वेनोद्धता रचनादयः । वाच्यौचित्याद्यथोदाहृते । "मूर्द्धव्याधूयमानेत्यादौ" ॥ प्रबन्धौचित्याद्यथा नाटकादौ । रौद्रेऽप्यभिनयप्रतिकूलत्वेन न दीर्घसमासादयः । एवमाख्यायिकायां शृङ्गारेऽपि न मसृणवर्णादयः । कथायां रौद्रेऽपि नात्यन्तमुद्धताः । एवमन्यदपि ज्ञेयं ॥

इति साहित्यदर्पणे रीतिविवेको नाम नवमः परिच्छेदः ॥

---

अथावसरप्राप्तामलङ्कारानाह।

(६३१) शब्दार्थयोरस्थिरा ये धर्म्माः शोभातिशायिनः।
रसादीनुपकुर्व्वन्तोऽलङ्कारास्तेऽङ्गदादिवत्॥

यथा अङ्गदादयः शरीरशोभातिशायिनः शरीरिणमुपकुर्व्वन्ति तथानुप्रासोपमादयः शब्दार्थशोभातिशायिनो रसादेरुपकारका ये तेऽलङ्कारा अस्थिरा इति नैषां गुणवदावश्यकी स्थितिः। शब्दार्थयोः प्रथमं शब्दस्य बुद्धिविषयत्वात शब्दालङ्कारेषु वक्तव्येषु शब्दार्थालङ्कारस्यापि पुनरुक्तवदाभासस्य चिरन्तनैः शब्दालङ्कारमध्ये लक्षितत्वात् प्रथमं तमेवाह।

(६३२) आपाततो यदर्थस्य पौनरुक्त्यावभासनं।
पुनरुक्तवदाभासः स भिन्नाकारशब्दगः॥

उदाहरणं।

"भुजङ्गकुण्डली व्यक्तशशिशुभ्रांशुशीतगुः।
जगन्त्यपि सदापायादव्याच्चेतोहरः शिवः"॥

अत्र भुजङ्गकुण्डल्यादिशब्दानां आपातमात्रेण सर्पाद्यर्थतया पौनरुक्त्यप्रतिभासनं। पर्य्यवसाने तु भुजङ्गरूपं कुण्डलं विद्यते यस्येत्याद्यन्यार्थत्वं। पायादव्यादित्यत्र क्रियागतोऽयमलङ्कारः। पायादित्यस्यापायादित्यत्र पर्य्यवसानात्। भुजङ्गकुण्डलीतिशब्दयोः प्रथमस्यैव परिवृत्तिसहत्वं*। हरः शिव इति द्वितीयस्यैव। शशिशुभ्रांशु इति द्वयोरपि। "भाति सदा न त्याग इति" नद-

* पर्य्यायशब्दोपादानेऽपि प्रकृतोपयोगित्वं॥ टी०।

योरपीति शब्दपरिवृत्तिसहत्वासहत्वाभ्यां शब्दोभयालङ्कारत्वं।

(६३३) अनुप्रासः शब्दसाम्यं वैषम्येऽपि स्वरस्य यत्।

स्वरमात्रेऽपि सादृश्यं वैचित्र्याभावान्न गणितं। रसाद्यनुगतत्वेन प्रकर्षेण न्यासोऽनुप्रासः।

(६३४) छेको व्यञ्जनसङ्घस्य सकृत् साम्यमनेकधा।

छेकश्छेकानुप्रासः। अनेकधेति स्वरूपतः क्रमतश्च। रसः सर इत्यादिक्रमभेदेन सादृश्यं नास्यालङ्कारस्य विषयः। उदाहरणं मम तातपादानां।

“आदाय बकुलगन्धानन्धीकुर्व्वन् पदे पदे भ्रमरान्।
अयमेति मन्दमन्दं कावेरीवारिपावनः पवनः”॥

अत्र गन्धानन्धीति संयुक्तयोः कावेरीवारीत्यसंयुक्तयोः पावनः पवन इति बहूनां व्यञ्जनानां सकृदावृत्तिः। छेको विदग्धः। तत्प्रयोज्यत्वादेष छेकानुप्रासः।

(६३५) अनेकस्यैकधा साम्यमसकृद्वाप्यनेकधा।
एकस्य सकृदप्येष वृत्त्यनुप्रास उच्यते॥

एकधा स्वरूपत एव न तु क्रमतोऽपि। अनेकधा स्वरूपतः क्रमतश्च। सकृदपीत्यपिशब्दादसकृदपि। उदाहरणं।

“उन्मीलन्मधुगन्धलुब्धमधुपव्याधूतचूताङ्कुर-
क्रीडत्कोकिलकाकलीकलकलैरुद्गीर्णकर्णज्वराः।
नीयन्ते पथिकैः कथं कथमपि ध्यानावधानक्षण-
प्राप्तप्राणसमासमागमरसोल्लासैरमी वासराः”॥

अत्र रसोल्लासैरमी इति रसयोरेकधैव साम्यं। न तु तेनैव क्रमेणापि। द्वितीये पादे तु कलयोरसकृत्। तेनैव क्रमेण च प्रथमे एकस्य तकारस्य सकृत् धकारस्य चासकृत्। रसविषय-व्यापारवती वर्णरचना वृत्तिस्तदनुगतत्वेन प्रकर्षेण न्यसनाद्वृ-त्त्यनुप्रासः।

(६३६) उच्चार्य्यत्वाद्यदेकत्र स्थाने तालुरदादिके।
सादृश्यं व्यञ्जनस्यैव श्रुत्यनुप्रास उच्यते॥

उदाहरणं।

"दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः।
विरूपाक्षस्य जयिनीस्ताः स्तुमो वामलोचनाः"॥

अत्र "जीवयन्तीति" "या इति" "जयिनीरिति" अत्र जकारयकारयोरेकत्र स्थाने तालौ उच्चार्य्यत्वात् सादृश्यं। एवं दन्त्यकण्ठ्यानामप्युदाहार्य्यं। एष च सहृदयानामतीव श्रुति-सुखावहत्वाच्छ्रुत्यनुप्रासः।

(६३७) व्यञ्जनं चेद्यथावस्थं सहाद्येन स्वरेण तु।
आवर्त्त्यतेऽन्त्ययोज्यत्वादन्त्यानुप्रास एव तत्॥

"यथावस्थमिति" यथा सम्भवमनुस्वारविसर्गस्वरयुक्ता-क्षरविशिष्टं। एष च प्रायेण पादस्य पदस्य चान्ते प्रयोज्यः। पादान्तगो यथा मम।

"केशः काशस्तवकविकाशः कायः प्रकटितकरभविलासः।
चक्षुर्दग्धवराटककल्पं त्यजति न चेतः काममनल्पं"॥

पदाभ्यासो यथा।

"मन्दं हसन्तः पुलकं वहन्त इत्यादि"।

(६३८) शब्दार्थयोः पौनरुक्त्यं भेदे तात्पर्य्यमात्रतः।
लाटानुप्रास इत्युक्तः

उदाहरणं।

"स्मेरराजीवनयने नयने किं निमीलिते।
पश्य निर्ज्जितकन्दर्पं कन्दर्पवशगं प्रियं"॥

अत्र विभक्त्यर्थस्यापौनरुक्त्येऽपि मुख्यतरस्य प्रातिपदिकांशद्योत्यधर्म्मिरूपस्याभिन्नार्थत्वा लाटानुप्रासत्वमेव। "नयने तस्यैव नयने च" अत्र द्वितीयनयनशब्दो भाग्यवत्त्वादिगुणविशिष्टत्वरूपतात्पर्य्यमात्रेण भिन्नार्थः। यथा वा।

"यस्य न सविधे दयिता दवदहनस्तुहिनदीधितिस्तस्य।
यस्य च सविधे दयिता दवदहनस्तुहिनदीधितिस्तस्य"॥

अत्रानेकपदानां पौनरुक्त्यं। एष च प्रायेण लाटजनप्रियत्वाल्लाटानुप्रासः।

(६३९) अनुप्रासः पञ्चधा ततः।

स्पष्टं।

(६४०) सत्यर्थे पृथगर्थायाः स्वरव्यञ्जनसंहतेः।
क्रमेण तेनैवावृत्तिर्यमकं विनिगद्यते॥

अत्र द्वयोरपि पदयोः क्वचित्सार्थकत्वं क्वचिन्निरर्थकत्वं। क्वचिदेकस्य सार्थकत्वमपरस्य निरर्थकत्वमत उक्तं सत्यर्थ इति।

तेनैव क्रमेणेति दमो मोद इत्यादेर्विभक्तविषयत्वं सूचितं। एतच्च पदपादार्द्धश्लोकावृत्तित्वेन पादाद्यावृत्तेश्चानेकविधतया प्रभूततमभेदं। दिङ्मात्रमुदाह्रियते।

"नवपलाशपलाशवनं पुरः
स्फुटपरागपरागतपङ्कजं।
मृदुलतान्तलतान्तमलोकयत्
ससुरभिं सुरभिं सुमनोभरैः" ॥

अत्र पदावृत्तिः पलाशपलाशेति। सुरभिं सुरभिमित्यत्र च द्वयोः सार्थकत्वं। लतान्तलतान्तेत्यत्र प्रथमस्य निरर्थकत्वं। परागपरागेत्यत्र द्वितीयस्य। एवमन्यत्राप्युदाहार्य्यं।

"यमकादौ भवेदैक्यं डलोर्व्वबोर्लरोस्तथा"।

इत्युक्तनयात् "भुजलतां जडतामबलाजन" इत्यत्र न यमकत्वहानिः।

(६४१) अन्यस्यान्यार्थकं वाक्यमन्यथा योजयेद्यदि।
अन्यः श्लेषेण काक्वा वा सा वक्रोक्तिस्ततो द्विधा ॥

द्विधेति श्लेषवक्रोक्तिः काकुवक्रोक्तिश्च। क्रमेणोदाहरणं।

"के यूयं स्थल एव सम्प्रति वयं प्रश्नो विशेषाश्रयः
किं ब्रूते विहगः स वा फणिपतिर्यत्रास्ति सुप्तो हरिः।
वामा यूयमहो विडम्बरसिकः कीदृक् स्मरो वर्त्तते
येनास्मासु विवेकशून्यमनसः पुंस्वेव योषिद्भ्रमः"।

अत्र विशेषपदस्य विः पक्षी शेषो नाग इति अर्थद्वययोगात् सभङ्गश्लेषः। अन्यत्र तु अभङ्गः।

"काले कोकिलवाचाले सहकारमनोहरे।
कृतागसः परित्यागात्तस्याश्चेतो न दूयते"॥

अत्र कथाचित् सख्या निषेधार्थे नियुक्तो नञ्, अन्यथा काका दूयत एवेति विध्यर्थे घटितः।

(६४२) शब्दैरेकविधैरेव भाषासु विविधास्वपि।
वाक्यं यत्र भवेत् सोऽयं भाषासम इतीष्यते॥

यथा मम।

"मञ्जुलमणिमञ्जीरे कलगम्भीरे विहारसरसीतीरे।
विरसासि केलिकीरे किमालि धीरे च गन्धसारसमीरे"॥

एष श्लोकः संस्कृतप्राकृतसौरसेनीप्राच्यावन्तीनागरापभ्रंशेष्वेकविध एव।

"सरसं कइण कव्वमित्यादौ" तु *।

सरसमित्यत्र संस्कृतप्राकृतयोः साम्येऽपि वाक्यगतत्वाभावे वैचित्र्याभावान्नायमलङ्कारः।

(६४३) श्लिष्टैः पदैरनेकार्थाभिधाने श्लेष इष्यते।
वर्णप्रत्ययलिङ्गानां प्रकृत्योः पदयोरपि॥
श्लेषाद्विभक्तिवचनभाषाणामष्टधा च सः।

* सरसं कवेः काव्यमिति संस्कृतटीका।

क्रमेणोदाहरणं ।

"प्रतिकूलतामुपगते हि विधौ
विफलत्वमेति बहुसाधनता ।
अवलम्बनाय दिनभर्त्तुरभून्-
न पतिष्यतः करसहस्रमपि" ॥

अत्र विधाविति विधुविधिशब्दयोरुकारेकारयोर्वर्णयोरौ-काररूपत्वात् श्लेषः ।

"किरणा हरिणाङ्कस्य दक्षिणश्च समीरणः ।
कान्तोत्सङ्गजुषां नूनं सर्व्व एव सुधाकिरः" ॥

अत्र "सुधाकिर इति" क्विप्कप्रत्यययोः । किञ्चात्र बहु-वचनैकवचनयोरैकरूप्याद्वचनश्लेषोऽपि ।

"विकसन्नेत्रनीलाब्जे तथा तन्व्याः स्तनद्वयी ।
तव दत्तां सदा मोदं लसत्तरलहारिणी" ॥

अत्र नपुंसकस्त्रीलिङ्गयोः श्लेषो वचनश्लेषोऽपि ।

"अयं सर्व्वाणि शास्त्राणि हृदि ज्ञेषु च वक्ष्यति ।
सामर्थ्यकृदमित्राणां मित्राणाञ्च नृपात्मजः" ॥

अत्र वक्ष्यतीति वहिवच्योः सामर्थ्यकृदिति कृन्ततिकरोत्योः प्रकृत्योः ।

"पृथु कार्त्तस्वरपात्रमित्यादि" ।

अत्र पदभङ्गे विभक्तिसमासयोरपि वैलक्षण्यात् पदश्लेषो न तु प्रकृतिश्लेषः । एवञ्च ।

"नीतानामाकुलीभावं लुब्धैर्भूरिशिलीमुखैः ।

सद्वृत्ते वनसङ्कुलानां कमलानां तदीक्षणे" ॥

अत्र सुधांशुश्लीमुखादिशब्दानां श्लिष्टत्वेऽपि विभक्तेरभेदात् प्रकृतिश्लेषः। अन्यथा सर्व्वत्र पदश्लेषप्रसङ्गः।

"सर्व्वस्वं हर सर्व्वस्य त्वं भवच्छेदतत्परः।

नयोपकारसांमुख्यमायासि तनुवर्त्तनं" ॥

अत्र हर इति पक्षे शिवसम्बोधनमिति सुप्। पक्षे च हृधातोस्तिङिति विभक्तिः। एवं भवेत्यादौ अस्य च भेदस्य प्रत्ययश्लेषेणापि गतार्थत्वे प्रत्ययान्तराणां सुबन्ततिङन्तगतत्वेन विच्छित्तिविशेषाश्रयणात् पृथगुक्तिः।

"महदे सुरसन्धम्मे तमव समासङ्गमागमाहरणे।

हर बहुसरणं तं चित्तमोहमवसर उमे सहसा" ॥

अत्र। संस्कृतमहाराष्ट्र्योः।

## (६४४) पुनस्त्रिधा सभङ्गोऽथाभङ्गस्तदुभयात्मकः ॥

एतद्भेदत्रयश्च उक्तभेदाष्टके यथा सम्भवं ज्ञेयं। यथा वा।

"येन ध्वस्तमनोभवेन बलिजित्कायः पुरा स्त्रीकृतो

यश्चोद्वृत्तभुजङ्गहारवलयो गङ्गाञ्च योऽधारयत्।

यस्याहुः शशिमच्छिरो हर इति स्तुत्यञ्च नामामराः

पायात् स स्वयमन्धकक्षयकरस्त्वां सर्व्वदोमाधवः" ॥

अत्र "येन ध्वस्तेत्यादौ" सभङ्गश्लेषः। "अन्धकेत्यादौ" अभङ्गः। अनयोस्त्वेकत्र सम्भवात् सभङ्गाभङ्गात्मको ग्रन्थगौरवभयात् पृथङ्नोदाहृतः। इह केचिदाहुः "सभङ्गश्लेष एव शब्द-

श्लेषविषयः। यत्रोदात्तादिस्वरभेदाद्भिन्नप्रयत्नोच्चार्य्यत्वेन भिन्नयोः शब्दयोर्जतुकाष्ठन्यायेन श्लेषः। सभङ्गस्तु अर्थश्लेष एव। यत्र स्वराभेदादभिन्नप्रयत्नोच्चार्य्यतया शब्दाभेदादर्थयोरेकवृन्तगतफलद्वयन्यायेन श्लेषः, यो हि यदाश्रितः स तदलङ्कार एव, अलङ्कार्य्यालङ्करणभावस्य लोकवदाश्रयाश्रयिभावेनोपपत्तिरिति" तदन्ये न मन्यन्ते, तथा ह्यत्र ध्वनिगुणीभूतव्यङ्ग्यदोषगुणालङ्काराणां शब्दार्थगतत्वेन व्यवस्थितेरन्वयव्यतिरेकानुविधायित्वेन नियम इति। न च "अब्धकचयेत्यादौ" शब्दाभेदः। "अर्थभेदेन शब्दभेद" इति दर्शनात्। किञ्चात्र शब्दस्यैव मुख्यतया वैचित्र्यबोधोपायत्वेन कविप्रतिभयोट्टङ्कणात् शब्दालङ्कारत्वमेव। विसदृशशब्दद्वयस्य बन्धे चैवंविधस्य वैचित्र्यस्याभावाद् वैचित्र्यस्यैव चालङ्कारत्वादर्थमुखप्रेक्षितया चार्थालङ्कारत्वेऽनुप्रासादीनामपि रसादिपरत्वेनार्थमुखप्रेक्षितयार्थालङ्कारत्वप्रसङ्गः। शब्दस्याभिन्नप्रयत्नोच्चार्य्यत्वेनार्थालङ्कारत्वे "प्रतिकूलतामुपगते हि विधावित्यादौ" शब्दभेदेऽप्यर्थालङ्कारत्वं तवापि प्रसज्यतीत्युभयत्रापि शब्दालङ्कारत्वमेव। यत्र तु शब्दपरिवर्त्तनेऽपि न श्लेषत्वखण्डना तत्र।

"लोकेनोन्नतिमायाति लोकेनायात्यधोगतिं।
अहो सुसदृशी वृत्तिस्तुलाकोटेः खलस्य च"॥

इत्यादावर्थश्लेषः। "अस्य चालङ्कारान्तरविविक्तविषयताया असम्भवात् विद्यमानेष्वलङ्कारान्तरेष्वपवादत्वेन तद्बाधकतया तत्प्रतिभोत्पत्तिहेतुत्वमिति" केचित्। इत्थमत्र विचार्य्यते

समासोक्त्यप्रस्तुतप्रशंसादौ द्वितीयार्थस्यानभिधेयतया नास्य गन्धोऽपि "विद्वन्मानसहंसेत्यादौ" श्लेषगर्भे रूपकेऽपि मानसशब्दस्य चित्तसरोरूपोभयार्थत्वेऽपि रूपकेण श्लेषो बाध्यते। सरोरूपस्यैवार्थस्य विश्रामधामतया प्राधान्यात्। श्लेषे ह्यर्थद्वयस्यापि समकक्षत्वं "सन्निहितबालान्धकारा भास्वन्मूर्त्तिश्चेत्यादौ" विरोधाभासेऽपि विरुद्धार्थस्य प्रतिभातमात्रस्य प्ररोहाभावान्न श्लेषः। एवं पुनरुक्तवदाभासेऽपि। तेन "येन ध्वस्तेत्यादौ" प्राकरणिकयोर्नीतानामित्यादावप्राकरणिकयोरेकधर्म्माभिसम्बन्धात् तुल्ययोगितायां।

"स्वेच्छोपजातविषयोऽपि न याति वक्तुं
देहीति मार्गणशतैश्च ददाति दुःखं।
मोहात् समुत्क्षिपति जीवनमप्यकाण्डे
कष्टं प्रसूनविशिखः प्रभुरल्पबुद्धिः॥"

इत्यत्र प्राकरणिकाप्राकरणिकयोरेकधर्म्माभिसम्बन्धाद्दीपके।

"सकलकलं पुरमेतज्जातं सम्प्रति सुधांशुबिम्बमिवेत्यादौ" चोपमायां विद्यमानायामपि श्लेषस्यैतद्विषयपरिहारेणासम्भवात्। एषाञ्च श्लेषविषयपरिहारेणापि स्थितेः। एतद्विषये श्लेषस्य प्राबल्येन चमत्कारित्वप्रतीतेश्च श्लेषेणैव व्यपदेशो भवितुं युक्तः, अन्यथा तद्व्यपदेशस्य सर्व्वथाऽभावप्रसङ्गाच्चेति। अत्रोच्यते न तावत् परमार्थतः श्लेषस्यालङ्कारान्तराविविक्तविषयता। "येन ध्वस्तेत्यादिना" विविक्तविषयत्वात्, न चात्र तुल्ययोगिता, तस्याश्च द्वयोरप्यर्थयोर्वाच्यत्वनियमाभावात्। अत्र हि माधवोमाधव-

योरेकस्य वाच्यत्वनियमेऽपरस्य व्यङ्ग्यत्वं स्यात्। किञ्च तुल्ययोगितायामेकस्यैव धर्म्मस्यानेकधर्म्मिसम्बद्धतया प्रतीतिः इह त्वनेकेषां धर्म्मिणां पृथक् पृथक् धर्म्मसम्बद्धतया। "सकलकलेत्यादौ" च नोपमाप्रतिभोत्पत्तिहेतुः श्लेषः। पूर्णोपमाया निर्विषयत्वापत्तेः। "कमलमिव मुखं मनोज्ञमेतदित्याद्यस्ति पूर्णोपमाविषय इति चेन्न। यदि "सकलेत्यादौ" शब्दश्लेषतया नोपमा तत् किमपराद्धं "मनोज्ञमित्यादावर्थश्लेषेण स्फुटमर्थालङ्कारावेतावुपमासमुच्चयौ, किन्तु "आश्रित्य शब्दमात्रं सामान्यमिहापि सम्भवतः" इति रुद्रटोक्तदिशा गुणक्रियासाम्यवच्छब्दसाम्यस्याप्युपमाप्रयोजकत्वात्। ननु गुणक्रियासाम्यस्यैव उपमा प्रयोजकता युक्ता तत्र साधर्म्म्यस्य वास्तवत्वात्, शब्दसाम्यस्य तु न तथा तत्र साधर्म्म्यस्यावास्तवत्वात्, ततश्च पूर्णोपमाया अन्यथानुपपत्तेर्गुणक्रियासाम्यस्यैवार्थश्लेषविषयतापरित्यागे पूर्णोपमाविषयता युक्ता न तु "सकलेत्यादौ" शब्दसाम्यस्येति चेन्न। साधर्म्म्यमुपमेत्येवाविशिष्टस्य उपमालक्षणस्य शब्दसाम्याद्व्यावृत्तेरभावात्। यदि च शब्दसाम्ये साधर्म्म्यमवास्तवत्वान्नोपमाप्रयोजकं तदा कथं "विद्वन्मानसेत्यादौ" आधारभूते चित्तादौ सरोवराद्यारोपो राजादेर्हंसाद्यारोपरूपरूपकप्रयोजकः। किञ्च यदि वास्तवसाम्य एवोपमाङ्गीकार्य्या तदा कथं त्वयापि "सकलकलेत्यादौ" बाध्यभूतोपमाङ्गीक्रियते। किञ्चात्र श्लेषस्यैव साम्यनिर्व्वाहकता न तु साम्यस्य श्लेषनिर्व्वाहकता, श्लेषबन्धतः प्रथमं साम्यस्यासम्भवादित्युपमाया एवाङ्गित्वेन व्यपदेशो न्या-

त्वात्। "प्रधानेन व्यपदेशा भवन्ती" त्युक्तनयात्। ननु शब्दालङ्कारविषयेऽङ्गाङ्गिभावसङ्करो नाङ्गीक्रियते तत् कथमत्र श्लेषोपमयोरङ्गाङ्गिभावः सङ्कर इति चेन्न। अर्थानुसन्धानविरहिण्यनुप्रासादावेव तथानङ्गीकारात्। एवं दीपकादावपि ज्ञेयं।

"सत्पक्षा मधुरगिरः प्रसाधिताशा मदोद्धतारम्भाः।
निपतन्ति धार्त्तराष्ट्राः कालवशान्मेदिनीपृष्ठे"॥

अत्र शरद्वर्णनया प्रकरणेन धार्त्तराष्ट्रादिशब्दानां हंसाद्यर्थाभिधाने नियमात् दुर्य्योधनादिरूपोऽर्थः शब्दशक्तिमूलो वस्तुध्वनिः। इह च प्रकृतप्रबन्धाभिधेयस्य द्वितीयस्यार्थस्य सूच्यतयैव विवक्षितत्वादुपमानोपमेयभावो न विवक्षित इति नोपमाध्वनिर्न च श्लेष इति सर्व्वमवदातं।

(६४५) पद्माद्याकारहेतुत्वे वर्णानां चित्रमुच्यते।

आदिशब्दात् खड्गमुरजचक्रगोमूत्रिकादयः। अस्य च तथाविधलिपिसन्निवेशविशेषवशेन चमत्कारविधायिनामपि वर्णानां तथाविधश्रोत्राकाशसमवायविशेषवशेन चमत्कारविधायिभिर्वर्णैरभेदेनोपचाराच्छब्दालङ्कारत्वं। तत्र पद्मबन्धो यथा मम।

"मारमासुषमा चारुरुचा मारवधूत्तमा।
मात्तधूर्त्ततमावासा सा वामा मेऽस्तु मा रमा"॥

एषोऽष्टदलपद्मबन्धो दिग्दलेषु निर्गमप्रवेशाभ्यां श्लिष्टवर्णः किन्तु विदिग्दलेष्वन्यथा कर्णिकाक्षरन्तु श्लिष्टमेव। एवं खड्गबन्धादिकमप्यूह्यं।

(६४६) काव्यान्तर्गडुभूता या सा तु नेह प्रपञ्च्यते।
रसस्य परिपन्थित्वान्नालङ्कारः प्रहेलिका॥
उक्तिवैचित्र्यमात्रा सा च्युतदत्ताक्षरादिका।

च्युताक्षरा दत्ताक्षरा च्युतदत्ताक्षरा च। उदाहरणं।

"कूजन्ति कोकिलाः साले यौवने फुल्लमम्बुजं।
किं करोतु कुरङ्गाक्षी वदनेन निपीडिता"॥

अत्र "रसाल इति" वक्तव्ये "साल इति" रच्युतः। "वने" इत्यत्र "यौवन" इति यौद्दत्तः। "वदनेनेत्यत्र" "मदनेनेति" मच्युतो वो दत्तः। आदिशब्दात् क्रियाकारकगुप्त्यादयः। तत्र क्रियागुप्तिर्यथा।

"पाण्डवानां सभामध्ये दुर्य्योधन उपागतः।
तस्मै गाञ्च हिरण्यञ्च सर्व्वाण्याभरणानि च"॥

अत्र "दुर्य्योधन" इत्यत्र "अदुर्य्योऽधन इति" अदुरिति क्रिया गुप्ता। एवमन्यत्रापि। अथावसरप्राप्तेष्वर्थालङ्कारेषु प्राधान्यात् सादृश्यमूलेषु लक्षितव्येषु तेषामप्युपजीव्यत्वेन प्रथममुपमालङ्कारमाह।

(६४७) साम्यं वाच्यमवैधर्म्म्यं वाक्यैक्ये उपमाद्वयोः।

रूपकादिषु साम्यस्य व्यङ्ग्यत्वं व्यतिरेके च वैधर्म्म्यस्याप्युक्तिः उपमेयोपमायां वाक्यद्वयं अनन्वये च एकस्यैव साम्योक्तिरित्यस्याभेदः।

(६४८) सा पूर्णा यदि सामान्यधर्म्म औपम्यवाचि च ।
उपमेयं चोपमानं भवेद्वाच्यं

सा उपमा साधारणधर्म्मो द्वयोः सादृश्यहेतुगुणक्रिये मनोज्ञत्वादि, औपम्यवाचकमिवादि, उपमेयं मुखादि, उपमानं चन्द्रादि ।

(६४९) इयं पुनः ।
श्रौती यथेववाशब्दा इवार्थो वा वतिर्यदि ॥
आर्थी तुल्यसमानाद्यास्तुल्यार्थो यत्र वा वतिः ।

यथेववादयः शब्दा उपमानान्तरप्रयुक्ततुल्यादिपदसाधारणा अपि श्रुतिमात्रेणोपमानोपमेयगतसादृश्यलक्षणसम्बन्धं बोधयन्तीति तत्सद्भावे श्रौती उपमा । एवं तत्र "तत्रेवेत्यनेन" इवार्थे विहितस्य वतेरुपादाने । तुल्यादयस्तु "कमलेन तुल्यं मुखमित्यादौ" उपमेय एव । कमलं मुखस्य तुल्यमित्यादावुपमान एव । कमलं मुखञ्च तुल्यमित्यादावुभयत्रापि विश्राम्यन्तीति अर्थानुसन्धानादेव साम्यं प्रतिपादयन्तीति तत्सद्भावे आर्थी । एवं "तेन तुल्यमित्यादिना" तुल्यार्थे विहितस्य वतेरुपादाने ।

(६४९) द्वे तद्धिते समासेऽथ वाक्ये

द्वे श्रौती आर्थी च । उदाहरणं ।

"सौरभमम्भोरुहवन्मुखस्य कुम्भाविव स्तनौ पीनौ ।
हृदयं मदयति वदनं तव शरदिन्दुर्यथा बाले" ॥

अत्र क्रमेण त्रिविधा श्रौती।

"मधुरः सुधावदधरः पल्लवतुल्योऽतिपेलवः पाणिः।
चकितमृगलोचनाभ्यां सदृशी चपले च लोचने तस्याः"॥

अत्र क्रमेण त्रिविधा आर्थी।

(६५०) पूर्णा षडेव तत्।

स्पष्टं।

(६५१) लुप्ता सामान्यधर्म्मादेरेकस्य यदि वा द्वयोः।
त्रयाणां वानुपादाने श्रौत्यार्थी सापि पूर्व्ववत्॥

सा लुप्ता। तद्भेदमाह।

(६५२) पूर्णावद्धर्म्मलोपे सा विना श्रौतीन्तु तद्धिते।

सा लुप्तोपमा धर्म्मस्य साधारणगुणक्रियारूपस्य लोपे पूर्णावदिति पूर्व्वोक्तरीत्या षट्प्रकारा, किन्त्वत्र तद्धिते श्रौत्या असम्भवात् पञ्चप्रकारा। उदाहरणं।

"मुखमिन्दुर्यथा पाणिः पल्लवेन समः प्रिये।
वाचः सुधा इवोष्ठस्ते विम्बतुल्यो मनोऽश्मवत्"॥

(६५३) आधारकर्म्मविहिते द्विविधे च क्यचि क्यङि।
कर्म्मकर्त्रोर्णमुलि च स्यादेवं पञ्चधा पुनः॥

धर्म्मलोपे लुप्तेत्यनुषज्यते। क्यच्क्यङ्णमुलः कलापमते यिन्नायिणमः। क्रमेणोदाहरणं।

"अन्तःपुरीयसि रणेषु सुतीयसि त्वं
पौरं जनं तव सदा रमणीयते श्रीः।

दृष्टः प्रियाभिरमृतद्युतिदर्शमिन्दु-
सञ्चारमत्र भुवि सञ्चरसि क्षितीश" ॥

"अन्तःपुरीयसीत्यत्र" सुखविहारास्पदत्वस्य "सुतीयसीत्यत्र" स्नेहनिर्भरत्वस्य च साधारणधर्मस्य लोपः । एवमन्यत्र । इह च यथादितुल्यादिविरहात् श्रौत्यादिविशेषचिन्ता नास्ति । इदञ्च केचित् औपम्यप्रतिपादकस्य वतेर्लोपे उदाहरन्ति तदयुक्तं । क्यङादेरपि तदर्थविहितत्वेनौपम्यप्रतिपादकत्वात् । ननु क्यङादिषु सम्यगौपम्यप्रतीतिर्नास्ति प्रत्ययत्वेनास्वतन्त्रत्वात् इवादिप्रयोगाभावाच्चेति न वाच्यं । कल्पबादावपि तथा प्रसङ्गात् । न च कल्पबादीनामिवादितुल्यतयौपम्यस्य वाचकत्वं, क्यङादीनान्तु द्योतकत्वं, इवादीनामपि वाचकत्वे निश्चयाभावात् । वाचकत्वे वा समुदितं पदं वाचकं "प्रकृतिप्रत्ययौ स्वस्वार्थबोधकाविति च" मतद्वयेऽपि वत्यादिक्यङाद्योः साम्यमेवेति । यच्च केचिदाहुः "वत्यादय इवाद्यर्थानुशिष्यन्ते क्यङादयस्त्वाचारार्थे इति" तदपि न । न खलु क्यङादय आचारमात्रार्था अपि तु सादृश्याचारार्था इति । तदेवं धर्मलोपे दशप्रकारा लुप्ता ।

(६५४) उपमानानुपादाने द्विधा वाक्यसमासयोः ।

उदाहरणं ।

"तस्या मुखेन सदृशं रम्यं नास्ते न वा नयनतुल्यं" ।

अत्र मुखनयनप्रतिनिधिवस्त्वन्तरयोर्गम्यमानत्वादुपमान-

लोपः। अत्रैव च "मुखेन सदृशं" इत्यत्र "मुखं यथेदमिति" "नयनतुल्यमित्यत्र" "दृगिवेति" पाठे श्रौत्यपि सम्भवतीत्यनयोर्भेदयोः प्रत्येकं श्रौत्यार्थीत्वभेदेन चतुर्विधत्वसम्भवेऽपि प्राचीनरीत्या द्विप्रकारत्वमेवोक्तं।

(६५५) औपम्यवाचिनो लोपे समासे क्विपि च द्विधा।

क्रमेणोदाहरणं।

"वदनं मृगशावाक्ष्याः सुधाकरमनोहरं"।
"गर्द्दभति श्रुतिपरुषं व्यक्तं निनदन् महात्मनां पुरतः"॥

अत्र "गर्द्दभतीत्यत्र" औपम्यवाचिनः क्विपो लोपः। न चेह उपमेयस्यापि लोपः। "निनदन्निति" अनेनैव निर्द्देशात्।

(६५६) द्विधा समासे वाक्ये च लोपे धर्म्मोपमानयोः।

"तस्या मुखेनेत्यादौ" "रम्यमिति" स्थाने "लोके इति" पाठे ऽनयोरुदाहरणं।

(६५७) क्विप्समासगता द्वेधा धर्म्मे वादिविलोपने।

उदाहरणं। "विधवति मुखाब्जमस्याः"।

अत्र "विधवतीति" मनोहरत्वक्विप्प्रत्यययोर्लोपः। केचित्तत्रापि प्रत्ययलोपमाहुः। "मुखाब्जमिति" च समासगा।

(६५८) उपमेयस्य लोपे तु स्यादेका प्रत्यये क्यचि।

यथा।

"अरातिविक्रमालोकविकस्वरविलोचनः ।
कृपाणोदग्रदोर्दण्डः स सहस्रायुधीयति" ॥

अत्र स सहस्रायुधमिव आत्मानमाचरतीति वाक्ये उपमेयस्यात्मनो लोपः । न चेह औपम्यवाचकलोप उक्तादेव न्यायात् । अत्र केचिदाहुः सहस्रायुधेन सह "वर्त्तत इति" स सहस्रायुधः "स इवाचरतीति" वाक्यात् स सहस्रायुधीयतीति पदसिद्धौ विशेषस्य शब्दानुपपात्तत्वादिहोपमेयलोप इति तत्र विचारसहं । कर्त्तरि क्यचोऽनुशासनविरुद्धत्वात् ।

(६५९) धर्म्मोपमेयलोपेऽन्या

यथा ।

"यशसि प्रसरति भवतः क्षीरोदीयन्ति सागराः सर्व्वे" ।

अत्र क्षीरोदमिवात्मानमाचरन्तीत्युपमेय आत्मा साधारणधर्म्मः शुक्लता च लुप्तौ ।

(६६०) त्रिलोपे च समासगा ।

यथा । "राजते मृगलोचना" ।

अत्र मृगस्य लोचने इव चञ्चले लोचने यस्या इति समासे उपमाप्रतिपादकसाधारणधर्म्मोपमानानां लोपः ।

(६६१) तेनोपमाया भेदाः स्युः सप्तविंशतिसङ्ख्यकाः ।

पूर्णा षड्विधा लुप्ता चैकविंशतिविधेति मिलित्वा सप्तविंशतिप्रकारोपमा । एषु चोपमाभेदेषु मध्ये अलुप्तसाधारणधर्म्मेषु भेदेषु विशेषः प्रतिपाद्यते ।

(६६२) एकरूपः क्वचित् क्वापि भिन्नः साधारणो गुणः।
भिन्ने बिम्बानुबिम्बत्वं शब्दमात्रेण वा भिदा॥

तत्र एकरूपे यथा उदाहृतं। "मधुरः सुधावदधर इत्यादि"। बिम्बप्रतिबिम्बत्वे यथा।

"भल्लापवर्जितैस्तेषां शिरोभिः श्मश्रुलैर्महीं।
तस्तार सरघाव्याप्तैः स क्षौद्रपटलैरिव"॥

अत्र "श्मश्रुलैरित्यस्य" "सरघाव्याप्तैरिति" दृष्टान्तवत्प्रतिबिम्बनं। शब्दमात्रेण भिन्नत्वे यथा।

"स्मेरं विधाय नयनं विकसितमिव नीलमुत्पलं मयि सा।
कथयामास कृशाङ्गी मनोगतं निखिलमाकूतं"॥

अत्र एके एव स्मेरत्वविकसितत्वे प्रतिवस्तूपमावच्छब्दभेदेन निर्दिष्टे।

(६६३) एकदेशविवर्त्तिन्युपमा वाच्यत्वगम्यते।
भवेतां यत्र साम्यस्य

यथा।

"नेत्रैरिवोत्पलैः पद्मैर्मुखैरिव सरः श्रियः।
पदे पदे विभान्ति स्म चक्रवाकैः स्तनैरिव"॥

अत्र नेत्रादीनां उत्पलादिसादृश्यं वाच्यं, सरःश्रीणां स्त्रीसादृश्यं गम्यं।

(६६४) कथिता रसनोपमा।
यथोर्ध्वमुपमेयस्य यदि स्यादुपमानता॥

यथा।

"चन्द्रायते शुक्लरुचापि हंसो
हंसायते चारुगतेन कान्ता।
कान्तायते स्पर्शसुखेन वारि
वारीयते स्वच्छतया विहायः" ॥

(६६५) मालोपमा यदेकस्योपमानं बहु दृश्यते।

यथा।

"वारिजेनेव सरसी शशिनेव निशीथिनी।
यौवनेनेव वनिता नयेन श्रीर्मनोहरा" ॥

क्वचिदुपमानोपमेययोर्द्वयोरपि प्रकृतत्वं दृश्यते ॥

"हंसश्चन्द्र इवाभाति जलं व्योमतलं यथा।
विमलाः कुमुदानीव तारकाः शरदागमे ॥
अस्य राज्ञो गृहे भान्ति भूपानीता विभूतयः।
पुरन्दरस्य भवने कल्पवृक्षभवा इव" ॥

अत्रोपमेयभूतविभूतिभिः "कल्पवृक्षभवा इवेति" उपमानभूता विभूतय आक्षिप्यन्त इति आक्षेपोपमा। अत्रैव "गृहे इत्यस्य" "भवने इत्यनेन" प्रतिनिर्देशात् प्रतिनिर्देशोपमा इत्यादयश्च न लक्षिताः। एवंविधवैचित्र्यस्य सहस्रधा सन्दर्शनात्।

(६६६) उपमानोपमेयत्वमेकस्यैव त्वनन्वयः।

अर्थादेकवाक्ये। यथा।

"राजीवमिव राजीवं जलं जलमिवाजनि।
चन्द्रश्चन्द्र इवातन्द्रः शरत्समुदयोद्यमे" ॥

अत्र राजीवादीनामनन्वयवदुभयत्वप्रतिपादनार्थमुपमानोपमेयभावो वैवक्षिकः। "राजीवमिव पाथोजमिति" चास्य लाटानुप्रासादिविषयो विषयः। किन्त्वौचित्यादेकशब्दप्रयोग एव श्रेयान्। तदुक्तं।

"अनन्वये च शब्दैक्यमौचित्यादानुषङ्गिकं।
अस्मिंस्तु लाटानुप्रासे साक्षादेव प्रयोजकमिति"॥

(६६७) पर्य्यायेण द्वयोरेतदुपमेयोपमा मता।

एतदुपमानोपमेयत्वं। अर्थाद्वाक्यद्वये। यथा।

"कमलेव मतिर्मतिरिव कमला
तनुरिव विभा विभेव तनुः।
धरणीव धृतिर्धृतिरिव धरणी
सततं विभाति बत यस्य नव"॥

अत्रास्य राज्ञः श्रीसदृशादिसदृशं नान्यदस्तीत्यभिप्रायः।

(६६८) सदृशानुभवाद्वस्तुस्मृतिः स्मरणमुच्यते।

यथा।

"अरविन्दमिदं वीक्ष्य खेलत्खञ्जनमञ्जुलं।
स्मरामि वदनं तस्याश्चारु चञ्चललोचनं"॥

"मयि सकपटमित्यादौ च" स्मृतेः सादृश्यानुभवं विनोत्थापितत्वान्नायमलङ्कारः। राघवानन्दमहापात्रास्तु वैसादृश्यात् स्मृतिमपि स्मरणालङ्कारमिच्छन्ति। तत्रोदाहरणं तेषामेव यथा।

"शिरीषमृद्वी गिरिषु प्रपेदे
यदा यदा दुःखशतानि सीता ।
तदा तदास्याः सदनेषु सौख्य-
लक्षाणि दध्यौ गलदस्रु रामः" ॥

(६६९) रूपकं रूपितारोपाद्विषये निरपह्नवे ।

"रूपितेति" परिणामाद्व्यवच्छेदः । एतच्च परिणामप्रस्तावे विवेचयिष्यामः । "निरपह्नव" इत्यपह्नुतिव्यवच्छेदार्थं ।

(६७०) तत् परम्परितं साङ्गं निरङ्गमिति च त्रिधा ।

तद्रूपकं । तत्र ।

(६७१) यस्य कस्यचिदारोपः परारोपणकारणं ।
तत् परम्परितं श्लिष्टाश्लिष्टशब्दनिबन्धनं ॥
प्रत्येकं केवलं मालारूपञ्चेति चतुर्विधं ।

तत्र श्लिष्टशब्दनिबन्धनं केवलपरम्परितं यथा ।

"आहवे जगदुद्दण्डराजमण्डलराहवे ।
श्रीनृसिंहमहीपाल स्वस्त्यस्तु तव बाहवे" ॥

अत्र राजमण्डलं नृपसमूह एव चन्द्रबिम्बमित्यारोपो राजबाहोर्राहुत्वारोपे निमित्तं । मालारूपं यथा ।

"पद्मोदयदिनाधीशः सदागतिसमीरणः ।
भूभृदावलिदम्भोलिरेक एव भवान् भुवि" ॥

अत्र पद्माया उदय एव पद्मानामुदयः, सतामागतिरेव

सदागमनं, भूभृतो राजान एव पर्व्वता इत्याद्यारोपो राज्ञः सूर्य्यत्वाद्यारोपे निमित्तं। अश्लिष्टशब्दनिबन्धनं केवलं यथा।

"पान्तु वो जलदश्यामाः शार्ङ्गज्याघातकर्कशाः।
त्रैलोक्यमण्डपस्तम्भाश्चत्वारो हरिबाहवः" ॥

अत्र त्रैलोक्यस्य मण्डपत्वारोपो हरिबाहूनां स्तम्भत्वारोपे निमित्तं। मालारूपं यथा।

"मनोजराजस्य सितातपत्रं
श्रीखण्डचित्रं हरिदङ्गनायाः।
विराजति व्योमसरःसरोजं
कर्पूरपूरप्रभमिन्दुबिम्बं" ॥

अत्र मनोजादेराजत्वाद्यारोपश्चन्द्रबिम्बस्य सितातपत्रत्वाद्यारोपे निमित्तं। एषु च "राजभुजादीनां राहुत्वाद्यारोपो राजमण्डलादीनां चन्द्रमण्डलत्वाद्यारोपे निमित्तमिति" केचित्।

(६७२) अङ्गिनो यदि साङ्गस्य रूपणं साङ्गमेव तत्।
समस्तवस्तुविषयमेकदेशविवर्त्ति च ॥

तच।

(६७३) आरोप्याणामशेषाणां शाब्दत्वे प्रथमं मतं।

प्रथमं समस्तवस्तुविषयं यथा।

"रावणावग्रहक्लान्तमिति वागमृतेन सः।
अभिवृष्य मरुत्सस्यं कृष्णमेघस्तिरोदधे" ॥

अत्र कृष्णस्य मेघत्वारोपे वामादीनाममृतत्वाद्यारोपितं।

(६७४) यत्र कस्यचिदार्थत्वमेकदेशविवर्त्ति तत्।

कस्यचिदारोप्यमाणस्य। यथा।

"लावण्यमधुभिः पूर्णमास्यमस्या विकस्वरं।
लोकलोचनरोलम्बकदम्बैः कैर्न पीयते"॥

अत्र लावण्यादौ मध्वाद्यारोपः शाब्दो मुखे पद्मत्वारोप आर्थः। न चेयमेकदेशविवर्त्तिन्युपमा विकस्वरत्वधर्मस्यारोप्यमाणे पद्मे मुख्यतया वर्त्तनात् मुखे चोपचरितत्वात्।

(६७५) निरङ्गं केवलस्यैव रूपणं तदपि द्विधा।
माला केवलरूपत्वात्

तत्र मालारूपं निरङ्गं यथा।

"निर्माणकौशलं धातुश्चन्द्रिका लोकचक्षुषां।
क्रीडागृहमनङ्गस्य सेयमिन्दीवरेक्षणा"॥

केवलं यथा।

"दासे कृतागसि भवत्युचितः प्रभूणां
पादप्रहार इति सुन्दरि नात्र दूये।
उद्यत्कठोरपुलकाङ्कुरकण्टकाग्रै-
र्यत्खिद्यते मृदु पदं ननु सा व्यथा मे"॥

(६७६) तेनाष्टौ रूपके भिदाः।

चिरन्तनैरुक्ता इति शेषः। क्वचित् परम्परितमप्येकदेशविवर्त्ति यथा।

“खड्गः क्ष्मासौविदल्लः समिति विजयते मालवाखण्डलस्य”।

अत्रार्थः क्ष्मायां महिषीत्वारोपः खड्गे सौविदल्लत्वारोपे हेतुः। अस्य भेदस्य पूर्व्ववन्मालारूपत्वेऽप्युदाहरणं मृग्यं।

(६७७) दृश्यन्ते क्वचिदारोप्याः श्लिष्टाः साङ्गेऽपि रूपके।

तत्रैकदेशविवर्त्ति श्लिष्टं यथा मम।

“करमुदयमहीधरस्तनाग्रे
गलिततमःपटलांशुके निवेश्य।
विकसितकुमुदेक्षणं विचुम्ब-
त्ययममरेशदिशो मुखं सुधांशुः” ॥

समस्तवस्तुविषयं यथा। अत्रैव “विचुम्बतीत्यादौ” चुचुम्बे “हरिदबलामुखमिन्दुनायकेन इति” पाठे न चात्र श्लिष्टपरम्परितं। तत्र हि। “भूभृदावलिदम्भोलिरित्यादौ” राजादौ पर्व्वतत्वादिरूपणं विना वर्णनीयस्य राजादेर्दम्भोलितादिरूपणं सर्व्वथैव सादृश्याभावादसङ्गतं। तर्हि कथं “पद्मोदयदिनाधीश इत्यादौ” परम्परितं, राजादेः सूर्य्यादिना सादृश्यस्य तेजस्वितादिहेतुकस्य सम्भवादिति न वाच्यं। तथा हि राजादेस्तेजस्वितादिहेतुकं सुव्यक्तं सादृश्यं न तु प्रकृते तद्विवक्षितं पद्मोदयादेरेव द्वयोः साधारणधर्म्मतया विवक्षितत्वात्, इह तु महीधरादेः स्तनादिना सादृश्यं पीनोत्तुङ्गत्वादिना सुव्यक्तमेवेति न श्लिष्टपरम्परितं। क्वचित् समासाभावेऽपि रूपकं दृश्यते। यथा।

"मुखं तव कुरङ्गाक्षि सरोजमिति मान्यथा"।

क्वचिद्वैयधिकरण्येऽपि। यथा।

"विदधे मधुपश्रेणीमिह भ्रूलतया विधिः"।

क्वचिद्वैधर्म्येऽपि यथा।

"सौजन्याम्बुमरुस्थली सुचरितालेख्यद्युभित्तिर्गुण-
ज्योत्स्नाकृष्णचतुर्दशी सरलतायोगश्वपुच्छच्छटा।
यैरेषापि दुराशया कलियुगे राजावली सेविता
तेषां शूलिनि भक्तिमात्रसुलभे सेवा कियत्कौशलम्"॥

इदं मम। अत्र च केषाञ्चिद्रूपकाणां श्लिष्टशब्दमूलत्वेऽपि रूपकविशेषत्वादर्थालङ्कारमध्ये गणनं। एवं वक्ष्यमाणालङ्कारेषु बोद्धव्यं।

(६७८) अधिकारूढवैशिष्ट्यं रूपकं यत्तदेव तत्।

तदेवाधिकारूढवैशिष्ट्यसञ्ज्ञरूपकं। यथा मम।

"इदं वक्त्रं साक्षाद्विरहितकलङ्कः शशधरः
सुधाधाराधारश्चिरपरिणतं विम्बमधरः।
इमे नेत्रे रात्रिन्दिवमधिकशोभे कुवलये
तनुर्लावण्यानां जलधिरवगाहे सुखतरः"॥

अत्र कलङ्कराहित्यादिनाधिकं वैशिष्ट्यं।

(६७९) विषयात्मतयारोप्ये प्रकृतार्थोपयोगिनि।
परिणामो भवेत्तुल्यातुल्याधिकरणो द्विधा॥

आरोप्यमाणस्यारोपविषयात्मतया परिणमनात् परिणामः। यथा।

"स्मितेनोपायनं दूरादागतस्य कृतं मम।
स्तनोपपीडमाश्लेषः कृतो द्यूते पणस्तथा"॥

अन्यथोपायनपणौ वसनाभरणादिभावेनोपयुज्येते, अत्र तु नायकसम्भावनद्यूतयोः स्मिताश्लेषरूपतया। अत्र प्रथमार्द्धे वैयधिकरण्येन प्रयोगः। द्वितीये सामानाधिकरण्येन। रूपके "मुखचन्द्रं पश्यामीत्यादौ" आरोप्यमाणचन्द्रादेरुपरञ्जकतामात्रं न तु प्रकृते दर्शनादावुपयोगः। इह तूपायनादेर्विषयेण तादात्म्यं प्रकृते च नायकसम्भावनादावुपयोगः। अत एव रूपके आरोप्यस्यावच्छेदकत्वमात्रेणान्वयः। अत्र तु तादात्म्येन दासे कृतागसीत्यादौ" रूपकमेव न तु परिणामः। आरोप्यमाणकण्टकस्य पादभेदेन कार्य्यस्याप्रस्तुतत्वात्। न खलु तत् कस्यचिदपि प्रस्तुतकार्य्यस्य घटनार्थमनुसन्धीयते। अयमपि रूपकवदधिकारूढवैशिष्ट्यो दृश्यते यथा।

"वनेचराणां वनितासखानां
दरीगृहोत्सङ्गनिषक्तभासः।
भवन्ति यत्रौषधयो रजन्या-
मतैलपूराः सुरतप्रदीपाः"॥

अत्र प्रदीपानामोषध्यात्मतया प्रकृते सुरतोपयोगिन्यन्धकारनाशे उपयोगोऽतैलपूरत्वेनाधिकारूढवैशिष्ट्यं।

(६८०) सन्देहः प्रकृतेऽन्यस्य संशयः प्रतिभोत्थितः।
शुद्धो निश्चयगर्भोऽसौ निश्चयान्त इति त्रिधा॥

यत्र संशय एव पर्य्यवसानं स शुद्धः। यथा।

"किं तारुण्यतरोरियं रसभरोद्भिन्ना नवा वल्लरी
वेलाप्रोच्छलितस्य किं लहरिका लावण्यवारांनिधेः।
उद्गाढोत्कलिकावतां स्वसमयोपन्यासविस्रम्भिणः
किं साक्षादुपदेशयष्टिरथवा देवस्य शृङ्गारिणः"॥

यत्रादावन्ते च संशय एव मध्ये च निश्चयः स निश्चयमध्यः।
यथा।

"अयं मार्त्तण्डः किं स खलु तुरगैः सप्तभिरितः
कृशानुः किं सर्व्वाः प्रसरति दिशो नैष नियतं।
कृतान्तः किं साक्षान्महिषवहनोऽसाविति पुनः
समालोक्याजौ त्वां विदधति विकल्पान् प्रतिभटाः"॥

अत्र मध्ये मार्त्तण्डाद्यभावनिश्चयः राजनिश्चये द्वितीयसंशयोत्थानासम्भवात्। यत्रादौ संशयोऽन्ते च निश्चयः स निश्चयान्तः। यथा।

"किं तावत् सरसि सरोजमेतदारा-
दाहोस्विन्मुखमवभासते तरुण्याः।
संशय्य क्षणमिति निश्चिकाय कश्चित्
विव्वोकैर्वकसहवासिनां परोक्षैः"॥

अप्रतिभोत्थापिते तु "स्थाणुर्वा पुरुषो वा" इत्यादिसंशये नायमलङ्कारः।

"मध्यं तव सरोजाक्षि पयोधरभरार्द्दितं।
अस्ति नास्तीति सन्देहः कस्यचित्ते न भाषते" ॥

अत्रातिशयोक्तिरेव उपमेये उपमानसंशयस्यैवैतदलङ्कार-विषयत्वात्।

(६८१) साम्यादतस्मिंस्तद्बुद्धिर्भ्रान्तिमान् प्रतिभोत्थिता।

यथा।

"मुग्धा दुग्धधिया गवां विदधते कुम्भानधो वल्लवाः
कर्णे कैरवशङ्कया कुवलयं कुर्व्वन्ति कान्ता अपि।
कर्कन्धूफलमुच्चिनोति शवरी मुक्ताफलाकाङ्क्षया
सान्द्रा चन्द्रमसो न कस्य कुरुते चित्तभ्रमं चन्द्रिका" ॥

स्वरसोत्थापिता भ्रान्तिर्नायमलङ्कारः। यथा। "शुक्तिकायां रजतमिति"। न चासादृश्यमूला। यथा।

"सङ्गमविरहविकल्पे वरमिह विरहो न सङ्गमस्तस्याः।
सङ्गे सैव तथैका त्रिभुवनमपि तन्मयं विरहे" ॥

(६८२) क्वचिद्भेदाद्ग्रहीतॄणां विषयाणां तथा क्वचित्।
एकस्यानेकधोल्लेखो यः स उल्लेख उच्यते ॥

क्रमेणोदाहरणं।

"प्रिय इति गोपवधूभिः शिशुरिति वृद्धैरधीश इति देवैः।
नारायण इति भक्तैर्ब्रह्मेत्यग्राहि योगिभिर्देवः" ॥

अत्रैकस्यापि भगवतस्तत्तद्गुणयोगादनेकधोल्लेखे गोपवधूप्रभृतीनां रुच्यादयो यथायोगं प्रयोजकाः। यदाहुः।

"यथारुचि यथार्थित्वं यथाव्युत्पत्ति भिद्यते।
आभासोऽप्ययं एकस्मिन्ननुसन्धानसाधितः" ॥

अत्र भगवतः प्रियत्वादीनां वास्तवत्वाद्गृहीतभेदाच्च न साक्षाद्रूपकं न च भ्रान्तिमान् न चायमभेदे भेद इत्येवंरूपातिशयोक्तिः। तत्र हि "अन्यदेवाङ्गलावण्यमित्यादौ" लावण्यादेर्विषयस्य पृथक्त्वेनाध्यवसानं। न चेह भगवति गोपवधूप्रभृतिभिः प्रियत्वाद्यध्यवसीयते। प्रियत्वादेर्भगवति तत्काले तात्त्विकत्वात्। केचिदाहुः "अयमलङ्कारो नियमेनालङ्कारान्तरविच्छित्तिमूलः, उक्तोदाहरणे च प्रियत्वादीनां नियमाभिप्रायात् प्रियत्वादेर्भिन्नत्वाध्यवसाय" इत्यतिशयोक्तिरस्ति तत्सद्भावेऽपि च गृहीतभेदेन नानात्वप्रतीतिरूपो विच्छित्तिविशेष उल्लेखाख्यभिन्नालङ्कारप्रयोजकः। श्रीकण्ठजनपदवर्णने "वज्रपञ्जरमिति" "शरणागतैः अम्बरविवरमिति" "वातिकैः" इत्यादिष्वातिशयोक्तेर्विविक्तो विषयः। इह च रूपकालङ्कारयोगः। वस्तुतस्तु "अम्बरविवरं" इत्यादौ भ्रान्तिमन्तमेवेच्छन्ति न रूपकं भेदप्रतीतिपुरःसरस्यैवारोपस्य गौणीमूलरूपकादिप्रयोजकत्वात्। यदाहुः शारीरकमीमांसाभाष्यव्याख्याने श्रीमद्वाचस्पतिमिश्राः "अपि च परशब्दः परत्र लक्ष्यमाणगुणयोगेन वर्त्तते इति"। यत्र प्रयोक्तृप्रतिपत्त्रोः सम्प्रतिपत्तिः स गौणः स च भेदप्रत्ययपुरःसर इति। इह तु वातिकानां श्रीकण्ठजनपदवर्णने भ्रान्तिकृत एव अम्बरविवरत्वारोप इति। अत्रैव च "तपोवनमिति" मुनिभिः

"कामायतनमिति" वेश्याभिरित्यादौ च परिणामालङ्कार-योगः।

"गाम्भीर्य्येण समुद्रोऽसि गौरवेणासि पर्व्वतः"।

इत्यादौ चानेकधोल्लेखे गाम्भीर्य्यादिविषयभेदः प्रयोजकः। अत्र च रूपकयोगः। "गुरुर्वचसि पृथुरुरसि अर्ज्जुनो यशसी-त्यादि" चास्य रूपकात् विविक्तो विषय इति। अत्र हि श्लेषमू-लातिशयोक्तियोगः।

(६८३) प्रकृतं प्रतिषिध्यान्यस्थापनं स्यादपह्नुतिः।

इयं द्विधा क्वचिदपह्नवपूर्व्वक आरोपः क्वचिदारोपपूर्व्व-कोऽपह्नव इति। क्रमेणोदाहरणं।

"नेदं नभोमण्डलमम्बुराशि-
र्नैतास्तु तारा नवफेनभङ्गाः।
नायं शशी कुण्डलितः फणीन्द्रो
नासौ कलङ्कः शयितो मुरारिः"॥

"एतद्विभाति चरमाचलचूडचुम्बि-
हिण्डीरपिण्डरुचिशीतमरीचिविम्बं।
उज्ज्वालितस्य रजनीं मदनानलस्य
धूमं दधत्प्रकटलाञ्छनकैतवेन"॥

इदं पद्यं मम। एवं

"विराजति व्योमवपुः पयोधि-
स्तारामयास्तत्र च फेनभङ्गाः।

इत्याद्याकारेण च प्रकृतनिषेधो बोद्धव्यः ।

(६८४) गोपनीयं कमप्यर्थं द्योतयित्वा कथञ्चन ।
यदि श्लेषेणान्यथा वाऽन्यथयेत् साप्यपह्नुतिः ॥

श्लेषेण यथा ।

"काले वारिधराणामपतितया नैव शक्यते स्थातुं ।
उत्कण्ठितासि तरले न हि न हि सखि पिच्छिलः पन्थाः" ॥

अत्रापतितयेत्यत्र पतिं विनेत्युक्त्वा पतनाभावेनेत्यन्यथा-कृतं । अश्लेषेण यथा ।

"इह पुरोऽनिलकम्पितविग्रहा
मिलति का न वनस्पतिना लता ।
स्मरसि किं सखि कान्तरतोत्सवं
न हि घनागमरीतिरुदाहृता" ॥

वक्रोक्तौ परोक्तेरन्यथाकारः इह तु स्वोक्तेरेवेति भेदः । गोपनकृतागोपनीयस्यापि प्रथममभिहितत्वाच्च व्याजोक्तेः ।

(६८५) अन्यन्निषिध्य प्रकृतस्थापनं निश्चयः पुनः ।

निश्चयाख्योऽयमलङ्कारः। अन्यदित्यारोप्यमाणं। यथा मम।

"वदनमिदं न सरोजं नयने नेन्दीवरे एते ।
इह सविधे मुग्धदृशो मधुकर न मुधा परिभ्राम्य" ॥

यथा वा ।

"हृदि बिसलताहारो नायं भुजङ्गमनायकः
कुवलयदलश्रेणी कण्ठे न सा गरलद्युतिः ।

मलयमरुतो नेदं भस्म प्रियारहिते मयि
प्रहर न हरभ्रान्त्याऽनङ्ग क्रुधा किमु धावसि" ॥

न चायं निश्चयान्तःसन्देहस्तत्र संशयनिश्चययोरेकाश्रयत्वेनावस्थानात् । अत्र तु भ्रमरादेः संशयो नायकादेर्निश्चयः किञ्च न भ्रमरादेरपि संशयः । एककोटावनधिके ज्ञाने तथा समीपागमनासम्भवात् । तर्हि भ्रान्तिमानस्तु । अस्तु नाम भ्रमरादेर्भ्रान्तिः । न चेह तस्याश्चमत्कारविधायित्वं अपि तु तथाविधनायकाद्युक्तेरेवेति सहृदयसंवेद्यं । किञ्चाविवक्षितेऽपि भ्रमरादेः पतनादौ भ्रान्तौ वा नायिकाबाह्वादिरूपेणैव सम्भवत्येव तथाविधोक्तिः । न च रूपकध्वनिरयं मुखस्य कमलत्वेनानिर्द्धारणात् । न चापह्नुतिः प्रस्तुतस्यानिषेधादिति पृथगेवायमलङ्कारश्चिरन्तनोक्तालङ्कारेभ्यः । शुक्तिकायां रजतधिया पतति पुरुषे शुक्तिकेयं न रजतमिति कस्यचिदुक्तेर्नायमलङ्कारो वैचित्र्याभावात् ।

(६८६) भवेत् सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मना ।
वाच्या प्रतीयमाना सा प्रथमं द्विविधा मता ॥
वाच्ये वादिप्रयोगे स्यादप्रयोगे परा पुनः ।
जातिर्गुणः क्रिया द्रव्यं यदुत्प्रेक्ष्यं द्वयोरपि ॥
तदष्टधापि प्रत्येकं भावाभावाभिमानतः ।
गुणक्रियास्वरूपत्वान्निमित्तस्य पुनश्च ताः ॥
द्वात्रिंशद्विधतां यान्ति

तत्र वाच्योत्प्रेक्षाणामुदाहरणं दिङ्मात्रं यथा।

"ऊरुः कुरङ्गकदृशश्चञ्चलचेलाञ्चलो भाति।
सपताकः कनकमयो विजयस्तम्भः स्मरस्येव"॥

अत्र विजयस्तम्भस्य वस्तुवाचकत्वाज्जात्युत्प्रेक्षा।

"ज्ञाने मौनं क्षमा शक्तौ त्यागे श्लाघाविपर्ययः।
गुणा गुणानुबन्धित्वात्तस्य सप्रसवा इव"॥

अत्र सप्रसवत्वं गुणः।

"गङ्गाम्भसि सुरत्राण तव निःशाणनिःस्वनः।
स्नातीवारिवधूवर्गगर्भपातनपातकी"॥

अत्र स्नातीति क्रिया।

"मुखमेणीदृशो भाति पूर्णचन्द्र इवापरः"।

अत्र चन्द्र इत्येकव्यक्तिवाचित्वाद्द्रव्यशब्दः। एते भावाभिमाने च। अभावाभिमाने यथा।

"कपोलफलकावस्याः कष्टं भूत्वा तथाविधौ।
अपश्यन्ताविवान्योन्यमीदृशीं क्षामतां गतौ"॥

अत्रापश्यन्ताविति क्रियाया अभावः। एवमन्यत्। निमित्तस्य गुणक्रियारूपत्वे यथा "गङ्गाम्भसीत्यादौ" स्नातीवेत्युत्प्रेक्षा निमित्तं पातकित्वं गुणः। "अपश्यन्ताविवेत्यादौ" क्षामतागमनरूपं निमित्तं क्रिया। एवमन्यत्। प्रतीयमानोत्प्रेक्षा यथा।

"तन्वङ्ग्याः स्तनयुग्मेन मुखं न प्रकटीकृतं।
हाराय गुणिने स्थानं न दत्तमिति लज्जया"॥

अत्र लज्जयेवेति इवाद्यभावात् प्रतीयमानोत्प्रेक्षा। एवमन्यत्। ननु ध्वनिनिरूपणप्रस्तावे ऽलङ्काराणां सर्व्वेषामपि व्यङ्ग्यत्वं भवतीत्युक्तं, सम्प्रति पुनर्विशिष्य कथमुत्प्रेक्षायाः प्रतीयमानत्वमुच्यते। उच्यते व्यङ्ग्योत्प्रेक्षायां।

"महिलासहस्सभरिए तुह हिअए सुहअ सा अमाअन्ती।
अनुदिन अणण्णअम्मा अङ्गं तनु अपि तनूएइ" * ॥

इत्यादौ उत्प्रेक्षणं विनापि वाक्यविश्रान्तिः, इह तु लज्जयोर्लम्बाया असम्भवात् लज्जयेवेत्युत्प्रेक्षयैवेति व्यङ्ग्यप्रतीयमानोत्प्रेक्षयोर्भेदः। अत्र वाच्योत्प्रेक्षायाः षोडशसु भेदेषु मध्ये विशेषमाह।

(६८७) तत्र वाच्या भिदाः पुनः।
विना द्रव्यं त्रिधा सर्व्वाः स्वरूपफलहेतुगाः॥

तत्तोक्तेषु वाच्यप्रतीयमानोत्प्रेक्षयोर्भेदेषु मध्ये ये वाच्योत्प्रेक्षयोः षोडश भेदास्तेषु जात्यादीनां त्रयाणां ये द्वादश भेदास्तेषां प्रत्येकं स्वरूपफलहेतुगत्वेन द्वादशभेदतया षट्त्रिंशद्भेदाः द्रव्यस्य स्वरूपोत्प्रेक्षणमेव सम्भवतीति चत्वार इति मिलित्वा चत्वारिंशद्भेदाः। अत्र स्वरूपोत्प्रेक्षा यथा। पूर्व्वोदाहरणेषु "स्मरस्य विजयस्तम्भ" इति। "अप्रसवा" इवेत्यादयः जातिगुणरूपाः। फलोत्प्रेक्षा यथा।

---

* महिलासहस्रभरिते तव हृदये सुभग सा ऽमान्ती।
अनुदिनमनन्यकर्म्माङ्गं तन्वपि तनूकरोतीति॥ सं०॥ टी०॥

"रावणस्यापि रामास्तो भित्त्वा हृदयमाशुगः।
विवेश भुवमाख्यातुमुरगेभ्य इव प्रियं"॥

अत्र "आख्यातुमिति" भूप्रवेशस्य फलं क्रियारूपमुत्प्रेक्षितं। हेतूत्प्रेक्षा यथा।

"सैषा स्थली यत्र विचिन्वता त्वां भ्रष्टं मया नूपुरमेकमुर्व्यां।
अदृश्यत त्वच्चरणारविन्दविश्लेषदुःखादिव बद्धमौनं"॥

अत्र दुःखरूपो गुणो हेतुत्वेनोत्प्रेक्षितः। एवमन्यत्।

(६८८) उक्त्यनुक्त्योर्निमित्तस्य द्विधा तत्र स्वरूपगाः।

तेषु चत्वारिंशत्सङ्ख्यकेषु भेदेषु मध्ये ये स्वरूपगायाः षोडश भेदास्ते उत्प्रेक्षानिमित्तस्योपादानानुपादानाभ्यां द्वात्रिंशद्भेदा इति मिलित्वा षट्पञ्चाशद्भेदा वाच्योत्प्रेक्षायाः। तत्र निमित्तस्योपादानं यथा। पूर्वोदाहृते "स्नातीवेति" उत्प्रेक्षायां निमित्तं पातकित्वमुपात्तं। अनुपादाने यथा "चन्द्र इवापर" इत्यत्र तथाविधसौन्दर्य्याद्यतिशयो नोपात्तः। हेतुफलयोस्तु नियमेन निमित्तस्योपादानमेव। तथा हि "विश्लेषदुःखादिव" इत्यत्र यन्निमित्तं बद्धमौनत्वं "आख्यातुमिव" इत्यत्र च भूप्रवेशस्तयोरनुपादानेऽसङ्गतमेव वाक्यं स्यात्। प्रतीयमानायाः षोडशसु भेदेषु विशेषमाह।

(६८९) प्रतीयमानाभेदाश्च प्रत्येकं फलहेतुगाः।

यथोदाहृते "तन्वङ्ग्यास्तनयुग्मेन" इत्यत्र "लज्जयेवेति" हेतुरुत्प्रेक्षितः। अस्यामपि निमित्तस्यानुपादानं न सम्भवति। इवा-

अनुपादाने निमित्तस्य चाकीर्त्तने उत्प्रेक्षणस्य प्रमातुर्निश्चेतुमशक्यत्वात्। स्वरूपोत्प्रेक्षाप्यत्र न भवति। धर्म्यन्तरतादात्म्यनिबन्धनायामस्यामिवाद्यप्रयोगे विशेषणयोगे सत्यतिशयोक्तेरभ्युपगमात्। यथा। "अयं राजाऽपरः पाकशासन इति"। विशेषणाभावे च रूपकस्य यथा राजा पाकशासन इति तदेवं द्वात्रिंशत्प्रकारा प्रतीयमानोत्प्रेक्षा।

(६९०) उक्त्यनुक्त्योः प्रस्तुतस्य प्रत्येकं ता अपि द्विधा।

ता उत्प्रेक्षाः। उक्तौ यथा। "ऊरुः कुरङ्गकदृशः" इति। अनुक्तौ यथा मम प्रभावत्यां प्रद्युम्नः। इह हि।

"सम्प्रति प्रतिदिगन्तमाच्छादयता तिमिरपटलेन।
घटितमिवाञ्जनपुञ्जैः पूरितमिव मृगमदक्षोदैः।
ततमिव तमालतरुभिर्वृतमिव नीलांशुकैर्भुवनं"॥

अत्राञ्जनेन घटितत्वादेरुत्प्रेक्षणीयस्य विषयव्याप्तत्वं नोपात्तं। यथा वा।

"लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः।

अत्र तमसो लेपनस्य व्यापनरूपो विषयो नोपात्तः। अञ्जनवर्षणस्य तमःसम्पातः अनयोरुत्प्रेक्षानिमित्तञ्च तमसोऽतिबहुलत्वं धारारूपेणाधःसंयोगश्च यथासङ्ख्यं। केचित्तु "अलेपनकर्तृभूतमपि तमो लेपनकर्तृत्वेनोत्प्रेक्षितं व्यापनञ्च निमित्तं, एवं नभोऽपि वर्षणक्रियाकर्तृत्वेनेत्याहुः"।

(६९१) अलङ्कारान्तरोत्थ्या सा वैचित्र्यमधिकं वहेत्।

तत्र स्वापह्नवोत्प्रेक्षा। यथा मम।

"अश्रुच्छलेन सुदृशो हुतपावकधूमकलुषाक्ष्याः।
अप्राप्य मानमङ्गे विगलति लावण्यवारिपूर इव" ॥

श्लेषहेतुगा यथा।

"मुक्तोत्करः सङ्कटशुक्तिमध्या-
द्विनिर्गतः सारसलोचनायाः।
जानीमहेऽस्याः कमनीयकम्बु-
ग्रीवाधिवासाद्गुणवत्त्वमाप" ॥

अत्र गुणवत्त्वे श्लेषः "कम्बुग्रीवाधिवासादिवेति" हेतूत्प्रेक्षाया हेतुः। अत्र "जानीमहे" इत्युत्प्रेक्षावाचकं। एवं।

(६९२) मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादयः।

क्वचिदुपमोपक्रमोत्प्रेक्षा यथा।

"पारे जलं नीरनिधेरपश्य-
न्मुरारिरानीलपलाशराशीः।
वनावलीरुत्कलिकासहस्र-
प्रतिक्षणोत्कूलितशैवलाभाः" ॥

इत्यत्राभाशब्दस्योपमावाचकत्वादुपक्रमे उपमा, पर्य्यवसाने तु जलधितीरे शैवालस्थितेः सम्भवानुपपत्तेः सम्भावनोत्थानमित्युत्प्रेक्षा। एवं विरहवर्णने। "केयूरायितमङ्गदैरित्यत्र" "विकासिनीलोत्पलति स्म कर्णे मृगायताक्ष्याः कुटिलः कटाक्षः।" इत्यादौ च ज्ञेयं। भ्रान्तिमदलङ्कारे "मुग्धा दुग्ध-

धियेत्यादौ” भ्रान्तानां बकवादीनां विषयस्य चन्द्रिकादेर्ज्ञानं नास्ति तद्रूपनिबन्धनस्य कविनैव कृतत्वात्, इह तु सम्भावना-कर्त्तुर्विषयस्यापि ज्ञानमिति द्वयोर्भेदः। सन्देहे तु समकक्ष-तया कोटिद्वयस्य प्रतीतिः। इह तूत्कटासम्भाव्यभूतैका कोटिः। अतिशयोक्तौ विषयिणः प्रतीतस्य पर्य्यवसानादसत्यता प्रतीयते, इह तु प्रतीतिकाल एवेति भेदः।

“रञ्जिता नु विविधास्तरुशैला नामितं नु गगनं स्थगितं नु।
पूरिता नु विषमेषु धरित्री संहृता नु ककुभस्तिमिरेण” ॥

इत्यत्र यत्तदादौ तिमिराक्रान्तता रञ्जनादिरूपेण सन्दि-ह्यत इति “सन्देहालङ्कार” इति केचिदाहुः। तन्न। एक-विषये समानबलतयानेककोटिस्फुरणस्यैव सन्देहत्वात्। इह तु तर्वादिव्याप्तेः प्रतिसम्बन्धिभेदः व्यापनादेर्निगरणेन रञ्ज-नादेः स्फुरणञ्च। अन्ये तु “अनिर्द्धारणरूपविच्छित्त्याश्रयत्वे-नैककोट्यधिकोऽपि भिन्नोऽयं सन्देहप्रकार” इति वदन्ति स्म। तदप्ययुक्तं। निगीर्णस्वरूपस्यान्यतादात्म्यप्रतीतिर्हि सम्भा-वना। तस्याश्चात्र स्फुटतया सद्भावान्नुशब्देन इवशब्दवत्तस्या द्योतनादुत्प्रेक्षैवेयं भवितुं युक्ता। असमदृष्टसन्देहप्रकारक-ल्पनया।

“यदेतच्चन्द्रान्तर्जलदलवलीलां वितनुते
तदाचष्टे लोकः शशक इति नो मां प्रति तथा।
अहन्त्विन्दुं मन्ये त्वदरिविरहाक्रान्ततरुणी-
कटाक्षोल्कापातव्रणकिणकलङ्काङ्किततनुं” ॥

इत्यत्र मन्येशब्दप्रयोगेऽप्युक्तरूपाया: सम्भावनाया अप्रतीते-र्वितर्कमात्रं मालावपह्नवोत्प्रेक्षा।

(६९३) सिद्धत्वेऽध्यवसायस्यातिशयोक्तिर्निगद्यते।

विषयनिगरणेनाभेदप्रतिपत्तिर्विषयिणोऽध्यवसाय:। तस्य चोत्प्रेक्षायां विषयिणोऽनिश्चितत्वेन निर्द्देशात् साध्यत्वं। इह तु निश्चितत्वेनैव प्रतीतिरिति सिद्धत्वं। विषयनिगरणं चोत्प्रेक्षायां विषयस्याध:करणमात्रेण इहापि "मुखं द्वितीयश्चन्द्र" इत्यादौ यदाहु:।

"विषयस्यानुपादानेऽप्युपादानेऽपि सूरय:।
अध:करणमात्रेण निगीर्णत्वं प्रचक्षते" इति॥

(६९४) भेदेऽप्यभेद: सम्बन्धेऽसम्बन्धस्तद्विपर्य्ययौ।
पौर्व्वापर्य्यात्यय: कार्य्यहेत्वो: सा पञ्चधा तत:॥

तद्विपर्य्ययौ अभेदे भेद:। असम्बन्धे सम्बन्ध:। सा ऽतिशयोक्ति:। अत्र भेदेऽभेदो यथा मम।

"कथमुपरि कलापिन: कलापो
विलसति तस्य तलेऽष्टमीन्दुखण्डं।
कुवलययुगलं ततो विलोलं
तिलकुसुमं तदध: प्रवालमस्मात्"॥

अत्र कान्ताकेशपाशादेर्मयूरकलापादिभिरभेदेनाध्यवसाय:। यथा वा। "विश्लेषदु:खादिव बद्धमौनं" अत्र चेतनगतं मौनित्वमन्यदचेतनगतं चान्यदिति द्वयोर्भेदेऽप्यभेद:। एवं।

“सद्वाधरदलेनास्या यौवने रागभाक् प्रियः”॥

अत्राधरस्य रागो लौहित्यं प्रियस्य रागः प्रेम तयोरभेदः। अभेदे भेदो यथा।

“अन्यदेवाङ्गलावण्यमन्याः सौरभसम्पदः।
तस्याः पद्मपलाशाक्ष्याः सरसत्वमलौकिकं”।

सम्बन्धेऽसम्बन्धो यथा।

“अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः
शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः।
वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः”॥

अत्र पुराणप्रजापतिनिर्माणसम्बन्धेऽप्यसम्बन्धः। असम्बन्धे सम्बन्धो यथा।

“यदि स्यान्मण्डले सक्तमिन्दोरिन्दीवरद्वयं।
तदोपमीयते तस्या वदनं चारुलोचनं”॥

अत्र यद्यर्थबलादाहृतेन सम्भावनया सम्बन्धः। कार्य्यकारणयोः पौर्व्वापर्य्यविपर्य्ययस्तु द्विधा भवति। कारणात्प्रथमं कार्य्यस्य भावे द्वयोः समकालत्वेन च। क्रमेण यथा।

“प्रागेव हरिणाक्षीणां चित्तमुत्कलिकाकुलं।
पश्चादुद्भिन्नबकुलरसालमुकुलश्रियः”॥

“सममेव समाक्रान्तं द्वयं द्विरदगामिना।
तेन सिंहासनं पित्र्यं मण्डलञ्च महीक्षितां”॥

इह केचिदाहुः। “केशपाशालिगतो लौकिकोऽतिशयोऽलौ-

त्किकत्वेनाध्यवसीयते, केशपाशादीनां कलापादिभिरध्यवसाये ऽन्यासक्तिः क्रियते" "प्रागेव हरिणाक्षीणामित्यत्र" वकुलादिश्रीणां प्रथमभावितापि पश्चाद्भावित्वेनाध्यवसिता, अत एवात्रापि इव-शब्दप्रयोगे उत्प्रेक्षा। एवमन्यत्र।

(६९५) पदार्थानां प्रस्तुतानामन्येषां वा यदा भवेत्।
एकधर्म्माभिसम्बन्धः स्यात्तदा तुल्ययोगिता॥

अन्येषामप्रस्तुतानां धर्म्मो गुणक्रियारूपः। उदाहरणं।

"अनुलेपनानि कुसुमान्यबलाः कृतमन्यवः पतिषु दीपदशाः।
समयेन तेन सुचिरं शयितप्रतिबोधितस्मरमबोधिषत"॥

अत्र तमोवर्णनस्य प्रस्तुतत्वात् प्रस्तुतानामनुलेपनादीना-मेकबोधनक्रियाभिसम्बन्धः।

"त्वदङ्गमार्द्दवं द्रष्टुः कस्य चित्ते न भासते।
मालतीशशभृल्लेखा कदलीनां कठोरता"॥

इत्यत्र मालत्यादीनामप्रस्तुतानां कठोरतारूपैकगुणसम्ब-न्धः। एवं।

"दानं वित्तादृतं वाचः कीर्त्तिधर्म्मौ तथायुषः।
परोपकरणं कायादसारात् सारमाहरेत्"॥

अत्र दानादीनां कर्म्मभूतानां सारतारूपैकगुणसम्बन्ध एका-हरणक्रियासंबन्धः।

(६९६) अप्रस्तुतप्रस्तुतयोर्दीपकन्तु निगद्यते।
अथ कारकमेकं स्यादनेकासु क्रियासु चेत्॥

क्रमेणोदाहरणं।

"बलावलेपादधुनापि पूर्व्ववत्
प्रबाध्यते तेन जगज्जिगीषुणा।
सती च योषित् प्रकृतिश्च निश्चला
पुमांसमभ्येति भवान्तरेष्वपि"॥

अत्र प्रस्तुताया निश्चलायाः प्रकृतेरप्रस्तुतायाश्च सत्या योषित एकानुगमनक्रियासम्बन्धः।

"दूरं समागतवति त्वयि जीवनाथ
भिन्ना मनोभवशरेण तपस्विनी सा।
उत्तिष्ठति स्वपिति वासगृहं त्वदीय-
मायाति याति हसति श्वसिति क्षणेन"॥

इदं मम। अत्रैकस्या नायिकाया उत्थानाद्यनेकक्रियासम्बन्धः। अत्र च गुणक्रिययोरादिमध्यावसानसद्भावेन वैविध्यं न लक्षितं। तथाविधवैचित्र्यस्य सर्व्वत्रापि सहस्रधा सम्भवात्।

(६९७) प्रतिवस्तूपमा सा स्याद्वाक्ययोर्गम्यसाम्ययोः।
एकोऽपि धर्म्मः सामान्यो यत्र निर्द्दिश्यते पृथक्॥

यथा।

"धन्यासि वैदर्भि गुणैरुदारै-
र्यया समाकृष्यत नैषधोऽपि।
इतः स्तुतिः का खलु चन्द्रिकाया
यदब्धिमप्युत्तरलीकरोति"॥

अत्र समाकर्षणमुत्तरलीकरणञ्च क्रिया एकैव पौनरुक्त्य-निरासाय भिन्नवाचकतया निर्द्दिष्टा। इयं मालयापि दृश्यते यथा।

"विमल एव रविर्विशदः शशी
प्रकृतिशोभन एव हि दर्पणः।
शिवगिरिः शिवहाससहोदरः
सहजसुन्दर एव हि सज्जनः"॥

अत्र विमलविशदादिरर्थत एक एव। वैधर्म्म्येण यथा।

"चकोर्य्य एव चतुराश्चन्द्रिकापानकर्म्मणि।
विनावन्तीर्न निपुणाः सुदृशो रतनर्म्मणि"॥

(६९८) दृष्टान्तस्तु सधर्म्मस्य वस्तुनः प्रतिबिम्बनं।

सधर्म्मस्येति प्रतिवस्तूपमाव्यवच्छेदः। अयमपि साधर्म्म्य-वैधर्म्म्याभ्यां द्विधा। क्रमेणोदाहरणं।

"अविदितगुणापि सत्कविभणितिः
कर्णेषु वमति मधुधारां।
अनधिगतपरिमलापि हि
हरति दृशं मालतीमाला"॥

"त्वयि दृष्टे कुरङ्गाक्ष्याः स्रंसते मदनव्यथा।
दृष्टानुदयभाजीन्दौ ग्लानिः कुमुदसंहतेः"॥

"वसन्तलेखैकनिबद्धभावं परासु कान्तासु मनः कुतो नः।
प्रफुल्लमल्लीमधुलम्पटः किं मधुव्रतः काङ्क्षति वल्लिमन्यां"॥

इदं पदं मम। अत्र "मनः कुतो न" इत्यस्य "काङ्क्षति वल्लिमन्या "मित्यस्य चैकरूपतयैव पर्य्यवसानात् प्रतिवस्तूपमैव। इह तु कर्त्तुं मधुधारावमनस्य गेयहरणस्य च साम्यमेव न लैकरूप्यं। अथ समर्थ्यसमर्थकवाक्ययोः सामान्यविशेषभावेऽर्थान्तरन्यासः, प्रतिवस्तूपमादृष्टान्तयोस्तु न तथेति भेदः।

(६९९) सम्भवन् वस्तुसम्बन्धोऽसम्भवन् वापि कुत्रचित्।
यत्र बिम्बानुबिम्बत्वं बोधयेत् सा निदर्शना॥

तत्र सम्भवद्वस्तुसम्बन्धनिदर्शना यथा।

"कोऽत्र भूमिवलये जनान् मुधा
तापयन् सुचिरमेति सम्पदं।
वेदयन्निति दिनेन भानुमा-
नाससाद चरमाचलं ततः"॥

अत्र रवेरीदृगर्थवेदनक्रियायां कर्तृत्वेनान्वयः सम्बन्धत्येव ईदृगर्थज्ञापनसमर्थचरमाचलप्राप्तिरूपधर्म्मवत्त्वात्, स च रवेरस्ताचलगमनस्य परतापिनां विपत्प्राप्तेश्च बिम्बप्रतिबिम्बभावं बोधयति। असम्भवद्वस्तुसम्बन्धनिदर्शना त्वेकवाक्यानेकवाक्यगतत्वेन द्विविधा। तत्रैकवाक्यगा यथा।

"कलयति कुवलयमालाललितं कुटिलः कटाक्षविक्षेपः।
अधरः किसलयलीलामाननमस्याः कलानिधेर्विलासं"॥

अत्रान्यस्य धर्म्मी कथमन्यो वहत्विति कटाक्षविक्षेपादीनां कुवलयमालादिगतललितादीनां कलनमसम्भवत् तल्ललितादि-

यद्रूपं ललितादिकमवगमयत् कटाक्षविक्षेपादेः कुवलयमाला-देश्च विम्बप्रतिम्बभावं बोधयति। यथा वा।

"प्रयाणे तव राजेन्द्र मुक्ता वैरिमृगीदृशां।
राजहंसगतिः पद्भ्यामाननेन शशिद्युतिः"॥

अत्र पादाभ्यामसम्बद्धराजहंसगतेस्त्यागोऽनुपपन्न इति तयो स्तत्सम्बन्धः कल्प्यते, स चासम्भवन् राजहंसगतिमिव गतिं बोध-यति। अनेकवाक्यगा यथा।

"इदं किलाव्याजमनोहरं वपु-
स्तपःक्षमं साधयितुं य इच्छति।
ध्रुवं स नीलोत्पलपत्रधारया
शमीलतां छेत्तुमृषिर्व्यवस्यति"॥

अत्र यत्तच्छब्दनिर्दिष्टवाक्यार्थयोरभेदेनान्वयोऽनुपपद्य-मानस्तादृग्वपुषस्तपःक्षमत्वसाधनेच्छा नीलोत्पलपत्रधारया शमीलताच्छेदनेच्छेवेति विम्बप्रतिविम्बभावे पर्य्यवस्यति। यथा वा।

"अस्मेदं वन्ध्यतां नीतं भवभोगोपलिप्सया।
काचमूल्येन विक्रीतो हन्त चिन्तामणिर्मया"॥

अत्र भवभोगलोभेन जन्मनो व्यर्थतानयनं काचमूल्येन चि-न्तामणिविक्रय इवेति पर्य्यवसानं। एवं।

"क्व सूर्य्यप्रभवो वंशः क्व चाल्पविषया मतिः।
तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरं"॥

अत्र मन्मत्या सूर्य्यवंशवर्णनमुडुपेन सागरतरणमिवेति पर्य्य-वसानं। इयं क्वचिदुपमेयवृत्तस्योपमानेऽसम्भवेऽपि भवति।

यथा।

"योऽनुभूतः कुरङ्गाच्यास्तस्या मधुरिमाधरे।
समास्वादि स मृद्वीकारसे रसविशारदैः"॥

अत्र प्रकृतस्याधरस्य मधुरिमधर्मस्य द्राचारसेऽसम्भवात् पूर्व्ववत् साम्ये पर्य्यवसानं। मालारूपापि यथा मम।

"चिपसि शुकं वृषदंशकवदने
मृगमर्पयसि मृगादनवदने।
वितरसि तुरगं महिषविषाणे
निदधच्चेतो भोगविताने"॥

इह विम्बप्रतिविम्बताचेपं विना वाक्यार्थापर्य्यवसानं। दृष्टान्ते तु पर्य्यवसितेन वाक्यार्थेन सामर्थ्याद्विम्बप्रतिविम्बताप्रत्यायनं। नापीयमर्थापत्तिः, तत्र "हारोऽयं हरिणाचीणामित्यादौ" वाक्यस्यापर्य्यवसानाभावात्।

(७००) आधिक्यमुपमेयस्योपमानान्न्यूनताथवा।
व्यतिरेक एक उक्ते हेतौ नोक्ते स च त्रिधा॥
चतुर्विधोऽपि साम्यस्य बोधनाच्छब्दतोऽर्थतः।
आक्षेपाच्च द्वादशधा श्लेषेऽपीति त्रिरष्टधा।
प्रत्येकं स्यान्मिलित्वाष्टचत्वारिंशद्विधः पुनः॥

उपमेयस्योपमानादाधिक्ये हेतुरुपमेयगतमुत्कर्षकारणमुपमानगतं निकर्षकारणञ्च। तयोर्द्वयोरप्युक्तावेकः प्रत्येकं समुदायेन वानुक्तौ त्रिविध इति चतुर्विधेऽप्यस्मिन्नुपमानोपमेयस्य

निवेदनं शब्देनार्थेनाक्षेपेण चेति द्वादशप्रकारोऽपि श्लेषेऽपि-शब्दाद्श्लेषेऽपि चतुर्विंशतिप्रकारः। उपमानान्यूनतायामप्यनयैव भङ्ग्या चतुर्विंशतिप्रकारतेति मिलित्वाष्टचत्वारिंशत्प्रकारो व्यतिरेकः। उदाहरणं।

"अकलङ्कं मुखं तस्या न कलङ्की विधुर्यथा"।

अत्रोपमेयगतमकलङ्कत्वमुपमानगतञ्च कलङ्कित्वं हेतुद्वयमप्युक्तं। यथा शब्दप्रतिपाद्यत्वाच्च शाब्दमौपम्यं। अत्रैव "न कलङ्कि विधूपममिति" पाठे आर्थं "जयतीन्दुं कलङ्किनमिति" पाठे त्विवादितुल्यादिपदविरहादाक्षिप्तं। अत्रैवाकलङ्कपदत्यागे उपमेयगतोत्कर्षकारणानुक्तिः। कलङ्किपदत्यागे चोपमानगतनिकर्षकारणानुक्तिः द्वयोरनुक्तौ द्वयोरनुक्तिः। श्लेषे [redacted]

"अतिगाढगुणायाश्च नाब्जवद्भङ्गुरा गुणाः"।

अत्रेवार्थे वतिरिति शाब्दमौपम्यं उत्कर्षनिकर्षकारणयोर्द्वयोरप्युक्तिः। गुणशब्दः श्लिष्टः। अन्ये भेदाः पूर्व्ववदूह्याः। एतानि चोपमेयस्योपमानादाधिक्ये उदाहरणानि। न्यूनत्वे दिङ्मात्रं। यथा।

"क्षीणः क्षीणोऽपि शशी
भूयो भूयोऽभिवर्द्धते नित्यं।
विरम प्रसीद सुन्दरि
यौवनमनिवर्त्ति यातं तु"॥

अत्रोपमेयभूतयौवनास्थैर्य्यस्याधिक्यं तेनात्र "उपमानादुप-

भेयस्याधिक्ये विपर्य्यये वा व्यतिरेक इति" केषाञ्चिल्लक्षणे "विपर्य्यये वेति पदमनर्थकमिति" यत् केचिदाहुः तन्न विचारसहं। यथा ह्युपमाधिकन्यूनत्वे सत्त्वासत्त्वे एव विवक्षिते। अत्र च चन्द्रापेक्षया यौवनस्यासत्त्वं स्फुटमेव। अस्तु वाचोदाहरणे यथा कथञ्चिद्गतिः।

"हनूमदाद्यैर्यशसा मया पुन-
र्द्विषां हसैर्दूतपथः सितीकृतः"॥

इत्यादिषु का गतिरिति सुष्ठूक्तं "न्यूनतायथवेति"।

(७०१) सहार्थस्य बलादेकं यत्र स्याद्वाचकं द्वयोः।
सा सहोक्तिर्मूलभूतातिशयोक्तिर्यदा भवेत्॥

अतिशयोक्तिरत्राभेदाध्यवसायमूला कार्य्यकारणयोः पौर्व्वापर्य्यविपर्य्ययरूपा च। अभेदाध्यवसायमूलापि श्लेषभित्तिका अन्यथा च। क्रमेणोदाहरणं।

"सहाधरदलेनास्या यौवने रागभाक् प्रियः"।

अत्र रागपदे श्लेषः।

"सह कुमुदकदम्बैः काममुल्लासयन्तः
सह घनतिमिरौघैर्धैर्य्यमुत्सारयन्तः।
सह सरसिजषण्डैः स्वान्तमामीलयन्तः
प्रतिदिशममृतांशोरंशवः सञ्चरन्ति"॥

इदं मम। अत्रोल्लासादीनां सम्बन्धिभेदादेव भेदो न तु श्लिष्टतया।

"स नमेव नराधिपेन सा गुरुसम्मोहविलुप्तचेतना।
अगमत्सह तैलबिन्दुना तनुदीपार्च्चिरिव चितेरलं"॥

एवञ्च मालयापि सम्भवति। तथोदाहृते "सह कुमुदकदम्बैरित्यादौ"।

"लक्ष्मणेन समं रामः काननं गहनं ययौ" इत्यादौ चातिशयोक्तिमूलत्वाभावान्नायमलङ्कारः।

(७०२) विनोक्तिर्यद्विनान्येन न साध्वन्यदसाधु वा।

न असाधु अशोभनं न भवति। एवञ्च यद्यपि शोभनत्व एव पर्य्यवसानं तथाप्यशोभनत्वाभावमुखेन शोभनवचनस्यायमभिप्रायो यत्कस्यचिद्दर्शनीयस्याशोभनत्वं तत्परसन्निधेरेव दोषः। तस्य पुनः स्वभावतः शोभनत्वमेवेति। यथा।

"विना जलदकालेन चन्द्रो निस्तन्द्रतां गतः।
विना ग्रीष्मोष्मणा मञ्जुर्वनराजिरजायत"।

असाधु अशोभनं। यथा।

"अनुयान्त्या जनातीतं कान्तं साधु त्वया कृतं।
का दिनश्रीर्विनार्केण का निशा शशिना विना"॥

"निरर्थकं जन्म गतं नलिन्या
यया न दृष्टं तुहिनांशुबिम्बं।
उत्पत्तिरिन्दोरपि निष्फलैव
दृष्टा विनिद्रा नलिनी न येन"॥

अत्र परस्परविनोक्तिभङ्ग्या चमत्कारातिशयः। विनाशब्द-

प्रयोगाभावेऽपि विनार्थविवक्षया विनोक्तिरेवायं। एवं सहोक्ति-रपि सहशब्दप्रयोगाभावेऽपि सहार्थविवक्षया भवतीति बोद्धव्यं।

(७०३) समासोक्तिः समैर्यत्र कार्य्यलिङ्गविशेषणैः।
व्यवहारसमारोपः प्रस्तुतेऽन्यस्य वस्तुनः॥

अत्र समेन कार्य्येण प्रस्तुतेऽप्रस्तुतव्यवहारसमारोपः। यथा।

"व्याधूय यद्वसनमम्बुजलोचनाया
वक्षोजयोः कनककुम्भविलासभाजोः।
आलिङ्गसि प्रसभमङ्गमशेषमस्या
धन्यस्त्वमेव मलयाचलगन्धवाह"॥

अत्र गन्धवाहे धृष्टकामुकव्यवहारसमारोपः। लिङ्गसाम्येन यथा।

"असमाप्तजिगीषस्य स्त्रीचिन्ता का मनस्विनः।
अनाक्रम्य जगत्कृत्स्नं नो सन्ध्यां भजते रविः"॥

अत्र पुंस्त्रीलिङ्गमात्रेण रविसन्ध्ययोर्नायकनायिकाव्यव-हारः। विशेषणसाम्यन्तु श्लिष्टतया साधारण्येनौपम्यगर्भत्वेन च त्रिधा। तत्र श्लिष्टतया यथा मम।

"विकसितमुखीं रागासङ्गाद्गलत्तिमिरावृतिं
दिनकरकरस्पृष्टामैन्द्रीं निरीक्ष्य दिशं पुरः।
जरठलवलीपाण्डुच्छायो भृशं कलुषान्तरः
श्रयति हरितं हन्त प्राचेतसीं तुहिनद्युतिः"॥

अत्र मुखरागादिशब्दानां श्लिष्टता। अत्र हि "तिमिरा-

द्युतिमिति" अत्र "तिमिरांशुकामिति" पाठे एकदेशस्य रूपणे ऽपि समासोक्तिरेव न तु एकदेशविवर्त्ति रूपकं । तत्र हि तिमिरांशुकयोर्रूप्यरूपकभावो द्वयोरावरकत्वेन स्फुटसादृश्यतया परभावित्वमनपेक्ष्यापि स्वभावविश्रान्त इति न समासोक्तिबुद्धिं व्यपहन्तुमीशः । यत्र तु रूप्यरूपकयोः सादृश्यमस्फुटं तत्रैकदेशान्तररूपणं विना तदसङ्गतं साहित्यमसाध्यमप्येकदेशान्तररूपणसामर्थ्यमपेक्षत एवेति । तत्रैकदेशविवर्त्तिरूपकमेव यथा ।

"जस्स रणन्तेउरए करे कुणन्तस्स मण्डलग्गलअं ।
रससंमुहीवि सहसा परंमुही होइ रिउसेणा ॥" *

अत्र रणान्तःपुरयोः सादृश्यमस्फुटमेव । क्वचिच्च यत्र स्फुटसादृश्यानामपि बहूनां रूपणं प्राच्यमेकदेशस्य चार्थं तत्रैकदेशविवर्त्ति रूपकमेव । रूपकप्रतीतेर्व्यापितया समासोक्तिप्रतीतितिरोधायकत्वात् । नन्वस्ति रणान्तःपुरयोरपि सुखसञ्चारतया स्फुटं सादृश्यमिति चेत् । सत्यमुक्तं । अस्त्येव किन्तु वाक्यार्थपर्य्यालोचनसापेक्षं न खलु निरपेक्षं । मुखचन्द्रादेर्मनोहरत्वादिवद्रणान्तःपुरयोः स्वतः सुखसञ्चारत्वाभावात् । साधारण्येन यथा ।

"निसर्गसौरभोद्भ्रान्तभृङ्गसङ्गीतशालिनी ।
उदिते वासराधीशे स्मेराजनि सरोजिनी ॥"

---

* जस्सेति । यस्य रणान्तःपुरे करे कुर्व्वाणस्य मण्डलाग्रलतां । रससंमुख्यपि सहसा पराङ्मुखी भवति रिपुसेनेति सं० टी० । मण्डलाग्रलता खड्गलता । रसेन रणेच्छया सुरतेच्छया च संमुखी अभिमुखगामिनीत्यर्थः ।

अत्र विसर्गेत्यादिविशेषणसाम्यात् सरोजिन्यां नायिकाव्यवहारप्रतीतौ स्त्रीमात्रगामिनः स्तेरत्वधर्मस्य समारोपः कारणं। तेन विना विशेषणसाम्यमात्रेण नायिकाव्यवहारप्रतीतेरसंभवात्। औपम्यगर्भत्वं पुनस्त्रिधा संभवति। उपमारूपकसङ्करगर्भत्वात्। अत्रोपमागर्भत्वे यथा।

"दन्तप्रभा पुष्पचिता पाणिपल्लवशोभिनी।
केशपाशालिवृन्देन सुवेशा हरिणेक्षणा॥"

अत्र सुवेशत्ववशात् प्रथमं दन्तप्रभाः पुष्पाणीवेत्युपमागर्भत्वेन समासः। अनन्तरञ्च दन्तप्रभासदृशैः पुष्पैश्चितेत्यादिसमासान्तराश्रयेण समानविशेषणमाहात्म्याद्धरिणेक्षणायां लताव्यवहारप्रतीतिः। रूपकगर्भत्वे यथा।

"लावण्यमधुभिः पूर्णमित्यादि॥" सङ्करगर्भत्वे यथा। "दन्तप्रभा पुष्पेत्यादौ।" "सुवेशेत्यत्र" "परीतेति" पाठे त्वुपमारूपकसाधकाभावात् सङ्करसमाश्रयणं। समासान्तरं पूर्ववत्। समासान्तरमहिम्ना लताप्रतीतिः। एषु च येषां मते उपमासङ्करयोरेकदेशविवर्त्तिता नास्ति तन्मते आद्यतृतीययोः समासोक्तिः। द्वितीयस्तु प्रकार एकदेशविवर्त्तिरूपकविषय एव। पर्य्यालोचने त्वाद्यप्रकारे एकदेशविवर्त्तिन्युपमैवाङ्गीकर्त्तुमुचिता। अन्यथा।

"ऐन्द्रं धनुः पाण्डु पयोधरेण शरद्दधानार्द्रनखक्षताभं।
प्रसादयन्ती सकलङ्कमिन्दुं तापं रवेरभ्यधिकं चकार॥"

इत्यत्र कथं शरदि नायिकाव्यवहारप्रतीतिः। नायिकापयो-

धरेणार्द्रनखक्षतताभ्रत्वमुपधारणासंभवात्। नन्वत्र "आर्द्रनख-क्षताभं" इत्यत्र स्थितमप्युपमानत्वं वस्तुपर्य्यालोचनया ऐन्द्रे धनुषि सञ्चारणीयं। यथा "दध्ना जुहोतीत्यादौ" हवनस्या-न्यथासिद्धेर्दध्नि सञ्चार्य्यते विधिः। एवं चेन्द्रचापाभमार्द्रनख-क्षतं दधानेति प्रतीतिर्भविष्यतीति चेन्न। एवंविधनिर्वाहे कष्ट-सृष्टिकल्पनादेकदेशविवर्त्तिन्युपमाङ्गीकारस्यैव न्याय्यत्वात्। अस्तु वात्र यथाकथञ्चित् समासोक्तिः। "नेत्रैरिवोत्पलैः पद्मैरित्यादौ" त्वन्यगत्यसम्भवात्। किञ्चोपमायां व्यवहारप्रतीतेरभावात् कथं तदुपजीविकायाः समासोक्तेः प्रवेशः। यदाहुः।

"व्यवहारोऽथ वा तत्त्वं मौपम्ये यत्प्रतीयते।
तत्रौपम्यं समासोक्तिरेकदेशोपमा स्फुटा ॥"

एवञ्चोपमारूपकयोरेकदेशविवर्त्तिताङ्गीकारे तन्मूलसङ्करे ऽपि समासोक्तेरप्रवेशो न्यायसिद्ध एव तेनौपम्यगर्भविशेषणो-त्थापितत्वं नास्या विषय इति। विशेषणसाम्ये श्लिष्टविशेषणो-त्थापिता साधारणविशेषणोत्थापिता चेति द्विधा। कार्य्यलि-ङ्गयोस्तुल्यत्वे च द्विविधेति चतुष्प्रकारा समासोक्तिः। सर्व्वत्रै-वात्र व्यवहारसमारोपः कारणं। स च क्वचिल्लौकिके वस्तुनि लौकिकवस्तुव्यवहारसमारोपः। शास्त्रीये वस्तुनि शास्त्रीयवस्तु-व्यवहारसमारोपः। लौकिके वा शास्त्रीयवस्तुव्यवहारसमा-रोपः। शास्त्रीये वा लौकिकवस्तुव्यवहारसमारोप इति चतुर्द्धा। तत्र लौकिकवस्त्वपि रसादिभेदादनेकविधं। शास्त्रीयमपि तर्कायुर्वेदज्योतिःशास्त्रादिप्रसिद्धतयेति बहुप्रकारा समासो-

क्तिः। दिङ्मात्रं यथा। "व्याधूय यद्वसनमित्यादौ"। लौकिके वस्तुनि लौकिकस्य हठकामुकस्य व्यवहारादेः समारोपः।

"यैरेकरूपमखिलास्वपि वृत्तिषु * त्वां
पश्यद्भिरव्ययमसङ्ख्यतया प्रवृत्तं।
लोपः कृतः किल परत्वजुषो विभक्ते-
स्तैर्लक्षणं तव कृतं ध्रुवमेव मन्ये"॥

अत्रागमशास्त्रप्रसिद्धे वस्तुनि व्याकरणप्रसिद्धवस्तुव्यवहारसमारोपः। एवमन्यत्र। रूपकेऽप्रकृतमात्मस्वरूपसन्निवेशेन प्रकृतस्य रूपमवच्छादयति। इह तु स्वावस्थासमारोपेणानवच्छादितस्वरूपमेव तं पूर्व्वावस्थातो विशेषयति। अत एवाच "व्यवहारसमारोपो न तु स्वरूपसमारोप इति" वदन्ति। उपमाध्वनौ श्लेषे च विशेष्यस्यापि साम्यमिह तु विशेषणमात्रस्य अप्रस्तुतप्रशंसायां प्रस्तुतस्य गम्यत्वमिह त्वप्रस्तुतस्येति भेदः।

(७०४) उक्तिर्विशेषणैः साभिप्रायैः परिकरो मतः।

यथा। "अङ्गराजसेनापते द्रोणोपहासिन् कर्ण रक्षैनं भीमाद्दुःशासनं"।

(७०५) शब्दैः स्वभावादेकार्थैः श्लेषोऽनेकार्थवाचनं।

"स्वभावादेकार्थैरिति" शब्दश्लेषाद्व्यवच्छेदः। "वाचनमिति च" ध्वनेः। उदाहरणं।

---

* पदानां प्रत्ययैर्योगः समासश्चेति वृत्तय इति तल्लक्षणं। पदार्थान्वयेष्विति टीकार्थः।

"प्रवर्त्तयन् क्रियाः साध्वीर्मालिन्यं हरितां हरन्।
महसा भूयसा दीप्तो विराजति विभाकरः" ॥

अत्र प्रकरणादिनियमाभावात् द्वावपि राजसूर्य्यौ वाच्यौ।

(७०६) क्वचिद्विशेषः सामान्यात् सामान्यं वा विशेषतः।
कार्य्यान्निमित्तं कार्य्यञ्च हेतोरथ समात् समं ॥
अप्रस्तुतात् प्रस्तुतञ्चेद्गम्यते पञ्चधा ततः।
अप्रस्तुतप्रशंसा स्यात्

क्रमेणोदाहरणं।

"पादाहतं यदुत्थाय मूर्द्धानमधिरोहति।
स्वस्थादेवापमानेऽपि देहिनस्तद्वरं रजः" ॥

अत्रास्मदपेक्षया रजोऽपि वरमिति विशेषे प्रस्तुते सामान्यमभिहितं।

"स्रगियं यदि जीवितापहा
हृदये किं निहिता न हन्ति मां।
विषमप्यमृतं क्वचिद्भवे-
दमृतं वा विषमीश्वरेच्छया" ॥

अत्रेश्वरेच्छया क्वचिदहितकारिणोऽपि हितकारित्वं हितकारिणोऽप्यहितकारित्वमिति सामान्ये प्रस्तुते विशेषोऽभिहितः। एवं चात्राप्रस्तुतप्रशंसामूलोऽर्थान्तरन्यासः। दृष्टान्ते प्रस्तुतमेव वस्तुप्रतिबिम्बत्वेनोपादीयते। इह तु विषामृतयोरमृतविषीभावस्याप्रसिद्धेर्न तस्य सद्भावः ॥

"इन्दुर्लिप्त इवाञ्जनेन जडिता दृष्टिर्मृगीणामिव
प्रम्लानारुणिमेव विद्रुमदलं श्यामेव हेमप्रभा।
कार्कश्यं कलया च कोकिलवधूकण्ठेष्विव प्रस्तुतं
सीतायाः पुरतश्च हन्त शिखिनां वर्हा सगर्हेव नु॥"

अत्र संभाव्यमानेभ्य इन्द्वादिगताञ्जनलिप्तत्वादिभ्यः कार्येभ्यो वदनादिगतसौन्दर्यविशेषरूपं प्रस्तुतं कारणं प्रतीयते।

"गच्छामीति मयोक्तया मृगदृशा निःश्वासमुद्रेकिणं
त्यक्त्वा तिर्यगवेक्ष्य वाष्पकलुषेणैकेन मां चक्षुषा।
अद्य प्रेम मदर्पितं प्रियसखीवृन्दे त्वया बध्यता-
मित्थं स्नेहविवर्द्धितो मृगशिशुः सोत्प्रासमाभाषितः॥"

अत्र कस्यचिद्गमनरूपे कार्ये कारणमभिहितं। तुल्येऽप्रस्तुते तुल्याभिधाने च द्विधा श्लेषमूला सादृश्यमात्रमूला च। श्लेषमूलापि समासोक्तिवद्विशेषणमात्रश्लेषे श्लेषवद्विशेष्यस्यापि श्लेषे भवतीति द्विधा। क्रमेण यथा॥

"सहकारः सदामोदो वसन्तश्रीसमन्वितः।
समुज्ज्वलरुचिः श्रीमान् प्रभूतोत्कलिकाकुलः"॥

अत्र विशेषणमात्रश्लेषवशादप्रस्तुतात् सहकारात् कस्यचित् प्रस्तुतस्य नायकस्य प्रतीतिः।

"पुंस्त्वादपि प्रविचलेद्यदि यद्यधोपि
यायाद्यदि प्रणयने न महानपि स्यात्।
अभ्युद्धरेत्तदपि विश्वमितीदृशीयं

केनापि दिक् प्रकटिता पुरुषोत्तमेन" ॥

अत्र पुरुषोत्तमपदेन विशेष्येणापि श्लिष्टेन प्रचुरप्रसिद्धा प्रथमं विष्णुरेव बोध्यते। तेन वर्णनीयः कश्चित्पुरुषः प्रतीयते। सादृश्यमात्रमूला यथा।

"एकः कपोतपोतः शतशः श्येनाः क्षुधाभिधावन्ति।
अम्बरमावृतिशून्यं हरि हरि शरणं विधेः करुणा" ॥

अत्र कपोतादप्रस्तुतात् कश्चित् प्रस्तुतः प्रतीयते। इयं क्वचित् वैधर्म्येणापि भवति। यथा।

"धन्याः खलु वने वाताः कह्लारस्पर्शशीतलाः।
राममिन्दीवरश्यामं ये स्पृशन्त्यनिवारिताः" ॥

अत्र वाता धन्या अहमधन्य इति वैधर्म्येण प्रस्तुतः प्रतीयते। वाच्यस्य सम्भवासम्भवोभयरूपतया त्रिप्रकारेयं। तत्र सम्भवे उक्तोदाहरणान्येव। असम्भवे यथा।

"कोकिलोऽहं भवान् काकः समानः कालिमावयोः।
अन्तरं कथयिष्यन्ति काकलीकोविदाः पुनः" ॥

अत्र काककोकिलयोर्वाकोवाक्यं प्रस्तुताध्यारोपणं विना ऽसम्भवि। उभयरूपत्वे यथा।

"अन्तश्छिद्राणि भूयांसि कण्टका बहवो बहिः।
कथं कमलनालस्य माभूवन् भङ्गुरा गुणाः" ॥

अत्र प्रस्तुतस्य कस्यचिदध्यारोपणं विना कमलनालान्तश्छिद्राणां गुणभङ्गुरीकरणे हेतुत्वमसम्भवि अन्येषान्तु सम्भवीत्युभयरूपत्वं। अस्याश्च समासोक्तिवद्व्यवहारसमारोपप्राणत्वा-

शब्दशक्तिमूलाद्वस्तुध्वनेर्भेदः उपमाध्वनावप्रस्तुतस्य व्यङ्ग्यत्वं। एवं समासोक्तौ श्लेषेऽपि द्वयोरपि वाच्यत्वं।

(७०७) उक्ता व्याजस्तुतिः पुनः।
निन्दास्तुतिभ्यां वाच्याभ्यां गम्यत्वे स्तुतिनिन्दयोः।

निन्दया स्तुतेर्गम्यत्वे व्याजेन स्तुतिरिति व्युत्पत्त्या व्याजस्तुतिः स्तुत्या निन्दाया गम्यत्वे व्याजरूपा स्तुतिः। क्रमेण यथा।

"स्तनयुगमुक्ताभरणाः कण्टककलिताङ्गयष्टयो देव।
त्वयि कुपितेऽपि प्रागिव विश्वस्ता रिपुस्त्रियो जाताः" ॥

इदं मम॥

"व्याजस्तुतिस्तव पयोद मयोदितेयं
यज्जीवनाय जगतस्तव जीवनानि।
स्तोत्रन्तु ते महदिदं घनधर्म्मराज
साहाय्यमर्ज्जयसि यत् पथिकान्निहत्य" ॥

(७०८) पर्य्यायोक्तं यदा भङ्ग्या गम्यमेवाभिधीयते।

उदाहरणं।

"स्पृष्टास्ता नन्दने शच्याः केशसम्भोगलालिताः।
सावज्ञं पारिजातस्य मञ्जर्य्यो यस्य सैनिकैः" ॥

अत्र हयग्रीवेण स्वर्गो विजित इति प्रस्तुतमेव गम्यं कारणरूपं वैचित्र्यविशेषप्रतिपत्तये सैन्यस्य पारिजातमञ्जरीसावज्ञस्पर्शनरूपकार्य्यद्वारेणाभिहितं। न चेदं कार्य्यात् कारणप्रतीति-

रूपाप्रस्तुतप्रशंसा । तच कार्य्यस्याप्रस्तुतत्वात् । इह तु वर्णनीयस्य प्रभावातिशयबोधकत्वेन कार्य्यमपि कारणवत् प्रस्तुतं । एवञ्च ।

"अनेन पर्य्यासयताश्रुबिन्दून्
मुक्ताफलस्थूलतमान् स्तनेषु ।
प्रत्यर्पिताः शत्रुविलासिनीना-
माक्षेपसूत्रेण विनैव हाराः" ॥

अत्र वर्णनीयस्य राज्ञो गमनभूतशत्रुमारणरूपकारणवत् कार्य्यभूतं तथाविधशत्रुस्त्रीक्रन्दनजलमपि प्रभावातिशयबोधकत्वेन वर्णनार्हमिति पर्य्यायोक्तमेव ।

"राजन् राजसुता न पाठयति मां देव्योऽपि तूष्णीं स्थिताः
कुब्जे भोजय मां कुमारसचिवैर्नाद्यापि किं भुज्यते ।
इत्थं राजशुकस्तवारिभवने मुक्तोऽध्वगैः पञ्जरा-
च्चित्रस्थानवलोक्य शून्यवलभावेकैकमाभाषते" ॥

अत्र प्रस्थानोद्यतं भवन्तं श्रुत्वा सहसैवारयः पलायिता इति कारणं प्रस्तुतं । "कार्य्यमपि वर्णनार्हत्वेन प्रस्तुतमिति" केचित् । अन्ये तु "राजशुकवृत्तान्तेन कोऽपि प्रस्तुतस्य प्रभावो बोध्यते इत्यप्रस्तुतप्रशंसैवेति" आहुः ।

(७०९) सामान्यं वा विशेषेण विशेषस्तेन वा यदि ।
कार्य्यञ्च कारणेनेदं कार्य्येण च समर्थ्यते ॥
साधर्म्येणेतरेणार्थान्तरन्यासोऽष्टधा ततः ।

क्रमेणोदाहरणं ।

"बृहत्सहायः कार्य्यान्तं क्षोदीयानपि गच्छति ।
सम्भूयाम्भोधिमभ्येति महानद्या नगापगा" ॥

अत्र द्वितीयार्द्धगतेन विशेषेणार्थेन प्रथमार्द्धगतः सामान्यो ऽर्थः सोपपत्तिकः क्रियते ।

"यावदर्थपदां वाचमेवमाधाय माधवः ।
विरराम महीयांसः प्रकृत्या मितभाषिणः" ॥*

"पृथ्वि स्थिरा भव भुजङ्गम धारयैनां
त्वं कूर्म्मराज तदिदं द्वितयं दधीथाः ।
दिक्कुञ्जराः कुरुत तत्त्रितये दिधीर्षा-
मार्य्यः करोति हरकार्मुकमाततज्यं" ॥

अत्र कारणभूतं हरकार्मुकाततज्यकरणं पृथ्वीस्थैर्य्यादेः कार्य्यस्य समर्थकं ।

"सहसा विदधीत न क्रियामविवेकः परमापदां पदं" ।

इत्यादौ सम्पद्वरणं कार्य्यं सहसा विधानाभावस्य विमृश्यकारित्वरूपस्य कारणस्य समर्थकं । एतानि साधर्म्ये उदाहरणानि । वैधर्म्ये यथा ।

"इत्थमाराध्यमानोऽपि क्लिश्नाति भुवनत्रयं ।
शाम्येत् प्रत्यपकारेण नोपकारेण दुर्ज्जनः" ॥

अत्र सामान्यं विशेषस्य समर्थकं । "सहसा विदधीतेति"

---

* अत्र वक्तृतया विधीयमानमपि माधवस्याल्पभाषत्वं महत्तरस्य स्वभावत एवाल्पभाषत्वमिति सामान्यगोचरसाधर्म्यद्वारेण समर्थ्यते इति टीका ।

अत्र सहसा विधानाभावस्यापरत्यद्दलं विरुद्धं कार्य्यं समर्थकं ।
एवमन्यत् ।

(७१०) हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गं निगद्यते ।

तत्र वाक्यार्थता यथा ।

"यत्त्वन्नेत्रसमानकान्तिसलिले मग्नं तदिन्दीवरं
मेघैरन्तरितः प्रिये तव मुखच्छायानुकारी शशी ।
येऽपि त्वद्गमनानुकारिगतयस्ते राजहंसा गता-
स्त्वत्सादृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते" ॥

अत्र चतुर्थपादे पादत्रयवाक्यानि हेतवः । पदार्थता यथा मम ।

"त्वद्वाजिराजिनिर्धूतधूलीपटलपङ्किलां ।
न धत्ते शिरसा गङ्गां भूरिभारभिया हरः" ॥

अत्र द्वितीयार्द्धे प्रथमार्द्धमेकपदं हेतुः । अनेकपदं यथा मम ।

"पश्यन्त्यसंख्यपथगां त्वद्दानजलवाहिनीं ।
देव त्रिपथगात्मानं गोपयत्युग्रमूर्द्धनि ॥

इह केचित् वाक्यार्थगतेन काव्यलिङ्गेनैव गतार्थतया कार्य्यकारणभावेऽर्थान्तरन्यासं नाद्रियन्ते तदयुक्तं । तथा ह्यत्र हेतुस्त्रिधा भवति ज्ञापको निष्पादकः समर्थकश्चेति । तत्र ज्ञापकोऽनुमानस्य विषयः । निष्पादकः काव्यलिङ्गस्य । समर्थकोऽर्थान्तरन्यासस्येति । पृथगेव कार्य्यकारणभावेऽर्थान्तरन्यासः

काव्यलिङ्गात्। तथा हि "यत्त्वन्नेत्रेत्यादौ" चतुर्थपादवाक्यं। अन्यथाऽसाकाङ्क्षतयाऽसमञ्जसमेव स्यादिति पादत्रयगतवाक्यं निष्पादकत्वेनापेक्ष्यते। "सहसा विदधीतेत्यादौ" तु।

"परापकारनिरतैर्दुर्ज्जनैः सह सङ्गतिः।
वदामि भवतस्तत्त्वं न विधेया कदाचन"॥

इत्यादिवदुपदेशमात्रेणापि निराकाङ्क्षतया स्वतोऽपि गतार्थं सहसा विधानाभावं सम्पदरणं सोपपत्तिकमेव करोतीति पृथगेव कार्य्यकारणभावेऽर्थान्तरन्यासः काव्यलिङ्गात्।

"न धत्ते शिरसा गङ्गां भूरिभारभिया हरः।
त्वद्वाजिराजिनिर्धूतधूलिभिः पङ्किला हि सा॥"

इत्यत्र हिशब्दोपादानेन पङ्किलत्वादितिवद्धेतुत्वस्य स्फुटतया नायमलङ्कारः। वैचित्र्यस्यैवालङ्कारत्वात्।

(७११) अनुमानन्तु विच्छित्त्या ज्ञानं साध्यस्य साधनात्।

यथा।

"जानीमहेऽस्या हृदि सारसाक्ष्या
विराजतेऽन्तः प्रियवक्त्रचन्द्रः।
उत्कान्तिजालैः प्रसृतैस्तदङ्गे-
ष्वापाण्डुता कुड्मलताक्षिपद्मे॥"

अत्र रूपकवशादिह्छित्तिः। यथा वा।

"यत्र पतत्यबलानां दृष्टिर्निशिताः पतन्ति तत्र शराः।
तच्चापरोपितशरो धावत्यासां पुरः स्मरो मन्ये॥"

अत्र कविप्रौढोक्तिवशादिहित्तिः। उत्प्रेक्षायामनिश्चिततया प्रतीतिरिह तु निश्चिततयेत्युभयोर्भेदः।

(७१२) अभेदेनाभिधाहेतुर्हेतोर्हेतुमता सह।

यथा मम। "तारुण्यस्य विलासः" इत्यत्र वशीकरणहेतुर्नायिकावशीकरणत्वेनोक्तः। विलासहासयोस्त्वध्यवसायमूलोऽयमलङ्कारः।

(७१३) अनुकूलं प्रातिकूल्यमनुकूलानुबन्धि चेत्।

यथा।

"कुपितासि यदा तन्वि निधाय करजक्षतं।
बधान भुजपाशाभ्यां कण्ठमस्य दृढं तदा॥"

अस्य च विच्छित्तिविशेषस्य सर्व्वालङ्कारविलक्षणत्वेन स्फुरणात् पृथगलङ्कारत्वमेव न्याय्यं।

(७१४) वस्तुनो वक्तुमिष्टस्य विशेषप्रतिपत्तये।
निषेधाभास आक्षेपो वक्ष्यमाणोक्तगो द्विधा॥

अत्र वक्ष्यमाणविषये क्वचित् सर्व्वस्यापि सामान्यतः सूचितस्य निषेधः क्वचिदंशोक्तावंशान्तरे निषेध इति द्वौ भेदौ, उक्तविषये च क्वचिद्वस्तुस्वरूपस्य निषेधः क्वचिद्वस्तुकथनस्येति द्वाविल्याक्षेपस्य चत्वारो भेदाः। क्रमेण यथा।

"स्मरशरशतविधुरायाः भणामि सख्याः कृते किमपि।
क्षणमिह विश्राम्य सखे निर्द्दयहृदयस्य किं वदाम्यथवा"॥

अत्र सख्या विरहस्य सामान्यतः सूचितस्य वक्ष्यमाणविशेषे निषेधः।

"तव विरहे हरिणाक्षी निरीक्ष्य नवमालिकां दलिताम्।

हन्त नितान्तमिदानीमाः किं हतजल्पितैरथ वा" ॥

अत्र मरिष्यतीत्यंशो नोक्तः।

"बालअ णाहं दूती तुम्म पिओसि त्ति ण मह वावारो।

सा मरइ तुज्झ अअसो एअं धम्मक्खरं भणिमः"।*

अत्र दूतीत्यस्य वस्तुनो निषेधः।

"विरहे तव तन्वङ्गी कथं क्षपयतु क्षपाम्।

दारुणव्यवसायस्य पुरस्ते भणितेन किम् ॥"

अत्र कथनस्यैव निषेधः। प्रथमोदाहरणे सख्या अवश्यम्भावि मरणमिति विशेषः प्रतीयते। द्वितीयेऽशक्यवक्तव्यत्वादि। तृतीये दूतीत्वे यथार्थवादित्वं। चतुर्थे दुःखस्यातिशयः। नचायं विहितनिषेधः। अत्र निषेधाभावत्वात्।

(७१५) अनिष्टस्य तथार्थस्य विध्याभासः परो मतः।

तथेति पूर्ववद्विशेषप्रतिपत्तये। यथा

"गच्छ गच्छसि चेत् कान्त पन्थानः सन्तु ते शिवाः।

ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान् ॥"

---

* बालक इति। बालक नाहं दूती त्वं प्रियोऽसीति न मद्याम् व्यापारः। सा मरिष्यते तवायश एतद् धर्म्माक्षरं भणाम इति सं०। नाहं दूती नाहं मिथ्यावदामीत्यर्थः॥

अत्रानिष्टत्वाद्गमनस्य विधिः प्रस्थानरूपो निषेधे पर्य्यवस्यति। विशेषश्च गमनस्यात्यन्तपरिहार्य्यत्वरूपः प्रतीयते।

(७१६) विभावना विना हेतुं कार्य्योत्पत्तिर्यदुच्यते।
उक्तानुक्तनिमित्तत्वाद् द्विधा सा परिकीर्त्तिता॥

विना कारणमुपनिबध्यमानोऽपि कार्य्योदयः किञ्चिदन्यत् कारणमपेक्ष्यैव भवितुं युक्तः। तच्च कारणान्तरं क्वचिदुक्तं क्वचिदनुक्तमिति द्विधा। यथा।

"अनायासकृशं मध्यमशङ्कतरले दृशौ।
अभूषणमनोहारि वपुर्वयसि सुभ्रुवः"॥

अत्र वयोरूपं निमित्तमुक्तं। अत्रैव "वपुर्भाति मृगीदृशः" इति पाठेऽनुक्तं।

(७१७) सति हेतौ फलाभावो विशेषोक्तिस्तथा द्विधा।

तथेत्युक्तानुक्तनिमित्तत्वात्। तत्रोक्तनिमित्ता यथा।

"धनिनोऽपि निरुन्मादा युवानोऽपि न चञ्चलाः।
प्रभवोऽप्यप्रमत्तास्ते महामहिमशालिनः"॥

अत्र महामहिमशालित्वं निमित्तमुक्तं। अत्रैव चतुर्थपादे "कियन्तः सन्ति भूतले" इति पाठे त्वनुक्तं। अचिन्त्यनिमित्तत्वं चानुक्तनिमित्तत्वस्यैव भेद इति पृथङ्नोक्तं। यथा।

"स एकस्त्रीणि जयति जगन्ति कुसुमायुधः।
हरतापि तनुं यस्य शम्भुना न हृतं बलं"॥

अत्र तनुहरणेऽपि मन्दाहरणे निमित्तमचिन्त्यं। इह च कार्याभावः कार्यविरुद्धसद्भावमुखेनापि निबध्यते। विभावनायामपि कारणाभावः कारणविरुद्धसद्भावमुखेनापि। एवञ्च "यः कौमारहरः स एव हि वरः" इत्यादेरुत्कण्ठाकारणविरुद्धस्य निबन्धनाद् विभावना। "यः कौमारहर" इत्यादेः कारणस्य च कार्यविरुद्धाया उत्कण्ठाया निबन्धनाद्विशेषोक्तिः। एवञ्चात्र विभावनाविशेषोक्त्योः सङ्करः। शुद्धोदाहरणन्तु मृग्यं।

(७१८) जातिश्चतुर्भिर्जात्याद्यैर्गुणो गुणादिभिस्त्रिभिः।
क्रिया क्रियाद्रव्याभ्यां यद् द्रव्यं द्रव्येण वा मिथः॥
विरुद्धमिव भासेत विरोधोऽसौ दशाकृतिः।

क्रमेण यथा।

"तव विरहे मलयमरुद्दवानलः शशिरुचोऽपि सोष्माणः।
हृदयमलिरुतमपि भिन्ते नलिनीदलमपि निदाघरविरस्याः॥
सन्ततमुसलासङ्गाद्बहुतरगृहकर्मघटनया नृपते।
द्विजपत्नीनां कठिनाः सति भवति कराः सरोजसुकुमाराः॥
अजस्य गृह्णतो जन्म निरीहस्य हतद्विषः।
स्वपतो जागरूकस्य याथार्थ्यं वेद कस्तव॥
वल्लभोत्सङ्गसङ्गेन विना हरिणचक्षुषः।
राकाविभावरीजानिर्विषज्वालाकुलोऽभवत्॥
नयनयुगासेचनकं मानसवृत्त्यापि दुष्प्रापं।
रूपमिदं मदिराक्ष्या मदयति हृदयं दुनोति च मे"॥

"त्वद्वाजिराजीत्यादि" "वल्लभोत्सङ्गेत्यादि" श्लोके चतुर्थपादे "मर्थ्यन्द्विगदिगाधिप" इति पाठे द्रव्ययोर्विरोधः। अत्र "तव विरहे" इत्यादौ पवनादीनां बहुव्यक्तिवाचकत्वाज्जातिशब्दानां दावानलोऽत्वद्द्रव्यभेदमस्वर्थ्यैर्जातिगुणक्रियाद्रव्यरूपैरन्योन्यं विरोधो मुखत आभासते। विरहहेतुकत्वात् समाधानं। अत्र "अजस्येति" आदावजत्वादिगुणस्य ग्रहणादिक्रियया विरोधः। भगवतः प्रभावस्यातिशयित्वात्तु समाधानं। "त्वद्वाजीत्यादौ" "हरोऽपि शिरसा गङ्गां न धत्ते" इति विरोधः। "त्वद्वाजी" त्यादिकविप्रौढोक्त्या तु समाधानं। स्पष्टमन्यत्। विभावनायां कारणाभावेनोपनिबध्यमानत्वात् कार्य्यमेव बाध्यत्वेन प्रतीयते। विशेषोक्तौ च कार्य्याभावेन कारणमेव। इह त्वन्योन्यं द्वयोरपि बाध्यत्वमिति भेदः।

(७१९) कार्य्यकारणयोर्भिन्नदेशतायामसङ्गतिः।

यथा।

"सा बाला वयमप्रगल्भमनसः सा स्त्री वयं कातराः
सा पीनोन्नतिमत्पयोधरयुगं धत्ते सखेदा वयं।
साक्रान्ता जघनस्थलेन गुरुणा गन्तुं न शक्ता वयं
दोषैरन्यजनाश्रितैरपटवो जाताः स्म इत्यद्भुतं"॥

अस्याश्चापवादत्वादेकदेशस्थयोर्विरोधे विरोधालङ्कारः।

(७२०) गुणौ क्रिये वा यत्स्यातां विरुद्धे हेतुकार्य्ययोः।
यद्वाऽऽरब्धस्य वैफल्यमनर्थस्य च सम्भवः॥

विरूपयोः सङ्घटना या च तद्विषमं मतं ।

क्रमेण यथा ।

“सद्यः करस्पर्शमवाप्य चित्रं
रणे रणे यस्य कृपाणलेखा ।
तमालनीला शरदिन्दुपाण्डु
यशस्त्रिलोकाभरणं प्रसूते” ॥

अत्र कारणरूपासिलतायाः “कारणगुणा हि कार्य्यगुणमारभन्ते” इति स्थितेर्विरुद्धा शुक्लयशस उत्पत्तिः ।

“आनन्दममन्दमिमं कुवलयदललोचने ददासि त्वं ।
विरहस्त्वयैव जनितस्तापयतितरां शरीरं मे” ॥

अत्रानन्दजनकस्त्रीरूपकारणात्तापजनकविरहोत्पत्तिः ।

“अयं रत्नाकरोऽम्भोधिरित्यसेवि धनाशया ।
धनं दूरेऽस्तु वदनमपूरि क्षारवारिभिः” ॥

अत्र केवलं काङ्क्षितधनलाभो नाभूत् प्रत्युत क्षारवारिभिर्वदनपूरणं ।

“क्व वनं तरुवल्कभूषणं नृपलक्ष्मीः क्व महेन्द्रवन्दिता ।
नियतं प्रतिकूलवर्त्तिनो बत धातुश्चरितं सुदुःसहं” ॥

अत्र वनराजश्रियोर्विरूपयोः सङ्घटना । इदं मम । यथा वा ।

“विपुलेन सागरशयस्य कुक्षिणा
भुवनानि यस्य पपिरे युगक्षये ।
मदविभ्रमासकलया पपे पुनः
स पुरस्त्रियैकतमयैकया दृशा ॥”

(७२१) समं स्यादानुरूप्येण श्लाघा योग्यस्य वस्तुनः ।

यथा ।

"शशिनमुपगतेयं कौमुदी मेघमुक्तं
जलनिधिमनुरूपं जह्नुकन्याऽवतीर्णा ।
इति समगुणयोगप्रीतयस्तत्र पौराः
श्रवणकटु नृपाणामेकवाक्यं विवव्रुः" ॥

(७२२) विचित्रं तद्विरुद्धस्य कृतिरिष्टफलाय चेत् ॥

यथा ।

"प्रणमत्युन्नतिहेतोर्जीवनहेतोर्विमुञ्चति प्राणान् ।
दुःखीयति सुखहेतोः को मूढः सेवकादन्यः" ॥

(७२३) आश्रयाश्रयिणोरेकस्याधिक्येऽधिकमुच्यते ।

आश्रयाधिक्ये यथा ।

"किमधिकमस्य ब्रूमो महिमानं वारिधेर्हरिर्यत्र ।
अज्ञात एव शेते कुक्षौ निक्षिप्य भुवनानि" ॥

आश्रिताधिक्ये यथा ।

"युगान्तकालप्रतिसंहृतात्मनो
जगन्ति यस्यां सविकाशमासत ।
तनौ ममुस्तत्र न कैटभद्विष-
स्तपोधनाभ्यागमसम्भृता मुदः" ॥

(७२४) अन्योन्यमुभयोरेकक्रियायाः करणं मिथः ।

यथा ।

"यथा वा शोभते तन्वी तथा त्वमपि शोभसे ।
रजन्या शोभते चन्द्रश्चन्द्रेणापि निशीथिनी" ॥

(७२५) यदाधेयमनाधारमेकञ्चानेकगोचरं ।
किञ्चित् प्रकुर्व्वतः कार्य्यमशक्यस्येतरस्य वा ॥
कार्य्यस्य करणं दैवाद्विशेषस्त्रिविधस्ततः ।

क्रमेण यथा ।

"दिवमप्युपयातानामाकल्पमनल्पगुणगणा येषां ।
रमयन्ति जगन्ति गिरः कथमपि कवयो न ते वन्द्याः ॥
कानने सरिदुद्देशे गिरीणामपि कन्दरे ।
पश्यन्त्यन्तकसङ्काशं त्वामेकं रिपवः पुरः ॥
गृहिणी सचिवः सखी मिथः प्रियशिष्या ललिते कलाविधौ ।
करुणाविमुखेन मृत्युना हरता त्वां वद किं न मे हृतं" ॥

इति रघौ ।

(७२६) व्याघातः स तु केनापि वस्तु येन यथा कृतं ।
तेनैव चेदुपायेन कुरुतेऽन्यस्तदन्यथा ॥

यथा । "दृशा दग्धं मनसिजमित्यादि" ।

(७२७) सौकर्य्येण च कार्य्यस्य विरुद्धं क्रियते यदि ।

व्याघात इत्येव ।

"इहैव त्वं तिष्ठ द्रुतमहमहोभिः कतिपयैः
समागन्ता कान्ते मृदुरसि न चायासवहना ।

मृदुत्वं मे हेतुः सुभग भवता गन्तुमधिकं
न मृद्वी सोढा यदिरहकृतमायासमसमं" ॥

अत्र नायकेन नायिकाया मृदुत्वं सहगमनाभावहेतुत्वेनोक्तं। नायिकया च प्रत्युत सहगमने ततोऽपि सौकर्य्येण हेतुतयोपन्यस्तं।

(७२८) परं परं प्रति यदा पूर्व्वपूर्व्वस्य हेतुता।
तदा कारणमाला स्यात्

यथा।

"श्रुतं कृतधियां सङ्गाज्जायते विनयः श्रुतात्।
लोकानुरागो विनयान्न किं लोकानुरागतः" ॥

(७२९) तन्मालादीपकं पुनः।
धर्म्मिणामेकधर्म्मेण सम्बन्धो यद्यथोत्तरं ॥

यथा।

"त्वयि सङ्गरसम्प्राप्ते धनुषाऽऽसादिताः शराः।
शरैररिशिरस्तेन भूस्तया त्वं त्वया यशः" ॥

अत्रासादनक्रिया धर्म्मः।

(७३०) पूर्व्वं पूर्व्वं प्रति विशेषणत्वेन परं परं।
स्थाप्यतेऽपोह्यते वा चेत्स्यात्तदैकावली द्विधा ॥

क्रमेणोदाहरणं।

"सरो विकसिताम्भोजमम्भोजं भृङ्गसङ्गतं।
भृङ्गा यत्र ससङ्गीताः सङ्गीतं सस्मरोदयं ॥"

न तज्जलं यन्न सुचारुपङ्कजं
न पङ्कजं तद्यदलीनषट्पदं।
न षट्पदोऽसौ न जुगुञ्ज यः कलं
न गुञ्जितं तन्न जहार यन्मनः" ॥

क्वचिद्विशेष्यमपि यथोत्तरं विशेषणतया स्थापितमपोहितञ्च दृश्यते। यथा।

"वाप्यो भवन्ति विमलाः स्फुटन्ति कमलानि वापीषु।
कमलेषु पतन्त्यलयः करोति सङ्गीतमलिषु पदं" ॥

एवमपोहनेऽपि।

(७४१) उत्तरोत्तरमुत्कर्षो वस्तुनः सार उच्यते।

यथा।

"राज्ये सारं वसुधा वसुधायामपि पुरं पुरे सौधं।
सौधे तल्पं तल्पे वराङ्गनानङ्गसर्व्वस्वं" ॥

(७४२) यथासङ्ख्यमनूद्देश उद्दिष्टानां क्रमेण यत्।

यथा।

"उन्मीलन्ति नखैर्लुनीहि वहति क्षौमाञ्चलेनावृणु
क्रीडाकाननमाविशन्ति वलयक्वाणैः समुत्त्रासय।
इत्थं वञ्जुल दक्षिणानिल कुहूकण्ठेषु साङ्केतिक-
व्याहाराः सुभग त्वदीयविरहे तस्याः सखीनां मिथः ॥"

(७४३) क्वचिदेकमनेकस्मिन्ननेकं चैकगं क्रमात्।
भवति क्रियते वा चेत्तदा पर्य्याय इष्यते ॥

क्रमेण यथा ।

"स्थिताः क्षणं पक्ष्मसु ताडिताधराः
पयोधरोत्सेधनिपातचूर्णिताः ।
वलीषु तस्याः स्खलिताः प्रपेदिरे
क्रमेण नाभिं प्रथमोदबिन्दवः ॥
विचरन्ति विलासिन्यो यत्र श्रोणिभरालसाः ।
वृककाकशिवास्तत्र धावन्त्यरिपुरे तव ॥
विसृष्टरागादधरान्निवर्त्तित-
स्तनाङ्गरागादरुणाच्च कन्दुकात् ।
कुशाङ्कुरादानपरिक्षताङ्गुलिः
कृतोऽक्षसूत्रप्रणयी तया करः ॥
यथोरारोपितस्तारो हारस्तेऽरिवधूजनैः ।
निधीयन्ते तथा स्थूलाः स्तनयोरश्रुबिन्दवः ॥"

एषु च क्वचिदाधारः संहतरूपोऽसंहतरूपश्च क्वचिदाधेयमपि । यथा "स्थिताः क्षणमित्यत्र" उदबिन्दवः पक्ष्मादावसंहतरूप आधारे क्रमेणाभवन् । "विचरन्ति" इत्यत्राधेयभूता वृकादयः संहतरूपारिपुरे क्रमेणाभवन् । एवमन्यत् । अत्र चैकस्यानेकत्र क्रमेणैव वृत्तेर्विशेषालङ्काराद्भेदः । विनिमयाभावात् परिवृत्तेः ।

(७३४) परिवृत्तिर्विनिमयः समन्यूनाधिकैर्भवेत् ।

क्रमेणोदाहरणं ।

"दत्त्वा कटाक्षमेणाक्षी जग्राह हृदयं मम।
मया तु हृदयं दत्त्वा गृहीतो मदनज्वरः॥"

अत्र प्रथमेऽर्द्धे समेन द्वितीयेऽर्द्धे न्यूनेन।

"तस्य च प्रवयसो जटायुषः स्वर्गिणः किमिव शोच्यतेऽधुना।
येन जर्ज्जरकलेवरव्ययात् क्रीतमिन्दुकिरणोज्ज्वलं यशः॥"

अत्राधिकेन।

(७३५) प्रश्नादप्रश्नतो वापि कथिताद्वस्तुनो भवेत्।
तादृगन्यव्यपोहश्चेच्छाब्द आर्थोऽथवा तदा॥
परिसंख्या

क्रमेणोदाहरणं।

"किं भूषणं सुदृढमत्र यशो न रत्नं
किं कार्य्यमार्य्यचरितं सुकृतं न दोषः।
किञ्चक्षुरप्रतिहतं धिषणा न नेत्रं
जानाति कस्त्वदपरः सदसद्विवेकं॥"

अत्र व्यवच्छेद्यं रत्नादि शाब्दं।

"किमाराध्यं सदा पुण्यं कश्च सेव्यः सदागमः।
को ध्येयो भगवान् विष्णुः किं काम्यं परमं पदं॥"

अत्र व्यवच्छेद्यं पापाद्यार्थं। अनयोः प्रश्नपूर्व्वकत्वं। अप्रश्नपूर्व्वकत्वे यथा।

"भक्तिर्भवे न विभवे व्यसनं शास्त्रे न युवतिकामास्त्रे।
चिन्ता यशसि न वपुषि प्रायः परिदृश्यते महतां॥"

अत्रानिष्टत्वाद्गमनस्य विधिः प्रस्तुतरूपो निषेधे पर्य्यवस्यति। विशेषश्च गमनस्यात्यन्तपरिहार्य्यत्वरूपः प्रतीयते।

(७१६) विभावना विना हेतुं कार्य्योत्पत्तिर्यदुच्यते।
उक्तानुक्तनिमित्तत्वाद् द्विधा सा परिकीर्त्तिता॥

विना कारणमुपनिबध्यमानोऽपि कार्य्योदयः किञ्चिदन्यत् कारणमपेक्ष्यैव भवितुं युक्तः। तच्च कारणान्तरं क्वचिदुक्तं क्वचिदनुक्तमिति द्विधा। यथा।

"अनायासकृशं मध्यमशङ्कतरले दृशौ।
अभूषणमनोहारि वपुर्वयसि सुभ्रुवः"॥

अत्र वयोरूपं निमित्तमुक्तं। अत्रैव "वपुर्भाति मृगीदृशः" इति पाठेऽनुक्तं।

(७१७) सति हेतौ फलाभावो विशेषोक्तिस्तथा द्विधा।

तथेत्युक्तानुक्तनिमित्तत्वात्। तत्रोक्तनिमित्ता यथा।

"धनिनोऽपि निरुन्मादा युवानोऽपि न चञ्चलाः।
प्रभवोऽप्यप्रमत्तास्ते महामहिमशालिनः"॥

अत्र महामहिमशालित्वं निमित्तमुक्तं। अत्रैव चतुर्थपादे "कियन्तः सन्ति भूतले" इति पाठे त्वनुक्तं। अचिन्त्यनिमित्तत्वं चानुक्तनिमित्तत्वस्यैव भेद इति पृथङ्नोक्तं। यथा।

"स एकस्त्रीणि जयति जगन्ति कुसुमायुधः।
हरतापि तनुं यस्य शम्भुना न हृतं बलं"॥

अथ तन्नुहरणेऽपि तन्नाहरणे निमित्तमचिन्त्यं। इह च कार्य्याभावः कार्य्यविरुद्धसद्भावमुखेनापि निबध्यते। विभावनायामपि कारणाभावः कारणविरुद्धसद्भावमुखेनापि। एवञ्च "यः कौमारहरः स एव हि वर" इत्यादेरुत्कण्ठाकारणविरुद्धस्य निबन्धनाद् विभावना। "यः कौमारहर" इत्यादेः कारणस्य च कार्य्यविरुद्धाया उत्कण्ठाया निबन्धनाद्विशेषोक्तिः। एवञ्चात्र विभावनाविशेषोक्त्योः सङ्करः। शुद्धोदाहरणन्तु मृग्यं।

(७१८) जातिश्चतुर्भिर्जात्याद्यैर्गुणो गुणादिभिस्त्रिभिः।
क्रिया क्रियाद्रव्याभ्यां यद् द्रव्यं द्रव्येण वा मिथः॥
विरुद्धमिव भासेत विरोधोऽसौ दशाकृतिः।

क्रमेण यथा।

"तव विरहे मलयमरुद्दवानलः शशिरुचोऽपि सोष्माणः।
हृदयमलिरुतमपि भिन्ते नलिनीदलमपि निदाघरविरस्याः॥
सन्ततमुसलासङ्गाद्बहुतरगृहकर्म्मघटनया नृपते।
द्विजपत्नीनां कठिनाः सति भवति कराः सरोजसुकुमाराः॥
अजस्य गृह्णतो जन्म निरीहस्य हतद्विषः।
स्वपतो जागरूकस्य याथार्थ्यं वेद कस्तव॥
बल्लभोत्सङ्गसङ्गेन विना हरिणचक्षुषः।
राकाविभावरीजानिर्विषज्वालाकुलोऽभवत्॥
जयनयुगासेवनकं मानसवृत्त्यापि दुष्प्रापं।
रूपमिदं मदिराक्ष्या मदयति हृदयं दुनोति च मे"॥

"त्वद्वाजिराजीत्यादि" "वल्लभोत्सङ्गेत्यादि" श्लोके चतुर्थपादे "मध्यन्दिनदिनाधिप" इति पाठे द्रव्ययोर्विरोधः। अत्र "तव विरहे" इत्यादौ पवनादीनां बहुव्यक्तिवाचकत्वाज्जातिशब्दानां दावानलोष्णहृदयभेदनसूर्य्यैर्जातिगुणक्रियाद्रव्यरूपैरन्योन्यं विरोधो मुखत आभासते। विरहहेतुकत्वात् समाधानं। अत्र "सजस्येति" आदावजत्वादिगुणस्य ग्रहणादिक्रियया विरोधः। भगवतः प्रभावस्यातिशयित्वात्तु समाधानं। "त्वद्वाजीत्यादौ" "हरोऽपि शिरसा गङ्गां न धत्ते" इति विरोधः। "त्वद्वाजी" त्यादिकविप्रौढोक्त्या तु समाधानं। स्पष्टमन्यत्। विभावनायां कारणाभावेनोपनिबध्यमानत्वात् कार्य्यमेव बाध्यत्वेन प्रतीयते। विशेषोक्तौ च कार्य्याभावेन कारणमेव। इह त्वन्योन्यं द्वयोरपि बाध्यत्वमिति भेदः।

(७१९) कार्य्यकारणयोर्भिन्नदेशतायामसङ्गतिः।

यथा।

"सा बाला वयमप्रगल्भमनसः सा स्त्री वयं कातराः
सा पीनोन्नतिमत्पयोधरयुगं धत्ते सखेदा वयं।
साक्रान्ता जघनस्थलेन गुरुणा गन्तुं न शक्ता वयं
दोषैरन्यजनाश्रितैरपटवो जाताः स्म इत्यद्भुतं"॥

अस्यास्यापवादत्वादेकदेशस्थयोर्विरोधे विरोधालङ्कारः।

(७२०) गुणौ क्रिये वा यत्स्यातां विरुद्धे हेतुकार्य्ययोः।
यद्वाऽऽरब्धस्य वैफल्यमनर्थस्य च सम्भवः॥

विरूपयोः सङ्घटना या च तद्विषमं मतं।

क्रमेण यथा।

"सद्यः करस्पर्शमवाप्य चित्रं
रणे रणे यस्य कृपाणलेखा।
तमालनीला शरदिन्दुपाण्डु
यशस्त्रिलोकाभरणं प्रसूते"॥

अत्र कारणरूपासिलतायाः "कारणगुणा हि कार्य्यगुण-मारभन्ते" इति स्थितेर्विरुद्धा शुक्लयशस उत्पत्तिः।

"आनन्दममन्दमिमं कुवलयदललोचने ददासि त्वं।
विरहस्त्वयैव जनितस्तापयतितरां शरीरं मे"॥

अत्रानन्दजनकस्त्रीरूपकारणात्तापजनकविरहोत्पत्तिः।

"अयं रत्नाकरोऽम्भोधिरित्यसेवि धनाशया।
धनं दूरेऽस्तु वदनमपूरि क्षारवारिभिः"॥

अत्र केवलं काङ्क्षितधनलाभो नाभूत् प्रत्युत क्षारवारिभि-र्वदनपूरणं।

"क्व वनं तरुवल्कभूषणं नृपलक्ष्मीः क्व महेन्द्रवन्दिता।
नियतं प्रतिकूलवर्त्तिनो वत धातुश्चरितं सुदुःसहं"॥

अत्र वनराजश्रियोर्विरूपयोः सङ्घटना। इदं मम। यथा वा।

"विपुलेन सागरशयस्य कुक्षिणा
भुवनानि यस्य पपिरे युगक्षये।
मदविभ्रमासकलया पपे पुनः
स पुरस्त्रियैकतमयैकया दृशा॥"

(७२१) समं स्यादानुरूप्येण श्लाघा योग्यस्य वस्तुनः।

यथा।

"शशिनमुपगतेयं कौमुदी मेघमुक्तं
जलनिधिमनुरूपं जह्नुकन्याऽवतीर्णा।
इति समगुणयोगप्रीतयस्तत्र पौराः
श्रवणकटु नृपाणामेकवाक्यं विवव्रुः"॥

(७२२) विचित्रं तद्विरुद्धस्य कृतिरिष्टफलाय चेत्॥

यथा।

"प्रणमत्युन्नतिहेतोर्जीवनहेतोर्विमुञ्चति प्राणान्।
दुःखीयति सुखहेतोः को मूढः सेवकादन्यः"॥

(७२३) आश्रयाश्रयिणोरेकस्याधिक्येऽधिकमुच्यते।

आश्रयाधिक्ये यथा।

"किमधिकमस्य ब्रूमो महिमानं वारिधेर्हरिर्यत्र।
अज्ञात एव शेते कुक्षौ निक्षिप्य भुवनानि"॥

आश्रिताधिक्ये यथा।

"युगान्तकालप्रतिसंहृतात्मनो
जगन्ति यस्यां सविकाशमासत।
तनौ ममुस्तत्र न कैटभद्विष-
स्तपोधनाभ्यागमसम्भृता मुदः"॥

(७२४) अन्योन्यमुभयोरेकक्रियायाः करणं मिथः।

यथा।

"यथा या शोभते तन्वी तया त्वमपि शोभसे।
रजन्या शोभते चन्द्रश्चन्द्रेणापि निशीथिनी"॥

(७२५) यदाधेयमनाधारमेकञ्चानेकगोचरं।
किञ्चित् प्रकुर्व्वतः कार्य्यमशक्यस्येतरस्य वा॥
कार्य्यस्य करणं दैवाद्विशेषस्त्रिविधस्ततः।

क्रमेण यथा।

"दिवमप्युपयातानामाकल्पमनल्पगुणगणा येषां।
रमयन्ति जगन्ति गिरः कथमपि कवयो न ते वन्द्याः॥
कानने सरिदुद्देशे गिरीणामपि कन्दरे।
पश्यन्त्यन्तकसङ्काशं त्वामेकं रिपवः पुरः॥
गृहिणी सचिवः सखी मिथः प्रियशिष्या ललिते कलाविधौ।
करुणाविमुखेन मृत्युना हरता त्वां वद किं न मे हृतं"॥

इति रघौ।

(७२६) व्याघातः स तु केनापि वस्तु येन यथा कृतं।
तेनैव चेदुपायेन कुरुतेऽन्यस्तदन्यथा॥

यथा। "दृशा दग्धं मनसिजमित्यादि"।

(७२७) सौकर्य्येण च कार्य्यस्य विरुद्धं क्रियते यदि।

व्याघात इत्येव।

"इहैव त्वं तिष्ठ द्रुतमहमहोभिः कतिपयैः
समागन्ता कान्ते मृदुरसि न चायाससहना।

मृदुत्वं मे हेतुः सुभग भवता गन्तुमधिकं
न मृद्वी सोढा यद्विरहकृतमायासमसमं" ॥

अत्र नायकेन नायिकाया मृदुत्वं सहगमनाभावहेतुत्वे-नोक्तं। नायिकया च प्रत्युत सहगमने ततोऽपि सौकर्य्येण हेतु-तयोपन्यस्तं।

(७२८) परं परं प्रति यदा पूर्व्वपूर्व्वस्य हेतुता ।
तदा कारणमाला स्यात्

यथा ।

"श्रुतं कृतधियां सङ्गाज्जायते विनयः श्रुतात् ।
लोकानुरागो विनयान्न किं लोकानुरागतः" ॥

(७२९) तन्मालादीपकं पुनः ।
धर्म्मिणामेकधर्म्मेण सम्बन्धो यद्यथोत्तरं ॥

यथा ।

"त्वयि सङ्गरसम्प्राप्ते धनुषाऽऽसादिताः शराः ।
शरैररिशिरस्तेन भूस्तया त्वं त्वया यशः" ॥

अत्रासादनक्रिया धर्म्मः ।

(७३०) पूर्व्वं पूर्व्वं प्रति विशेषणत्वेन परं परं ।
स्थाप्यतेऽपोह्यते वा चेत्स्यात्तदेकावली द्विधा ॥

क्रमेणोदाहरणं ।

"सरो विकसिताम्भोजमम्भोजं भृङ्गसङ्गतं ।
भृङ्गा यत्र ससङ्गीताः सङ्गीतं सस्मरोदयं ॥"

न तज्जलं यन्न सुचारुपङ्कजं
न पङ्कजं तद्यदलीनषट्पदं।
न षट्पदोऽसौ न जुगुञ्ज यः कलं
न गुञ्जितं तन्न जहार यन्मनः" ॥

क्वचिद्विशेष्यमपि यथोत्तरं विशेषणतया स्थापितमपोहितञ्च दृश्यते। यथा।

"वाप्यो भवन्ति विमलाः स्फुटन्ति कमलानि वापीषु।
कमलेषु पतन्त्यलयः करोति सङ्गीतमलिषु पदं" ॥

एवमपोहनेऽपि।

(७४१) उत्तरोत्तरमुत्कर्षो वस्तुनः सार उच्यते।

यथा।

"राज्ये सारं वसुधा वसुधायामपि पुरं पुरे सौधं।
सौधे तल्पं तल्पे वराङ्गनानङ्गसर्व्वस्वं" ॥

(७४२) यथासङ्ख्यमनूद्देश उद्दिष्टानां क्रमेण यत्।

यथा।

"उन्मीलन्ति नखैर्लुनीहि वहति क्षौमाञ्चलेनावृणु
क्रीडाकाननमाविशन्ति वलयक्वाणैः समुत्रासय।
इत्थं वञ्जुल दक्षिणानिल कुहूकण्ठेषु साङ्केतिक-
व्याहाराः सुभग त्वदीयविरहे तस्याः सखीनां मिथः ॥"

(७४३) क्वचिदेकमनेकस्मिन्ननेकं चैकगं क्रमात्।
भवति क्रियते वा चेत्तदा पर्य्याय इष्यते ॥

क्रमेण यथा।

"स्थिताः क्षणं पक्ष्मसु ताडिताधराः
पयोधरोत्सेधनिपातचूर्णिताः।
वलीषु तस्याः स्खलिताः प्रपेदिरे
क्रमेण नाभिं प्रथमोदबिन्दवः॥
विचरन्ति विलासिन्यो यत्र श्रोणिभरालसाः।
वृककाकशिवास्तत्र धावन्त्यरिपुरे तव॥
विस्रष्टरागादधरान्निवर्तितः
स्तनाङ्गरागादरुणाच्च कन्दुकात्।
कुशाङ्कुरादानपरिक्षताङ्गुलिः
कृतोऽक्षसूत्रप्रणयी तया करः॥
ययोरारोपितस्तारो हारस्तेऽरिवधूजनैः।
निधीयन्ते तयोः स्थूलाः स्तनयोरश्रुबिन्दवः॥"

एषु च क्वचिदाधारः संहतरूपोऽसंहतरूपश्च क्वचिदाधेयमपि। यथा "स्थिताः क्षणमित्यत्र" उदबिन्दवः पक्ष्मादावसंहतरूप आधारे क्रमेणाभवन्। "विचरन्ति" इत्यत्राधेयभूता वृकादयः संहतरूपारिपुरे क्रमेणाभवन्। एवमन्यत्। अत्र चैकस्यानेकत्र क्रमेणैव वृत्तेर्विशेषालङ्काराद्भेदः। विनिमयाभावात् परिवृत्तेः।

(७३४) परिवृत्तिर्विनिमयः समन्यूनाधिकैर्भवेत्।

क्रमेणोदाहरणं।

"दृत्वा कटाक्षमेणाक्षी जग्राह हृदयं मम।
मया तु हृदयं दत्वा गृहीतो मदनज्वरः॥"

अत्र प्रथमेऽर्द्धे समेन द्वितीयेऽर्द्धे न्यूनेन।

"तस्य च प्रवयसो जटायुषः स्वर्गिणः किमिव शोच्यतेऽधुना।
येन जर्ज्जरकलेवरव्ययात् क्रीतमिन्दुकिरणोज्ज्वलं यशः॥"

अत्राधिक्येन।

(७४५) प्रश्नादप्रश्नतो वापि कथिताद्वस्तुनो भवेत्।
तादृगन्यव्यपोहश्चेच्छाब्द आर्थोऽथवा तदा॥
परिसंख्या

क्रमेणोदाहरणं।

"किं भूषणं सुदृढमत्र यशो न रत्नं
किं कार्य्यमार्य्यचरितं सुकृतं न दोषः।
किञ्चक्षुरप्रतिहतं धिषणा न नेत्रं
जानाति कस्त्वदपरः सदसद्विवेकं॥"

अत्र व्यवच्छेद्यं रत्नादि शाब्दं।

"किमाराध्यं सदा पुण्यं कश्च सेव्यः सदागमः।
को ध्येयो भगवान् विष्णुः किं काम्यं परमं पदं॥"

अत्र व्यवच्छेद्यं पापाद्यार्थं। अनयोः प्रश्नपूर्व्वकत्वं। अप्रश्नपूर्व्वकत्वे यथा।

"भक्तिर्भवे न विभवे व्यसनं शास्त्रे न युवतिकामास्त्रे।
चिन्ता यशसि न वपुषि प्रायः परिदृश्यते महतां॥"

"वसमार्त्तभयोपशान्तये विदुषां सम्मतये बहु श्रुतं।
वसु तस्य न केवलं विभोर्गुणवत्तापि परप्रयोजनं॥"

श्लेषमूलत्वे चास्य वैचित्र्यविशेषः। यथा।

"यस्मिंश्च राजनि जितजगति पालयति महीं चित्रकर्म्मसु वर्णसङ्कराश्चापेषु गुणच्छेदा इत्यादि।"

(७३६) उत्तरं प्रश्नस्योत्तरादुन्नयो यदि।
यश्चासकृदसंभाव्यं सत्यपि प्रश्न उत्तरं॥

यथा मम।

"वीक्षितुं न क्षमा श्वश्रूः स्वामी दूरतरं गतः।
अहमेकाकिनी बाला तवेह वसतिः कुतः॥"

अनेन पथिकस्य वसतियाचनं प्रतीयते।

"का विसमा देव्वगई किं लद्धुव्वं जणो गुणग्गाही।
किं सोक्खं सुकलत्तं किं दुग्गेज्झं खलो लोओ" *॥

अत्रान्यव्यपोहे तात्पर्य्याभावात् परिसंख्यातो भेदः। न चेदमनुमानं। साध्यसाधनयोर्द्वयोर्निर्द्देश एव तस्याङ्गीकारात्। न च काव्यलिङ्गं। उत्तरस्य प्रश्नं प्रत्यजनकत्वात्।

(७३७) दण्डापूपिकयान्यार्थागमोऽर्थापत्तिरिष्यते।

"मूषिकेण दण्डो भक्षित" इत्यनेन तत्सहचरितमपूपभक्षणमर्थादायातं भवतीति नियतसमानन्यायादर्थान्तरमापतती-

---

* का विसमेति। का विषमा दैवगतिः किं लब्धव्यं जनो गुणग्राही। किं सौख्यं सुकलत्रं किं दुर्ग्राह्यं खलो लोक इति॥ सं०॥टी०॥

त्येव न्यायो दण्डापूपिका। अत्र च क्वचित् प्राकरणिकादर्थाद-प्राकरणिकस्यार्थस्यापतनं क्वचिदप्राकरणिकार्थात् प्राकरणिकार्थस्येति द्वौ भेदौ। क्रमेणोदाहरणं।

"हारोऽयं हरिणाक्षीणां लुठति स्तनमण्डले
मुक्तानामप्यवस्थेयं के वयं स्मरकिङ्कराः॥
विललाप सवाष्पगद्गदं सहजामप्यवहाय धीरतां।
अतितप्तमयोऽपि मार्द्दवं भजते कैव कथा शरीरिणां"॥

अत्र च समानन्यायस्य श्लेषमूलत्वे वैचित्र्यविशेषो यथोदाहृते "हारोऽयमित्यादौ"। न चेदमनुमानं। समानन्यायस्य सम्बन्धरूपत्वाभावात्।

(७४८) विकल्पस्तुल्यबलयोर्विरोधश्चातुरीयुतः।

यथा। "नमयन्तां शिरांसि धनूंषि वा कर्णपूरीक्रियन्तामाज्ञा मौर्व्वी वा"। अत्र शिरसां धनुषाञ्च नमनयोः सन्धिविग्रहोपलक्षणत्वात् सन्धिविग्रहयोश्चैकदा कर्त्तव्यतासम्भवाद्विरोधः। स चैकपक्षाश्रयणपर्य्यवसानः। तुल्यबलत्वाच्च धनुःशिरोनमनयोरपि स्पर्द्धया सम्भाव्यमानत्वात्। चातुर्य्यं चात्रौपम्यगर्भत्वेन। एवं "कर्णपूरीक्रियन्तामिति" अत्रापि। एवं।

"युष्माकं कुरुतां भवार्त्तिशमनं नेत्रे तनुर्वा हरेः"।

अत्र श्लेषावष्टम्भेन चारुत्वं।

"दीयतामर्ज्जितं वित्तं देवाय ब्राह्मणाय वा"॥

इत्यत्र चातुर्य्याभावान्नायमलङ्कारः।

(७३९) समुच्चयोऽयमेकस्मिन् सति कार्य्यस्य साधके।
खले कपोतिकान्यायात्तत्करः स्यात् परोऽपि चेत्॥
गुणौ क्रिये वा युगपत् स्यातां यद्वा गुणक्रिये।

यथा मम।

"हंहो धीर समीर हन्त जननं ते चन्दनक्ष्माभृतो
दाक्षिण्यं जगदुत्तरं परिचयो गोदावरीवारिभिः।
प्रत्यङ्गं दहसीह मे त्वमपि चेदुद्दामदावाग्निव-
न्मत्तोऽयं मलिनात्मको वनचरः किं वक्ष्यते कोकिलः"॥

अत्र दाहे एकस्मिंश्चन्दनक्ष्माभृज्जन्मरूपे कारणे सत्यपि दाक्षिण्यादीनां हेत्वन्तराणामुपादानं। अत्र सर्व्वेषामपि हेतूनां शोभनत्वात् सद्योगः। अत्रैव चतुर्थपादे मत्तादीनामशोभनानां योगादसद्योगः। सदसद्योगो यथा।

"शशी दिवसधूसरो गलितयौवना कामिनी
सरो विगतवारिजं मुखमनक्षरं स्वाकृतेः।
प्रभुर्धनपरायणः सततदुर्गतः सज्जनो
नृपाङ्गनगतः खलो मनसि सप्त शल्यानि मे"॥

इह केचिदाहुः "शशिप्रभृतीनां शोभनत्वं खलस्याशोभनत्वमपि सदसद्योग इति"। अन्येतु "शशिप्रभृतीनां स्वतः शोभनत्वं धूसरादीनां त्वशोभनत्वमिति" सदसद्योगः, अत्र हि शशिप्रभृतिषु धूसरादेरत्यन्तमनुचितत्वमिति विच्छित्तिविशेषस्यैव चमत्कारविधायित्वं, "मनसि सप्त शल्यानीति" सप्तानामपि शल्यत्वेनोपसंहारस्य, "नृपाङ्गनगतः खल" इति प्रत्युत क्रमभे-

दाह्युष्टत्वमावहति, सर्व्वच विशेष्यस्यैव शोभनत्वेन प्रक्रमादिति। इह च खले कपोतवत् सर्व्वेषां कारणानां साहित्येनावतारः। समाध्यलङ्कारे त्वेककार्य्यम्प्रति साधके समग्रेऽप्यन्यस्य काकतालीयन्यायेनापतनमिति भेदः।

"अरुणे च तरुणि नयने तव मलिनञ्च प्रियस्य मुखं।
मुखमानतञ्च सखि ते ज्वलितश्चास्यान्तरे स्मरज्वलनः" ॥

अत्राद्येऽर्द्धे गुणयोर्यौगपद्यं द्वितीये क्रिययोः। उभयोर्यौगपद्ये यथा।

"कलुषञ्च तवाहितेष्वकस्मात् सितपङ्केरुहसोदरश्रि चक्षुः।
पतितञ्च महीपतीन्द्र तेषां वपुषि प्रस्फुटमापदां कटाक्षैः ॥"

"धुनोति चासिं तनुते च कीर्त्तिं"

इत्यादावेकाधिकरणेऽप्येष दृश्यते। न चात्र दीपकं। एते हि गुणक्रियायौगपद्ये समुच्चयप्रकारा नियमेन कार्य्यकारणकालनियमविपर्य्ययरूपातिशयोक्तिमूलाः। दीपकस्य चातिशयोक्तिमूलत्वाभावः।

(७४०) समाधिः सुकरे कार्य्ये दैवाद्वस्त्वन्तरागमात्।

यथा।

"मानमस्या निराकर्त्तुं पादयोर्मे पतिष्यतः।
उपकाराय दिष्ट्येदमुदीर्णं घनगर्ज्जितं ॥
प्रत्यनीकमशक्तेन प्रतीकारे रिपोर्यदि।
तदीयस्य तिरस्कारस्तस्यैवोत्कर्षसाधकः" ॥

तस्यैवेति रिपोरेव। यथा मम।

"मध्येन तनुमध्या मे मध्यं जितवतीत्ययं।
इभकुम्भौ भिनत्त्यस्याः कुचकुम्भनिभौ हरिः" ॥

(७४१) प्रसिद्धस्योपमानस्योपमेयत्वप्रकल्पनं।
निष्फलत्वाभिधानं वा प्रतीपमिति कथ्यते ॥

क्रमेण यथा।

"यस्त्वन्नेत्रसमानकान्तिसलिले मग्नं तदिन्दीवरमित्यादि।"

"तद्वक्त्रं यदि मुद्रिता शशिकथा हा हेम सा चेद्द्युति-
स्तच्चक्षुर्यदि हारितं कुवलयैस्तच्चेत् स्मितं का सुधा।
धिक्कन्दर्पधनुर्भ्रुवौ यदि च ते किंवा बहु ब्रूमहे
यत् सत्यं पुनरुक्तवस्तुविमुखः सर्गक्रमो वेधसः" ॥

अत्र वक्त्रादिभिरेव चन्द्रादीनां शोभातिवहनात्तेषां नि-
ष्फलत्वं।

(७४२) उक्त्वा चात्यन्तमुत्कर्षमत्युत्कृष्टस्य वस्तुनः।
कल्पितेऽप्युपमानत्वे प्रतीपं केचिदूचिरे ॥

यथा।

"अहमेव गुरुः सुदारुणाना-
मिति हालाहल तात मास्म दृप्यः।
ननु सन्ति भवादृशानि भूयो
भुवनेऽस्मिन् वचनानि दुर्ज्जनानां" ॥

अत्र प्रथमपादे उत्कर्षातिशय उक्तः। तदनुक्तौ तु नाय-
मलङ्कारः। यथा। "ब्रह्मेव ब्राह्मणो वदतीत्यादि"।

(७४४) मीलितं वस्तुनो गुप्तिः केनचित् तुल्यलक्ष्मणा।

अत्र समानलक्षणं वस्तु क्वचित् सहजं क्वचिदागन्तुकं। क्रमेण यथा।

"लक्ष्मीवक्षोजकस्तूरीलक्ष्म वक्षःस्थले हरेः।
ग्रस्तं नालक्षि भारत्या भासा नीलोत्पलाभया"॥

तत्र भगवतः श्यामा कान्तिः सहजा।

"सद्यैव शोणोपलकुण्डलस्य यस्यां मयूखैररुणीकृतानि।
कोपोपरक्तान्यपि कामिनीनां मुखानि शङ्कां विदधुर्न यूनां"॥

अत्र माणिक्यकुण्डलस्यारुणिमा मुखे आगन्तुकः।

(७४५) सामान्यं प्रकृतस्यान्यतादात्म्यं सदृशैर्गुणैः।

यथा।

"मल्लिकाचितधम्मिल्लाश्चारुचन्दनचर्च्चिताः।
अविभाव्याः सुखं यान्ति चन्द्रिकास्वभिसारिकाः"॥

मीलिते उत्कृष्टगुणेन निकृष्टगुणस्य तिरोधानं। इह उभयोस्तुल्यगुणतया भेदाग्रहः।

(७४६) तद्गुणः स्वगुणत्यागादत्युत्कृष्टगुणग्रहः।

यथा।

"जगाद वदनच्छद्मपद्मपर्य्यन्तपातिनः।
नयन्मधुलिहः श्वैत्यमुदंशुदशनांशुभिः"॥

मीलिते प्रकृतस्य वस्तुनो वस्त्वन्तरेणाच्छादनं। इह तु वस्त्वन्तरगुणेनाक्रान्तता प्रतीयते इति।

(७४७) तद्रूपाननुहारस्तु हेतौ सत्यप्यतद्गुणः।

यथा।

"हन्त सान्द्रेण रागेण भृतेऽपि हृदये मम।
गुणगौरनिषण्णोऽपि कथं नाम न रज्यसि॥

यथा वा।

गाङ्गमम्बु सितमम्बु यामुनं कज्जलाभमभयत्र मज्जतः।
राजहंस तव सैव शुभ्रता चीयते न च न चापचीयते"॥

पूर्व्वत्रातिरक्तहृदयसम्पर्कात् प्राप्तवदपि गुणगौरशब्दवाच्यस्य नायकस्य रक्तत्वं न निष्पन्नं। उत्तरत्राप्रस्तुतप्रशंसायां विद्यमानायामपि गङ्गायमुनापेक्षया प्रकृतस्य हंसस्य गङ्गायमुनयोः सम्पर्केऽपि न तद्रूपता। अत्र च गुणाग्रहणरूपविच्छित्तिविशेषाश्रयादिशेषोक्तेर्भेदः। वर्णान्तरोत्पत्त्यभावाच्च विषमात्।

(७४८) संलक्षितस्तु सूक्ष्मोऽर्थ आकारेणेङ्गितेन वा।
कयापि सूच्यते भङ्ग्या यत्र सूक्ष्मं तदुच्यते॥

सूक्ष्मः स्थूलमतिभिरसंलक्ष्यः। अत्राकारेण यथा।

"वक्त्रस्यन्दिस्वेदविन्दुप्रबन्धैर्दृष्ट्वा भिन्नं कुङ्कुमं कापि कण्ठे।
पुंस्त्वं तन्व्या व्यञ्जयन्ती वयस्या स्मित्वा पाणौ खड्गलेखां लिलेख"॥

अत्र कयाचित् कुङ्कुमभेदेन संलक्षितं कस्याश्चित् पुरुषायितं पाणौ पुरुषचिह्नखड्गलेखालिखनेन सूचितं। इङ्गितेन यथा।

"सङ्केतकालमनसं विटं ज्ञात्वा विदग्धया।
हसन्नेत्रार्पिताकूतं लीलापद्मं निमीलितं"॥

अत्र विटस्य भ्रूक्षेपादिना लक्षितः सङ्केतकालाभिप्रायो रजनीकालभाविना पद्मनिमीलनेन प्रकाशितः।

(७४९) व्याजोक्तिर्गोपनं व्याजादुद्भिन्नस्यापि वस्तुनः।

यथा।

"शैलेन्द्रप्रतिपाद्यमानगिरिजाहस्तोपगूढोल्लस-
द्रोमाञ्चातिविसंष्ठुलाखिलविधिव्यासङ्गभङ्गाकुलः।
आः शैत्यं तुहिनाचलस्य करयोरित्यूचिवान् सस्मितं
शैलान्तःपुरमातृमण्डलगणैर्दृष्टोऽवताद्वः शिवः"॥

नेयं प्रथमापह्नुतिः। अपह्नवकारिणो विषयस्यानभिधानात्।
द्वितीयापह्नुतेर्भेदस्तु तत्प्रस्तावे दर्शितः।

(७५०) स्वभावोक्तिर्दुरूहार्थस्वक्रियारूपवर्णनं।

दुरूहयोः कविमात्रवेद्ययोरर्थस्य डिम्भादेः स्वयोस्तदेकाश्रययोश्चेष्टारूपयोः। यथा मम।

"लाङ्गूलेनाभिहत्य क्षितितलमसकृद्दारयन्नग्रपद्भ्या-
मात्मन्येवावलीय द्रुतमथ गगनं प्रोत्पतन् विक्रमेण।
स्फूर्जद्धुङ्कारघोषः प्रतिदिशमखिलान् द्रावयन्नेष जन्तून्
कोपाविष्टः प्रविष्टः प्रतिवनमरुणोच्छूनचक्षुस्तरक्षुः"॥

(७५१) अद्भुतस्य पदार्थस्य भूतस्याथ भविष्यतः।
यत्प्रत्यक्षायमाणत्वं तद्भाविकमुदाहृतं॥

यथा।

"मुनिर्जयति योगीन्द्रो महात्मा कुम्भसम्भवः।
येनैकचुलुके दृष्टौ दिव्यौ तौ मत्स्यकच्छपौ"।

यथा वा।

"आसीदञ्जनमत्रेति पश्यामि तव लोचने।
भाविभूषणसम्भारां साक्षात्कुर्वे तवाकृतिं"।

न चायं प्रसादाख्यो गुणः। भूतभाविनोः प्रत्यक्षायमाणत्वे तस्याहेतुत्वात्। न चाद्भुतो रसः। विस्मयं प्रत्यस्य हेतुत्वात्। न चातिशयोक्तिरलङ्कारः। अध्यवसायाभावात्। न च भ्रान्तिमान्। भूतभाविनोर्भूतभावितयैव प्रकाशनात्। न च स्वभावोक्तिः। तस्य लौकिकवस्तुगतसूक्ष्मधर्मस्वभावस्यैव यथावद्वर्णनं स्वरूपं, अस्य तु वस्तुनः प्रत्यक्षायमाणत्वरूपो विच्छित्तिविशेषोऽस्तीति। यदि पुनर्वस्तुनः कश्चित् स्वभावोऽद्भुतत्वस्या विच्छित्तेः सम्भवस्तदोभयोः सङ्करः॥

"अनातपत्रोऽप्ययमत्र लक्ष्यते सितातपत्रैरिव सर्व्वतो वृतः।
अचामरोऽप्येष सदैव वीज्यते विलासबालव्यजनेन कोऽप्ययं" ॥

अत्र प्रत्यक्षायमाणस्यैव वर्णनाश्रयमलङ्कारः। वर्णनावशेन प्रत्यक्षायमाणत्वस्यास्य स्वरूपत्वात्। यत् पुनः प्रत्यक्षायमाणस्यापि वर्णने प्रत्यक्षायमाणत्वं तत्रायमलङ्कारो भवितुं युक्तः। यथोदाहृते "आसीदञ्जनमित्यादौ"।

(७५२) लोकातिशयसम्पत्तिवर्णनोदात्तमुच्यते।
यद्वापि प्रस्तुतस्याङ्गं महतां चरितं भवेत्॥

क्रमेणोदाहरणं।

"अधःकृताम्भोधरमण्डलानां यस्यां शशाङ्कोपलकुट्टिमानां।
ज्योत्स्नानिपातात् क्षरतां पयोभिः केलीवनं वृद्धिमुरीकरोति॥
नाभिप्रभिन्नाम्बुरुहासनेन संस्तूयमानः प्रथमेन धात्रा।
अमुं युगान्तोचितयोगनिद्रः संहृत्य लोकान् पुरुषोऽधिशेते"॥

(७५३) रसभावौ तदाभासौ भावस्य प्रशमस्तथा।
गुणीभूतत्वमायान्ति यदालङ्कृतयस्तदा॥
रसवत्प्रेय ऊर्ज्जस्वि समाहितमिति क्रमात्।

तदाभासौ रसाभासो भावाभासश्च। तत्र रसयोगाद्रसवदलङ्कारो यथा। "अयं स रसनोत्कर्षीत्यादि"। अत्र शृङ्गारः करुणस्याङ्गं। एवमन्यत्रापि। प्रकृष्टप्रियत्वात् प्रेयः। यथा मम।

"आमीलितालसविवर्त्तिततारकाक्षीं
मत्कण्ठबन्धनदरश्लथबाहुवल्लीं।
प्रस्वेदवारिकणिकाचितगण्डबिम्बां
संस्मृत्य तामनिशमेति न शान्तिमन्तः"॥

अत्र सम्भोगशृङ्गारः स्मरणाख्यभावस्याङ्गं। स च विप्रलम्भस्य। ऊर्ज्जो बलं। अनौचित्यप्रवृत्तौ तदत्रास्तीत्यूर्ज्जस्वि। यथा।

"वनेऽखिलकलासक्ताः परिहृत्य निजस्त्रियः।
त्वद्वैरिवनितावृन्दे पुलिन्दाः कुर्व्वते रतिं"॥

अत्र शृङ्गाराभासो राजविषयरतिभावस्याङ्गं। एवं भावाभासोऽपि। समाहितं परीहारः। यथा।

"अविरलकरवालकम्पनैर्भ्रुकुटीतर्ज्जनगर्ज्जनैर्मुहुः।
ददृशे तव वैरिणां मदः स गतः क्वापि तवेक्षणेक्षणात्"॥

अत्र मदाख्यभावस्य प्रशमो राजविषयरतिभावस्याङ्गं।

(७५४) भावस्य चोदये सन्धौ मिश्रत्वे च तदाख्यकाः।

तदाख्यका भावोदयभावसन्धिभावशबलनामानोऽलङ्काराः। क्रमेणोदाहरणं।

"मधुपानप्रवृत्तास्ते सुहृद्भिः सह वैरिणः ।
श्रुत्वा कुतोऽपि त्वन्नाम लेभिरे विषमां दशां" ॥

अत्र त्रासाख्यो राजविषयरतिभावस्याङ्गं ।

"अन्यान्तरीणरमणस्याङ्कमङ्कमनुत्सुका ।
सलज्जा चान्तिके सख्याः पातु नः पार्व्वती सदा" ॥

अत्रौत्सुक्यलज्जयोस्तु सन्धिर्देवताविषयरतिभावस्याङ्गं ।

"पश्येत् कश्चिच्चल चपल रे का त्वराहं कुमारी
हस्तालम्बं वितर हह हा व्युत्क्रमः कासि यासि ।
इत्थं पृथ्वीपरिवृढभवद्विद्विषोऽरण्यवृत्तेः
कन्या कश्चित्फलकिसलयान्याददानाभिधत्ते" ॥

अत्र शङ्कासूयाधृतिस्मृतिश्रमदैन्यविबोधौत्सुक्यानां शबलता राजविषयरतिभावस्याङ्गं । इह केचिदाहुः "वाच्यवाचकरूपालङ्करणमुखेन रसाद्युपकारका एवालङ्काराः । रसादयस्तु वाच्यवाचकाभ्यामुपकार्य्या एवेति न तेषामलङ्कारता भवितुं युक्तेति" अन्ये तु "रसाद्युपकारमात्रेणेहालङ्कृतिव्यपदेशो भाक्तश्चिरन्तनप्रसिद्ध्याङ्गीकार्य्य एवेति" अपरे च "रसाद्युपकारमात्रेणालङ्कारत्वं मुख्यतो रूपकादौ वाच्याद्युपधानं अजागलस्तनन्यायेनेति"।"अभियुक्तास्तु व्यञ्जकवाच्यवाचकाद्युपकृतैरङ्गभूतैर्रसादिभिरङ्गिनो रसादेर्वाच्यवाचकोपस्कारद्वारेणोपकुर्व्वद्भिरलङ्कृतिव्यपदेशो लभ्यते । समासोक्तौ तु नायकादिव्यवहारमात्रस्यैवालङ्कृतिता न त्वास्वादस्य, तस्योक्तरीति विरहादिति" मन्यन्ते । अत एव ध्वनिकारेणोक्तं ।

"प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गन्तु रसादयः ।
काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतिरिति" ॥

यदि च रसाद्युपकारमात्रेणालङ्कृतित्वं तदा वाचकादिष्वपि तथा प्रसज्येत । एवञ्च यच्च कैश्चिदुक्तं "रसादीनामङ्गित्वे रसवदाद्यलङ्कारः, अङ्गत्वे तु द्वितीयोदात्तालङ्कारः" तदपि परास्तं ।

(७५५) यद्येत एवालङ्काराः परस्परविमिश्रिताः ।
तदा पृथगलङ्कारौ संसृष्टिः सङ्करस्तथा ॥

यथा लौकिकालङ्काराणामपि परस्परमिश्रणे पृथक् चारुत्वेन पृथगलङ्कारत्वं तथोक्तरूपाणां काव्यालङ्काराणामपि परस्परमिश्रत्वे संसृष्टिसङ्कराख्यौ पृथगलङ्कारौ । तत्र ।

(७५६) मिथोऽनपेक्षयैतेषां स्थितिः संसृष्टिरुच्यते ।

एतेषां शब्दार्थालङ्काराणां । यथा ।

"देवः पायादपायान्नः स्मेरेन्दीवरलोचनः ।
संसारध्वान्तविध्वंसहंसः कंसनिसूदनः" ॥

अत्र "पायादपायादिति" यमकं । "संसारेति" आदौ चानुप्रास इति शब्दालङ्कारयोः संसृष्टिः । द्वितीये पादे उपमा द्वितीयार्द्धे च रूपकमित्यर्थालङ्कारयोः संसृष्टिः । उभयोः स्थितत्वाच्छब्दाऽर्थालङ्कारसंसृष्टिः ।

(७५७) अङ्गाङ्गित्वेऽलङ्कृतीनां तद्वदेकाश्रयस्थिता ।
सन्दिग्धत्वे च भवति सङ्करस्त्रिविधः पुनः ॥

अङ्गाङ्गिभावो यथा।

"आकृष्टवेगविगलद्भुजगेन्द्रभोग-
निर्मोकपट्टपरिवेष्टनयाम्बुराशेः।
मन्थव्यथाव्युपशमार्थमिवाशु यस्य
मन्दाकिनी चिरमवेष्टत पादमूले" ॥

अत्र निर्मोकपट्टापह्नवेन मन्दाकिन्या आरोप इत्यपह्नुतिः। सा च मन्दाकिन्या वस्तुतस्तेन यत्पादमूलवेष्टनं तच्चरणमूलवेष्टनमिति श्लेषमुत्थापयतीति तस्याङ्गं। श्लेषश्च पादमूलवेष्टनमेव। चरणमूलवेष्टनमित्यतिशयोक्तेरङ्गं, अतिशयोक्तिश्च "मन्थव्यथाव्युपशमार्थमिव" इत्युत्प्रेक्षाया अङ्गं। उत्प्रेक्षा चाम्बुराशिमन्दाकिन्योर्नायकनायिकाव्यवहारं गमयतीति समासोक्तेरङ्गं। यथा वा।

"अनुरागवती सन्ध्या दिवसस्तत्पुरःसरः।
अहो दैवगतिश्चित्रा तथापि न समागमः" ॥

अत्र समासोक्तिर्विशेषोक्तेरङ्गं। सन्देहसङ्करो यथा।

"इदमाभाति गगने भिन्दानं सन्ततं तमः।
अमन्दनयनानन्दकरं मण्डलमैन्दवं" ॥

अत्र किं मुखस्य चन्द्रतयाध्यवसानादतिशयोक्तिः, उत इदमिति मुखं निर्दिश्य चन्द्रत्वारोपाद्रूपकं, अथ वा इदमिति मुखस्य चन्द्रमण्डलस्य च द्वयोरपि प्रकृतयोरेकधर्माभिसम्बन्धात्तुल्ययोगिता, आहोस्विच्चन्द्रस्याप्रकृतत्वाद्दीपकं, किं वा विशेषणसाम्यादप्रस्तुतस्य मुखस्य गम्यत्वात् समासोक्तिः, यदा ऽप्रस्तुतचन्द्रवर्णनया प्रस्तुतस्य मुखस्यावगतिरित्यप्रस्तुतप्रशंसा,

यद्वा मन्मथोद्दीपनः कालः स्वकार्य्यभूतचन्द्रवर्णनामुखेन वर्णित इति पर्य्यायोक्तिरिति बहूनामलङ्काराणां सन्देहात् सन्देहसङ्करः, यथा वा मुखचन्द्रं पश्यामीत्यत्र किं मुखं चन्द्र इवेत्युपमा उत चन्द्र एवेति रूपकमिति सन्देहः, साधकबाधकयोर्द्वयोरेकतरस्य सद्भावेन पुनर्न सन्देहः। यथा "मुखचन्द्रं चुम्बति" इत्यत्र चुम्बनं मुखस्यानुकूलमित्युपमायाः साधकं। चन्द्रस्य तु प्रतिकूलमिति रूपकस्य बाधकं, "मुखचन्द्रः प्रकाशते" इत्यत्र प्रकाशाख्यो धर्म्मो रूपकस्य साधको मुखे उपचरितत्वेन सम्भवतीति नोपमाबाधकः।

"राजनारायणं लक्ष्मीस्त्वामालिङ्गति निर्भरं"।

अत्र योषित आलिङ्गनं नायकस्य सदृशेनोचितमिति लक्ष्म्या-लिङ्गनस्य राजन्यसम्भवादुपमाबाधकं नरायणे सम्भवाद्रूपकं।

"एवं वदनाम्बुजमेणाक्ष्या भाति चञ्चललोचनं"।

अत्र वदने लोचनस्य सम्भवादुपमायाः साधकता, अम्बुजे चासम्भवाद्रूपकस्य बाधकता। एवं "सुन्दरं वदनाम्बुजं" इत्यादौ साधारणधर्म्मप्रयोगे, "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" इति वचनादुपमासमासो न सम्भवतीति उपमाया बाधकः। एवञ्चात्र मयूरव्यंसकादित्वाद्रूपकसमास एव। एकाश्रयानुप्रवेशो यथा मम।

"कटाक्षेणापीषत् क्षणमपि निरीक्षेत यदि सा
तदानन्दः सान्द्रः स्फुरति पिहिताशेषविषयः।
सरोमाञ्चोदञ्चत्कुचकलशनिर्भिन्नवसनः

परीरम्भारम्भः क इव भविताम्भोरुहदृशः" ॥

अत्र "कटाक्षेणापीषत्क्षणमपि" इत्यत्र छेकानुप्रासस्य "शिरीषेण" इत्यत्र षकारमात्राश्रय वृत्त्यनुप्रासस्य चैकाश्रयेऽनुप्रवेशः। एवं चात्रैवानुप्रासार्थापत्त्यलङ्कारयोः। यथा वा। "संसारध्वान्तविध्वंस इति" अत्र रूपकानुप्रासयोः। यथा वा। "कुरवका रवकारणतां ययुरिति" अत्र रवकारणका इत्येकं वकारवकार इत्येकमिति यमकयोः। यथा वा।

"अहिणअपओअरसीएसु पहिअ सामाइएसु दिअहेसु।
सोहइ पसारिअगीआणं णच्चिअं मोरविन्दाणं" * ॥

अत्र "पहिअ सामाइएसु" इत्येकाश्रये पथिक श्यामायितेत्युपमा। पथिकसामाजिकेष्विति रूपकं प्रविष्टं ॥

श्रीचन्द्रशेखरमहाकविचन्द्रसूनु-
श्रीविश्वनाथकविराजकृतं प्रबन्धं।
साहित्यदर्पणममुं सुधियो विलोक्य
साहित्यतत्त्वमखिलं सुखमेव वित्त ॥

यावत्प्रसन्नेन्दुनिभाननाश्रीर्नारायणस्याङ्कमलङ्करोति।
तावन्मनः सम्मदयन् कवीनामेष प्रबन्धः प्रथितोऽस्तु लोके ॥

इति साहित्यदर्पणे दशमः परिच्छेदः समाप्तः ॥

समाप्तश्चेदं साहित्यदर्पणं ॥

ॐ तत्सत् ॥

---

* अभिनवपयोधरशीतेषु पथिक श्यामायितेषु दिवसेषु।
शोभते प्रसारितग्रीवाणां नृत्यं मयूरवृन्दानामिति ॥ सं० ॥ टी० ॥

# साहित्यदर्पणधृतग्रन्थनामानि।



B

## साहित्यदर्पणधृतग्रन्थकृन्नामानि ।

# साहित्यदर्पणसूचीपत्रम् ।

# साहित्यदर्पणसूचीपत्रम्।

# साहित्यदर्पणसूचीपत्रम् ।

# साहित्यदर्पणसूचीपत्रम्।

# साहित्यदर्पणसूचीपत्रम्।

# साहित्यदर्पणसूचीपत्रम्।



### प

## साहित्यदर्पणसूचीपत्रम् ।

# साहित्यदर्पणसूचीपत्रम्।

## साहित्यदर्पणसूचीपत्रम्।

## साहित्यदर्पणसूचीपत्रम्।

# साहित्यदर्पणसूचीपत्रम् ।

# साहित्यदर्पणसूचीपत्रम्।

# अथ साहित्यदर्पणशुद्धिपत्रं।

| पृष्ठा। | पङ्क्तिः। | अशुद्धं। | शुद्धं। |
|---|---|---|---|
| १ | १ | प्रारिप्सित | प्रारीप्सित |
| ६ | १९ | विरेधा | विरोधा |
| ८ | १८ | वाधा | बाधा |
| १० | १ | तत्र सङ्केतितार्थस्य बोधनादग्रिमाभिधा मं० ११ मूलपाठः ॥ | |
| १० | २१ | वाधे | बाधे |
| १३ | १ | प्रीतिकृत् | प्रतीतिकृत् |
| १३ | १५ | तात्कर्म्य | तात्कर्म्म |
| १४ | ३ | पूर्व्वाक्ताः | पूर्व्वोक्ताः |
| १६ | ७ | सर्व्वं सह्यो | सर्व्वं सह्ये |
| २७ | १६ | सम्वलितः | संवलितः |
| २८ | ४ | वाक्ष | बाक्ष |
| २९ | १६ | नापि भविष्यन्नित्यादि वर्त्तमानोऽपीत्यन्तं ५४ मं० मूलभुक्तपाठः ॥ | |
| ३६ | ८ | दष्कुल | दुष्कुल |
| ३६ | २२ | प्रद्धस्य | प्रब्धस्य |
| ४५ | १४ | अज्ञातापयमा | अज्ञातोपयमा |
| ५१ | ९ | न्तु | न्तू |
| ५२ | १५ | सव्वा | सर्व्वा |
| ५४ | १९ | गव्वस्य | गर्व्वस्य |
| ५६ | २ | अस्थान | अस्थाने |
| ९७ | २ | वध | बध |
| ९७ | १८ | वध | बध |
| ११३ | ५ | निस्तन्स | निस्तन्द्र |
| ११६ | १८ | चण्डिदास | चण्डीदास |
| ११८ | ५ | व्यपारा | व्यापारा |
| १२३ | १८ | प्राप्तिच्छा | प्राप्तीच्छा |
| १२४ | १५ | व्यञ्जन | व्यञ्जना |
| १२५ | २ | दःखु | दुःख |

| पृष्ठा। | पङ्क्तिः। | अशुद्धं। | शुद्धं। |
|---|---|---|---|
| १२६ | १६ | सयम | संयम |
| १२७ | ४ | वधो | वधो |
| १२६ | १६ | वध | वध |
| १३७ | १ | अदशनीया | अदर्शनीया |
| १४४ | ६ | अनुसूया | अनसूया |
| १४८ | १३ | कारणं | करणं |
| १४९ | १२ | अथा | यथा |
| १५० | ३ | परवरसो | परवसो |
| १६७ | २० | चिन्तफलके | चित्रफलके |
| १७४ | ११ | दिष्टच | दिष्टे च |
| १७४ | १७ | सालङ्कार | सालङ्कारे |
| १७८ | १५ | पुर्वं | पूर्वं |
| १८५ | ६ | मामिनी | मानिनी |
| २४७ | ६ | सर | रस |
| २५१ | ८ | श्रोतः | स्रोतः |
| २५१ | १२ | साकुमार्यं | सौकुमार्य्यं |
| २५९ | ७ | व्यञ्जनस्यैव | व्यञ्जनस्यैव |
| २६८ | १२ | चिन्नमच्यते | चिन्नमुच्यते |
| २७४ | ७ | नुपयात्त | नुपात्त |
| २८१ | ११ | मुख | मुखं |
| २८२ | १६ | कृताथा | कृतार्था |
| २८४ | १८ | दासोस्मि | दासोस्मि |
| २८५ | १६ | सखो | सखो |
| २९२ | ५ | मूर्च्छां | मुर्च्छां |
| २९२ | २० | मुष्मेन | युष्मेन |
| २९८ | २० | द्युत | द्युते |
| ३०१ | १३ | सम्बव | सम्भव |
| ३०४ | १४ | अत्रेवार्थे | अत्रैवार्थे |
| ३०५ | १ | व्यतिरक | व्यतिरेक |
| ३११ | २ | गणीभुत | गुणीभूत |
| ३४५ | १२ | नरायणे | नारायणे |

# साहित्यदर्पणस्य परिच्छेदतात्पर्य्यं।





